॥ श्रीः ॥

# श्रीमद्भागवतम्

श्रीविजयध्वजीयटीकासहितम्

## दशमस्कन्धस्योत्तरार्धम्

परमपूज्य श्रीपेजावरमठाधीशश्रीविश्वेशतीर्थश्रीपादानां
मार्गदर्शने सम्पादितम्

प्रकाशनम्
श्रीराघवेन्द्रस्वामिवृन्दावनसमितिः
बागलिङ्गम्पल्ली
हैदराबाद् - ५०० ०२७

॥ श्रीः ॥

# श्रीमद्भागवतम्

श्रीविजयध्वजीयटीकासहितम्

## दशमस्कन्धस्योत्तरार्धम्

परमपूज्य श्रीपेजावरमठाधीशश्रीविश्वेशतीर्थश्रीपादानां
मार्गदर्शने सम्पादितम्

प्रकाशनम्
श्रीराघवेन्द्रस्वामिवृन्दावनसमितिः
बागलिङ्गम्पल्ली
हैदराबाद् - ५०० ०२७

# SRIMADBHAGAVATAM (Skandha 10 - II part)
with the commentary of Sri Vijayadhwaja Tirtha

*Edited by :*
Scholars of Poornaprajna Vidyapeetha
under the guidance of
**H.H. Sri Vishvesha Teertha Swamiji**
of Sri Pejawar Mutt, Udupi.

*Published by* :
**Sri Raghavendra Swamy Brindavana Samithi**
Baghlingampalli, Hyderabad - 500 027

April 1998

Copies- 1000

Price -

Type setting :
**Poornaprajna Samshodhana Mandiram**
**P. P. Vidyapeetha**
Bangalore-28

Printed by
**Brindavan Printers Pvt. Ltd.**
Bangalore.

# श्रीपेजावरमठाधीशानामनुग्रहसन्देशः

सम्प्रति दशमस्कन्धस्योत्तरार्धात्मको भागः श्रीविजयध्वजतीर्थश्रीमच्चरणविरचितया पदरत्नावळ्या संवलितः प्रकाश्यत इति प्रमोदोऽस्माकं भवति । कंसवधानन्तरभाविनी श्रीकृष्णस्याश्वमेधयागसमाप्तिपर्यन्ता श्रीकृष्णकथाऽत्र निरूप्यते । अस्तिप्रास्ती इत्यनयोः पदयोः संशयविपर्ययपरत्वमप्यभिधाय जरासन्धश्रीकृष्णयुद्धस्य मिथ्याज्ञानतत्वज्ञान-सङ्घर्षात्मकत्वं वदद्भिः श्रीविजयध्वजतीर्थैः महाभारतस्याध्यात्मनिष्ठत्वं वदता-माचार्याणां पन्था अन्वसारि । अत्रैवोत्तरत्र श्रीकृष्णरुग्मिण्यादिकल्याणमहोत्सवः परममङ्गलोऽनुवर्णितः । जीवब्रह्मैक्यवादस्त्वेकादशे स्कन्धे विशेषतो निराकरिष्य-माणोऽपि पौण्ड्रकादिकथाप्रसङ्गे "त्वं वासुदेवो भगवानवतीर्णो जगत्पतिः । इति प्रस्तोभितो बालैर्मेने स्वात्मानमच्युतम्" इत्यादि वदता शुकेनैवात्रापि निराकृतः । ततः परं समस्तशास्त्रार्थसङ्ग्रहरूपा श्रुतिगीता चात्रैव भवति । अन्यत्र भागवततात्पर्ये कुत्रापि मूलश्लोकानपठद्भिराचार्यैः श्रुतिगीतायां सर्वेऽपि सप्तविंशतिश्लोकाः समग्रतया परिपठिता इत्येतदेवास्य महत्त्वमावेदयति । सरस्वतीतटे सत्रमाचरद्भिर्महर्षिभिः कृतविष्णुपारम्यनिर्णयादिकथान्तराण्यप्यत्र निरूपितानीति हेतो रुचिरतमं कल्याण-कृत्तमं चेदमिति नूनं जानीमः ।

अस्य ग्रन्थस्य संशोधनकर्मणि नियुक्ता अस्मच्छिष्या यावच्छक्ति संशोधितवन्तः । हैदराबादूनगरे बागलिङ्गम्पल्लीप्रदेशस्था श्रीराघवेन्द्रस्वामिवृन्दावनसेवासमितिः महान्त-मिमं कार्यभारमुदूह्य महतीं श्रीविजयध्वजतीर्थसेवां कुर्वती अस्मदादरपात्रं वर्तते । अचिरादेव पञ्चमस्कन्धमपि प्रकाश्य स्वसन्धां निस्तरिष्यतीति विश्वसिमः । अस्मदुपास्यचरणोऽजविठ्ठलः एभ्यः सर्वेभ्यः श्रेयो ददात्विति प्रार्थयामहे ।

बहुधान्यसंवत्सरस्य
वैशाखशुक्लतृतीया

**श्रीविश्वेशतीर्थश्रीमच्चरणाः**
श्रीपेजावराधोक्षजमठाधीशाः

# निवेदनम्

श्रीफलिमारुभण्डारकेरिमठाधीशानां श्रीविद्यामान्यतीर्थश्रीमच्चरणानां तथा श्रीपेजावरमठाधीशानां श्रीविश्वेशतीर्थश्रीमच्चरणानां मार्गदर्शने प्रवर्तमाना अस्माकमियं समितिः कार्यमिदमारभ्य द्वादशाधिकवत्सरा व्यतिक्रान्ताः । ग्रन्थस्य महत्तया विदुषां च कार्यगौरवेण चास्य ग्रन्थस्य प्रकाशनगतिर्विलम्बिता वर्तते । तथाप्युभयश्रीमच्चरणानामनुग्रहेण कार्यं समाप्तिं प्राप्नोतीति दृढो नो विश्वासः । अधुना पञ्चमस्कन्ध एक एवोर्वरितः । तस्य संशोधनमिदानीं प्रचलति । अचिरादेव सोऽपि प्रकाश्यत इत्यावेद्यते ।

अस्मिन् कार्ये दत्तसर्वसहकाराणां श्रीपेजावरमठाधीशानामन्तेवासिनां तथा वागर्थ मुद्रणालयस्य तथा वृन्दावनमुद्रणालयस्य स्वामिनां चास्मत्कार्तज्ञं निवेद्यते ।

बागलिङ्गम्पल्ली, हैदराबाद्

२९-४-९८

**के. सुब्राय अडिगः**

राघवेन्द्रस्वामिवृन्दावनसेवासमितिः

# दशमस्कन्धोत्तरार्धस्य विषयानुक्रमणिका

# ।। श्रीमद्भागवतम् ।।

## दशमस्कन्धस्योत्तरार्धः

### ।। अथ एकोनपञ्चाशत्तमोऽध्यायः ।।

श्रीशुक उवाच

**अस्तिप्रास्तीति कंसस्य महिष्यौ भरतर्षभ । हते भर्तरि दुःखार्ते ईयतुः स्वपितुर्गृहान् ।। १ ।।**

---

### ।। पदरत्नावली ।।

सच्छास्त्रस्यासच्छास्त्रेणेव कतिपयेष्वध्यायेषु श्रीकृष्णस्य जरासन्धेन साकं सङ्ग्रामं वर्णयति । तत्वनिर्णयेन सदसतां भक्तिद्वेषाभ्यामुद्बुद्धाभ्यां विहितनिर्वाणावाप्तिर्भवति । तत्र कथां प्रसञ्जयितुमाह अस्तीति । अस्तिप्रास्तिशब्दाभ्यामविद्याया द्वे रूपे संशयविपरीतज्ञाननामनी उच्येते । [1]तत्र संशये ज्ञानसत्तामात्रमस्ति विपरीते तदपि नास्तीत्यस्तिप्रास्ती । अस भुवि, भू सत्तायामिति धातोः । [2]यद्वा निश्चायकप्रमाणाभावेन निश्चयज्ञानाभावात् संशयविपरीतज्ञानवाचकावेतौ । असु निरसन इति धातोः[3] । कंसस्य महिष्यौ । ''कसि हिंसायाम्'' इति धातोः हिंसात्मनोऽधर्मस्य महिमबन्धकत्वेन सम्बन्धिन्यौ । ''षिञ् बन्धने'' इति धातोः । कृष्णनाम्ना धर्मेण भर्त्तरि स्वनिर्वाहके कंसनाम्न्यधर्मे हते विनाशिते स्वपितुः स्वपोषकस्य जरासन्धस्य, ''जॄ वयोहानौ'' इति धातोर्वयोहानिहेतुभूतशैवी शास्त्रसंहिता जरेत्युच्यते । तस्यां सन्धा मरणापत्तावपि न मुञ्चामीति प्रतिज्ञा यस्य स तथा तस्य गृहान् प्रमेयविशेषानीयतुः प्राप्य स्थिते । शब्दशक्तिविचक्षणैः पुरुषैरध्यात्मविषयतयाऽत्रार्थो ज्ञातव्य इति ग्रन्थबाहुल्यभीरुणा मया न प्रदर्श्यत इति ।। १ ।।

---

१. अस्पष्टमिदम् । यथार्थज्ञानसत्ता अंशतोऽस्तीत्यभिप्रायः स्यात् ।

२. यद्वेत्यादिवाक्यं गकोशे नास्ति ।

३. सत्तार्थकासधातुनिष्पन्नत्वपक्षे अस्तीति संशयात्मकज्ञानमुच्यते । संशयस्य कोटिद्वयमध्येऽन्यतरकोट्यवलम्बितया यथार्थज्ञानस्य सत्वात् । प्रास्तीति विपरीतज्ञानमुच्यते । प्रेत्युपसर्गस्य निवृत्त्यर्थकत्वस्य प्राचार्य इत्यादौ सत्त्वात् । तथाचान्यतरकोट्यवलम्बितयाऽपि निवृत्तं यथार्थज्ञानमिति प्रास्तीति विपरीतज्ञानमुच्यते । असु निरसन इत्यस्मान्निष्पन्नत्वे संशये यथार्थज्ञानस्यांशतो निरासादस्तीति संशय उच्यते । प्रकर्षेण सर्वात्मना निरासाद् विपरीतज्ञानं प्रास्तीत्युच्यत इत्यभिप्रायः स्यात् । अत्र महान्तः प्रमाणम् ।

पित्रे मगधराजाय जरासन्धाय दुःखिते। वेदयाञ्चक्रतुः सर्वमात्मवैरूप्यकारणम् ॥ २ ॥
स तदप्रियमाकर्ण्य शोकामर्षयुतो नृपः। अयादवीं महीं कर्तुं चक्रे परममुद्यमम् ॥ ३ ॥
अक्षौहिणीभिर्विंशद्भिस्तिसृभिश्चापि संवृतः। यदुराजधानीं मधुरां न्यरुणत् सर्वतोदिशम् ॥ ४ ॥
निरीक्ष्य तद्बलं कृष्ण उद्वेलमिव सागरम्। स्वपुरं तेन संरुद्धं स्वजनं च भयाकुलम् ॥ ५ ॥
चिन्तयामास भगवान् हरिः कारणमानुषः। तद्देशकालानुगुणं स्वावतारप्रयोजनम् ॥ ६ ॥
हनिष्यामि बलं ह्येतद् भुवि भारं समाहितम्। मागधेन समानीतं पश्यतां सर्वभूभृताम् ॥ ७ ॥
अक्षौहिणीभिः संख्यातं भटाश्वरथकुञ्जरैः। मागधोऽपि न हन्तव्यो भूयो कर्ता बलोद्यमम् ॥ ८ ॥
एतदर्थोऽवतारोऽयं भूभारहरणाय मे। संरक्षणाय साधूनां कृतोऽन्येषां वधाय च ॥ ९ ॥
अन्योऽपि धर्मरक्षायै देहः सम्भ्रियते मया। विरामायाप्यधर्मस्य काले प्रभवतः क्वचित् ॥ १० ॥
एवं ध्यायति गोविन्दे मगधाधिपतिर्बली। मधुरां सवनोद्यानां रुरोध बहुसैनिकः ॥ ११ ॥
कलिङ्गश्चेकितानश्च दन्तवक्त्रविदूरथौ। उल्मुखो वेणुदारी च शाल्वश्चैद्यश्च दुर्मतिः ॥ १२ ॥

---

आत्मवैरूप्यकारणम् आत्मवैधव्यनिमित्तम्। अन्यत्र प्रतिपादनासामर्थ्यम् ॥ २ ॥

नॄ नये इति धातोः, नॄन् नयान् शैवशास्त्रोक्तान् पिबतीति नृपः शास्त्रज्ञः। अकयः प्रतिसम्भूमेत्यभिधानाद् यो विष्णुः स एव आदो दुष्टदण्डकस्तं वान्ति शरणं गच्छन्तीति यादवाः वैष्णवाः तद्रहिताम् ॥ ३ ॥

एकस्थानमारभ्य षोडशस्थाने या संख्या साक्षौहिणीत्युच्यते।

अन्ये गजानां सप्तसहस्राणि द्विशती साशितिः (७२८०)। एवं रथानामपि संख्या। अश्वानामेकविंशतिसहस्री पञ्चशती विंशतिश्च (२१५२०)। पदातीनां पञ्चत्रिंशत्सहस्रं विंशतिश्च (३५०२०) इत्यक्षौहिणीसंख्यां ब्रुवते। एको गज एको रथस्त्रयोऽश्वाः पञ्च पदातय इति दश संख्या पत्तिर्नाम। त्रिगुणिता पत्तिः सेनामुखम्। खेना मुखमिति भिन्नं वा पदम्। सेनामुखात्त्रिगुणो गुल्मनामा। तत्त्रिगुणो गणनामा। गणत्रिगुणा वाहिनी नाम। वाहिनी त्रिगुणा पृतना। तत्त्रिगुणा चमूः। त्रिगुणिता चमूरनीकिनी दशानीकिनी अक्षौहिणीति केचित्। ''एकेभैकरथा त्र्यश्वा पत्तिः पञ्चपदातिका। पत्त्यङ्गैस्त्रिगुणैः सर्वैः क्रमादाख्या यथोत्तरम्। सेनामुखं गुल्मगणौ वाहिनी पृतना चमूः। अनीकिनी दशानीकिन्यक्षौहिणी'' इत्यमरः ॥ ४ ॥

अन्योऽपि वाराहादिरपि। स्वकाले प्रभवतः वर्धमानस्याधर्मस्य विरामाय विनाशाय।
॥ ५-१० ॥

पूर्वद्वारं समासाद्य रुरुधुर्मागधाज्ञया। विन्दानुविन्दावावन्त्यौ विराटो दरदस्तथा ॥ १३ ॥
एकलव्यो बाह्लिकश्च तथा पञ्चनदेश्वरः। रुरुधुर्दक्षिणद्वारं पौण्ड्रकश्च महाबलः ॥ १४ ॥
युधामन्युर्बृहत्क्षत्रः शल्यो भूरिश्रवास्तथा। उत्तमौजाश्च रुग्मी च द्रुमश्चैव सुदक्षिणः ॥ १५ ॥
एते नियुक्ता राजानो जरासन्धेन भारत। पश्चिमद्वारमासाद्य रुरुधुर्मधुरां पुरीम् ॥ १६ ॥
द्रुपदः शिशुपालश्च त्रिगर्तोऽथ जयद्रथः। शकुनिः सोमदत्तश्च कुणिन्दश्च महाबलः ॥ १७ ॥
जरासन्धेन सहिताः सर्वे मदबलान्विताः। उत्तरद्वारमासाद्य रुरुधुर्भरतर्षभ ॥ १८ ॥
ते निरुध्य चतुर्द्वाराण्युद्वेलाम्भोधिसन्निभाः। सिंहनादं च कुर्वन्तो दध्मुः शङ्खननेकशः ॥ १९ ॥
क्ष्वेलन्तो युद्धसन्नद्धा जघ्नुर्भेरीः सहस्रशः ॥ २० ॥

तद् वीरभूपालकदम्बजृम्भितं युगावसानार्णवघूर्णितोपमम्।
निशम्य कृष्णो न चचाल चेतसा सृगालघोषं मृगराडिवोद्धतः ॥ २१ ॥

एतस्मिन्नेव काले तु गगनात् सूर्यसन्निभौ। रथावुपस्थितौ सद्यः ससूतौ सपरिच्छदौ ॥ २२ ॥
आयुधानि च दिव्यानि पुराणानि यदृच्छया। चक्रं सुदर्शनं घोरं सहस्रारं मनोरमम् ॥ २३ ॥
गदा कौमोदकी गुर्वी नाम्ना कौमोदकी शुभा[१]। त्रिनतं कार्मुकश्रेष्ठं शार्ङ्गसञ्ज्ञं गुणान्वितम् ॥२४॥
तीक्ष्णधारः शितमुखः खड्गो नन्दकसञ्ज्ञितः। लघू शरचितौ[२] रम्यौ तूणौ चाक्षयसायकौ ॥२५॥
तुरगाः शैब्यसुग्रीवमेघपुष्पबलाहकाः। हलं च बलभद्रस्य मुसलं च दृढं गुरु ॥ २६ ॥

---

मधुरां योग्यानां परमानन्ददात्री वेदान्तविद्याम्। तस्याश्चतुर्द्वाराणि ऋगादीनि। पाखण्डशैववीरादयः[३] कलिङ्गादिशब्दिता बहवः सैनिकाः सेनारक्षकाः यस्य स तता। ''सेनारक्षाश्च सैनिकाः'' इत्यमरः ॥ ११-१९ ॥

क्ष्वेलन्तः अट्टहासं कुर्वन्तः ॥ २० ॥ कदम्बः समूहः ॥ २१ ॥ सपरिच्छदौ सोपस्करणौ ॥ २२ ॥ सहस्रमराणि दलानि यस्य तत् तथा ॥ २३ ॥

कौ मह्यां मोदको नारायणः तस्य विद्यमाना कौमोदकी। त्रिषु स्थानेषु कोटिद्वये मध्ये च नतं वक्रं विनतम्। ''कार्मुकं तु चतुर्हस्तम्'' इति यादवः। शार्ङ्गं शृङ्गविकृतम्। गुणेन ज्यया अन्वितं सहितम् ॥ २४-२७ ॥

---

१. कुमोदकस्य हरेरियं कौमोदकी नाम्ना च कौमोदकी - स.

२. शरैर्नालैः पुङ्खैरिति यावत्, चितौ सम्बद्धौ -स.

३. पाखण्डवीरशैवादय इत्यर्थः।

इत्येतान्यायुधान्याजौ गगनादागतानि सः । दृष्ट्वा राजन् हृषीकेशः सङ्कर्षणमथाब्रवीत् ॥ २७ ॥
पश्यार्य व्यसनं प्राप्तं यदूनां त्वावतां प्रभो । एष ते रथ आयातो दयितान्यायुधानि च ॥ २८ ॥
यानमास्थाय जह्येतद् व्यसनात् स्वान् समुद्धर । एतदर्थं हि नौ जन्म साधूनामीश सत्कृतम् ॥२९॥
त्रयोविंशत्यनीकानां भूमेर्भारमपाकुरु । एवं सम्मन्त्र्य दाशार्हौ दंशितौ रथिनां वरौ ॥ ३० ॥
दंशितैश्च यदुश्रेष्ठैर्बहुभिश्च समन्वितौ । निर्जग्मतुः पुरवराद् बलेनाल्पीयसा नृप ॥ ३१ ॥
निर्गत्य सदनात् कृष्णो वृष्णीनाहूय सर्वशः । आज्ञापयामास तूर्णं चतुर्द्वारस्य पालने ॥ ३२ ॥
वसुदेवं च निशठं कृतवर्माणमुद्धवम् । कृष्णो निर्यातयामास पूर्वद्वारेण भारत ॥ ३३ ॥
उग्रसेनं सुदामानं पृथुं विपृथुमेव च । हरिर्निर्यातयामास द्वारेणानुत्तरेण वै ॥ ३४ ॥
सात्यकिं च गदं चैव प्रसेनं गान्दिनीसुतम् । हरिः प्रतीचीद्वारेण प्रेषयामास दुर्मदान् ॥ ३५ ॥
गोविन्दस्तु महातेजाः स्वयं दारुकसारथिः । आत्ताभीष्टप्रहरणः सङ्कर्षणसहायवान् ॥ ३६ ॥
उत्तरेण विनिर्गम्य द्वारेण जगदीश्वरः । शङ्खं दध्मौ महाप्राणं दैत्यदानवभीषणम् ॥
आह दारुकमासीनं रथाग्रे माधवः स्मयन् ॥ ३७ ॥

श्रीभगवानुवाच

रथं वाहय धर्मज्ञ यत्र तौ चैद्यमागधौ । तर्पयामि नृपान् सर्वान् सायकैर्युद्धदुर्मदान् ॥ ३८ ॥

श्रीशुक उवाच

इत्युक्तो दारुकस्तेन हयांस्तूर्णमचोदयत् । व्यनदत् सिंहनादं च गोविन्दः परवीरहा ॥ ३९ ॥
शङ्खमाध्माय रामोऽपि सिंहनादं व्यनीनदत् । ततोऽभूत् परसैन्यानां हृदि चिन्ता सवेपथुः ॥४०॥
पूर्वद्वारि नृपैः सार्द्धं यदूनां कदनं महत् । आसीच्चतुर्भिरष्टानां तदद्भुतमिवाभवत् ॥ ४१ ॥

---

त्वावतां त्वद्युक्तानाम् । यद्वा त्वम् अवः रक्षको येषां ते त्वावन्तः तेषांम् । त्वावतामिति पाठश्छान्दसः ॥ २८ ॥ साधूनां साधुभिः सत्कृतम् । कृद्योगे षष्ठी ॥ २९ ॥

त्रयोविंशत्यनीकानां त्रयोविशदक्षौहिणीनां समुत्पन्नं भूमेर्भारम् ॥ ३०-३२ ॥

ब्रह्मसूत्रादयो वसुदेवादिशब्दवाच्याः ॥ ३३,३४ ॥

दुःखं मन्दयन्ति अल्पीकुर्वन्तीति दुर्मदास्तान् । नुमागमाभावश्छान्दसः ॥ ३५,३६ ॥

महाप्राणं महाघोषम् ॥ ३७ ॥ युद्धदुर्मदान् युद्धे दुष्टमदान् ॥ ३८-४० ॥

वासुदेवादिभिश्चतुर्भिः कलिङ्गाद्यष्टानाम् । ''कद क्रद हिंसार्थौ'' इति धातुः[1] । कदनं युद्धम् ॥ ४१ ॥

---

१. धातुपाठ इत्याशयः ।

दक्षिणद्वार्यपि तथा गोविन्दाध्मातचेतसाम् । आसीद् यदूनां कदनं राजन्यकटकेन वै ॥ ४२ ॥
अपरद्वार्यपि तथा यदूनां दृढधन्विनाम् । आसीद् राजसमाजेन सङ्ग्रामो रोमहर्षणः ॥ ४३ ॥
ते हन्यमाना यदवो राजभिः शक्रविक्रमैः । न चेलुः सङ्गराद् राजन् लोकद्वयजिगीषवः ॥ ४४ ॥
तत्र यादवशार्दूलो विष्णुस्त्रैलोक्यवल्लभः । आससाद महाघोरौ यत्र तौ चैद्यमागधौ ॥ ४५ ॥

जरासुतस्तावभिवीक्ष्य माधवौ महाबलौघेन बलीयसाऽऽवृणोत् ।
ससैन्ययानध्वजवाजिसारथी सूर्यानलौ वायुरिवाभ्ररेणुभिः ॥ ४६ ॥

सुपर्णतालध्वजचिह्नितौ रथौ विलक्षयन्त्यो हरिरामयोर्मृधे ।
स्त्रियः पुराट्टालकहर्म्यगोपुरं समाश्रिताः संमुमुहुः शुचार्पिताः ॥ ४७ ॥

हरिः परानीकपयोमुचां मुहुः शिलीमुखात्युल्बणवर्षपीडितम् ।
स्वसैन्यमालोक्य सुरासुरार्चितं व्यघूर्णयच्छार्ङ्गशरासनोत्तमम् ॥ ४८ ॥

गृह्णन् निषङ्गादथ सन्दधच्छरान् विकृष्य मुञ्चञ्छितबाणसञ्चयम् ।
निघ्नन् रथान् कुञ्जरवाजियूथपान् निरन्तरं यद्वदलातचक्रम् ॥ ४९ ॥

---

गोविन्देनाध्मातमाश्वासितं चेतो येषां ते तथा । तेषां राजन्यानां कटकेन सैन्येन । ''सैन्येऽपि कटकोऽस्त्रियाम्'' इत्यभिधानम् । समूहेन वा ॥ ४२-४५ ॥

माधवौ मधुकुले जातौ । सैन्येन यानध्वजैः रथध्वजैर्वाजिभिरश्वैः सारथिभिश्च सहितौ । ''वाजी त्वश्वे शरे वेगे'' इति । अभ्रैः जलधरैः रेणुभिश्च ॥ ४६ ॥

सुपर्णतालध्वजाभ्यां चिह्नितौ अङ्कितौ हरिरामयोः कृष्णबलभद्रयोः रथौ विलक्षयन्त्यः पश्यन्त्यः । पुरं गृहम् । अट्टालकं गृहोपरीष्टकादिविरचितचतुरस्रस्थलम् । हर्म्यं धनिनां वासः । गोपुरं पुरद्वारम् । अल्पवयसौ अल्पसेनौ कृष्णरामौ मागधं (च) प्रलयार्णवोपमसेनं दृष्ट्वा समुत्पन्नया शुचा[१] ॥ ४७ ॥

व्यघूर्णयत् विस्फारयामास । परानीकपयोमुचां शत्रुसेनामेघानाम् ॥ ४८ ॥

श्रीकृष्णस्य हस्तलाघवं कथयति **गृह्णन्निति** । निषङ्गात् तूणीरात् । भ्राम्यमाणमलातचक्रम् उल्मुकमण्डलं निरन्तरं छिद्रदर्शनं दुःशकं यद्वत् तद्वत् ॥ ४९ ॥

---

१. विलक्षयन्त्योऽलक्षयन्त्यः पुराट्टालकाद्यारुह्य शुचा सम्मुमुहुरिति सत्यधर्मीया योजना ।

ततः शशाङ्काकृतिपाञ्चजन्यं महारवं दैत्यकुलापचारम् ।
मुखे निधायाशु पुपूर यादवानाश्वासयन् क्षत्रियकूटघट्टितान् ॥ ५० ॥
नृपास्तदाकर्ण्य तु कर्णनिष्ठुरं क्रमेण निर्भिन्नहृदो बभूविरे ।
यदुप्रवीराश्च समुद्यतायुधा रणे नृपान् जघ्नुरनीकसंयुताः ॥ ५१ ॥
ततश्चतुर्द्वारगतान् महीपतीन् यदुप्रवीराः परिभूय सर्वशः ।
चक्रुः शरौघैः सहसैकवाहिन आप्यायिताः शार्ङ्गरवेण शौरिणा ॥ ५२ ॥

ततो हरिं चैद्यपतिर्मण्डलीकृतकार्मुकः । भर्त्सयन् कृष्णकृष्णेति तिष्ठतिष्ठेति चाब्रवीत् ॥ ५३ ॥
तमभ्यधावद् गोविन्दो विमुञ्चन् सायकान् बहून् । मण्डलीकृतकोदण्डस्तैलधौताञ्छितान् शरान् ॥
ततः पञ्चशरान् घोरानादाय दमघोषजः । चतुर्भिस्तुरगानाशु विव्याधैकेन सारथिम् ॥ ५५ ॥
भूयो दशाशु सन्धाय विव्याध मधुसूदनम् । व्यनदत् सिंहनादं च तदद्भुतमिवाभवत् ॥ ५६ ॥
ततस्तमाह गोविन्दः साधुसाध्विति पूजयन् । भोभो चैद्य महेष्वास वीरोऽसि बलवानसि ॥५७॥
अतो मे पश्य दुर्बुद्धे धानुष्मत्त्वं स्वयं रणे । इति ब्रुवति गोविन्दे राजानः सर्व एव ते ॥ ५८ ॥
विव्यधुर्निशितैर्बाणैर्यौगपद्येन माधवम् । तांस्तान् प्रत्येकशः कृष्णो विद्ध्वा पञ्चभिराशुगैः॥५९॥
सारथिं चतुरो वाहाननयत् यमसादनम् । त्रिभिस्त्रिभिः शरैर्भूयोऽप्येकैकं नृपतीन् रणे ॥ ६० ॥
वक्षस्यास्ये ललाटे च विव्याध यदुनन्दनः । ततश्च त्रिंशतां राज्ञां त्रिंशत्कार्मुकमाहवे ॥ ६१ ॥
त्रिंशद्भिः सायकैराशु चिच्छेद यदुपुङ्गवः । दमघोषसुतस्यापि धनुश्छित्त्वा त्रिभिः शरैः ॥ ६२ ॥
ध्वजं च मुकुटच्छत्रे चकर्त प्रहसन्निव । ततो दश हरिर्भल्लान् शार्ङ्गे सन्धाय माधवः ॥ ६३ ॥
आकर्णान्तं समाकृष्य चैद्यं विव्याध सङ्गरे । तेन राजन्यकटकं विभ्रान्तं शरताडितम् ॥ ६४ ॥

---

दैत्यकुलस्यापचारं नाशकरम् । क्षत्रियाणां कूटेन समूहेन घट्टितान् संवेष्टितान् ॥ ५० ॥

क्रमेण तत्तद्योग्यतानुसारेण ॥ ५१ ॥

एकवाहिनः एकवाहनगतान् पृष्टवाहनहीनानित्यर्थः ॥ ५२-५४ ॥

दमघोषजः शिशुपालः ॥ ५५ ॥ सिंहनादं व्यनदत् सिंहनादं चकार ॥ ५६ ॥ वीरः शूरोऽसि बलवान् शक्तिमानसि ॥ ५७ ॥ धानुष्मत्त्वं धनुष्मतां माहात्म्यम्[1] ॥ ५८ ॥ आशुगैः शरैः ॥ ५९,६० ॥ यदून् नन्दयति बलेन समर्द्धयतीति यदुनन्दनः ॥ ६१-६४ ॥

---

१. धनुष्मत्तामाहात्म्यमिति स्यात् ।

कालान्तमारुतोद्धूतशैलद्रुमलतोपमम् । त्रातारं नाध्यगच्छद् वै हताश्वरथसारथि ॥ ६५ ॥
शरान् विमुञ्चन् जलजं च पूरयन् विस्फूर्जयन् कार्मुकमुग्रपौरुषः ।
विलोकयन् मागधसैन्यमाहवे निरन्तरं यद्वदलातचक्रम् ॥ ६६ ॥
निर्भिन्नकुम्भाः करिणो निपेतुरनीकशोऽश्वाः शररुग्णकन्धराः ।
रथा हताश्वध्वजसूतनायकाः पदातयश्छिन्नभुजोरुकन्धराः ॥ ६७ ॥
सञ्छिद्यमानद्विपदेभवाजिनामङ्गप्रसूताः शतशोऽसृगापगाः ।
भुजाहयः पूरुषशीर्षकच्छपा हतद्विपद्वीपहयग्रहाकुलाः ॥ ६८ ॥
करोरुमीना नरकेशशैवला धनुस्तरङ्गायुधगुल्मसङ्कुलाः ।
आस्फूर्जितावर्तभयानका महामणिप्रवेकाभरणाश्मशर्कराः ॥ ६९ ॥
प्रवर्तिता भीरुभयावहा मृधे मनस्विनां हर्षवहाः परस्परम् ।
विनिघ्नताऽरीन् मुसलेन दुर्मदान् सङ्कर्षणेनापरिमेयतेजसा ॥ ७० ॥
बलं तदङ्गार्णवदुर्गभैरवं दुरन्तपारं मगधेन्द्रपालितम् ।
क्षयं प्रणीतं वसुदेवपुत्रयोर्विक्रीडितं तज्जगदीशयोः परम् ॥ ७१ ॥

---

कालान्तमारुतेन प्रलयकालवायुना ॥ ६५,६६ ॥ निर्भिन्नकुम्भाः विदलीकृतमूर्धानः । अनीकशः राशिशः । करिप्रभृतयो निर्भिन्नकुम्भादयो बभूवुरित्यन्वयः ॥ ६७ ॥

अङ्गप्रसूताः देहोत्पन्नाः । असृगापगाः रुधिरनद्यः । भुजा एवाहयो यासु तास्तथा । एवमुत्तरत्रापि । कच्छपाः कूर्माः । द्विपा एव द्वीपाः अन्तरद्वीपाः । हया एव ग्रहा ग्राहाः ॥ ॥ ६८ ॥

धनुस्तरङ्गैः आयुधगुल्मैश्च सङ्कुलाः । आस्फूर्जिताः उन्नतस्थलादधःपतज्जलध्वनयः, तैरावर्त्तैः जलभ्रमणैश्च भयानकाः भयप्रदाः । वृत्तफलकध्वनयो वाऽऽस्फूर्जितास्त एव आवर्त्ताः। महामणिप्रवेकाः प्रवेका उत्तमा एवाश्मानः आभरणान्येव शर्करा यासु तास्तथा[1] ॥ ६९ ॥

सङ्कर्षणेन एवंविधा असृगापगाः प्रवर्त्तिता इत्यन्वयः ॥ ७० ॥

अङ्ग हे विष्णुरात यन्मगधेन्द्रेण पालितम् अर्णवदुर्गम्[2] अत एव भैरवं दुरन्तपारं चक्षुरविषयतीरान्तरम् अनवसितसमाप्ति वा तद्बलं कृष्णरामाभ्यां क्षयं प्रणीतमित्यन्वयः ।

---

१. महामणिप्रवेकाः महामणिश्रेष्ठाः तद्युक्तान्याभरणान्येव अश्मशर्कराः क्षुद्रपाषाणखण्डा यासु ताः इति तु सरलम् । २. अर्णववद् दुर्गं दुष्प्रापमिति ।

स्थित्युद्भवान्तं भुवनत्रयस्य यः समीहतेऽनन्तगुणः स्वलीलया ।
न तस्य चित्रं परपक्षनिग्रहस्तथापि मर्त्यानुविधस्य वर्ण्यते ॥ ७२ ॥

हतेषु सर्वसैन्येषु जरासन्धो महाबलः । विद्रुतेष्ववशिष्टेषु रथेनैकेन सीरिणम् ॥ ७३ ॥
तावुभौ गिरिसङ्काशौ मत्ताविव महागजौ । परस्परमयुध्येतां सामर्षौ बलशालिनौ ॥ ७४ ॥
मागधस्तु गदां गुर्वीमादायामर्षविह्वलः । भ्रामयित्वा शतगुणं चिक्षेप बलवक्षसि ॥ ७५ ॥
तामापतन्तीं तरसा गदां शृङ्गोपमां गिरेः । व्यंसयित्वा हलधरो मुधा चक्रे स्मयन्निव ॥ ७६ ॥
व्यर्थीकृत्य गदां तस्य मुसलेन हलायुधः । पोथयित्वा रथे क्षुब्धो निहत्य रथसारथी ॥ ७७ ॥
जग्राह विरथं रामो जरासन्धं महाबलम् । हतानीकावशिष्टासुं सिंहः सिंहमिवौजसा ॥ ७८ ॥
बध्यमानं हतानीकं पाशैर्वारुणमानुषैः । वारयामास गोविन्दस्तेन कार्यचिकीर्षया ॥ ७९ ॥
स[1] मुक्तो लोकनाथाभ्यां व्रीडितो वीरसम्मतः । वनं विविक्षुस्तपसे वारितः पथि राजभिः ॥८०॥
हतेषु सर्वानीकेषु नृपो बार्हद्रथस्तदा । उपेक्षितो भगवता मागधो दुर्मना ययौ ॥ ८१ ॥
मुकुन्दोप्यक्षतबलो निस्तीर्णारिबलार्णवः । गृहीत्वा मागधेन्द्रस्य धनं स्त्रीकोशवाहनम् ॥ ८२ ॥
विकीर्यमाणः कुसुमैस्त्रिदशैरनुमोदितः । माधुरैरभिसङ्गम्य विज्वरैर्मुदितात्मभिः ॥
उपगीयमानविजयः सूतमागधबन्दिभिः ॥ ८३ ॥

---

जगदीश्वराभ्यामनायासेन कृतमेतद् युद्धमित्याह **जगदीशयोरिति** ॥ जगदीशयोः वसुदेवपुत्रयोः तद्युद्धं परं केवलं विक्रीडितं क्रीडामात्रमेव ॥ ७१ ॥

योऽनन्तगुणो भुवनत्रयस्य स्वलीलया स्थित्युद्भवान्तं समीहते करोति । स्थितिः उद्भवश्च अन्तश्च तत्तथा । मिथो विरुद्धत्वादेकवद्भावः[2] । यद्यपि तस्य हरेः परपक्षनिग्रहः चित्रं न भवति तथापि मर्त्यानुविधस्य मनुष्यधर्ममनुकुर्वतो हरेस्तद्युद्धं बुध्यवतारार्थं वर्ण्यते प्रशस्यत इत्यन्वयः ॥ ७२ ॥

सीरिणं बलभद्रम् आपेति शेषः ॥ ७३-७५ ॥ व्यंसयित्वा वञ्चयित्वा ॥ ७६,७७ ॥

हतानीकश्च हतसेनश्च अवशिष्टासुश्च अवशिष्टप्राणश्च स तथा तम् । हतानीकावशिष्टास्विति पाठे क्रियाविशेषणम् ॥ ७८, ७९ ॥ मुक्तः विसृष्टः ॥ ८०-८३ ॥

---

१. मुक्तो जीवेति विसृष्टो व्रीडितो वीरसम्मतः -इति स.पाठः। श्लोकद्वयं (इदमुत्तरं च पद्यं) प्रक्षिप्तमिति सम्प्रदायविदः -स.

२. ''येषां विरोधः शाश्वतिकः'' इति सूत्रानुसारेण इति भावः ।

शङ्खदुन्दुभयो नेदुर्भेरीतूर्याण्यनेकशः । वीणावेणुमृदङ्गानि पुरं प्रविशति प्रभौ ॥ ८४ ॥
सिक्तमार्गां हृष्टजनां पताकाभिरलङ्कृताम् । निर्घुष्टां ब्रह्मघोषेण कौतुकाबद्धतोरणाम् ॥ ८५ ॥
निचीयमानो नारीभिर्माल्यदध्यक्षताङ्कुरैः । निरीक्ष्यमाणः सस्नेहं प्रीत्युत्कलितलोचनैः ॥ ८६ ॥
आयोधनगतं वित्तमनन्तं वीरभूषणम् । यदुराजाय तत्सर्वमाहृतं प्रादिशत् प्रभुः ॥ ८७ ॥

॥ इति एकोनपञ्चाशत्तमोऽध्यायः ॥

---

## ॥ अथ पञ्चाशत्तमोऽध्यायः ॥

### श्रीशुक उवाच

तृतीये मासि भूयश्च राजा बार्हद्रथो बली । दिवानिशं तप्यमानः स्मरन् पूर्वपराभवम् ॥ १ ॥
आहूय सर्वभूपालान् चकार कलहोद्यमम् । स मत्स्यान् मालवांश्चेदीन् कुरुपाञ्चालकेरलान् ॥ २ ॥
कुलिन्दकुन्तलावन्तिकाशिगान्धारसृञ्जयान् । कलिङ्गकेकयानान्ध्रान् दशार्णान् वङ्गसैन्धवान् ॥३॥
माद्रान् त्रिगर्त्तान् सौवीरान् पार्वतेयांश्च सर्वशः । आहूयाक्षौहिणिगणैस्त्रयोविंशतिभिर्युतः ॥४॥
स मागधानातिक्रम्य पश्चिमाभिमुखो ययौ । आकर्षन्निव भूपालान् गजाश्वरथवल्लभान् ॥ ५ ॥
आगत्य मधुरां रोद्धुं प्राविशद् यमुनातटे । स्कन्धावारेण महता राजभिर्बहुभिर्वृतः ॥ ६ ॥
उपगीयमानो न्यरमत् सूतमागधवन्दिभिः । तदाकर्ण्य रणोद्योगं मागधस्य बलीयसः ॥ ७ ॥
मन्त्रयामास शर्वर्यां कृष्णः सङ्कर्षणादिभिः । वसुदेवोद्धवाक्रूरशैनेयाहुकसारणैः ॥ ८ ॥
एभिरालोच्य शर्वर्यां सम्यङ् निर्धारितक्रियः । उषस्यनुदिते सूर्ये समाहूय भटोत्तमान् ॥ ९ ॥

---

पुरं प्रविशति सति दुन्दुभ्यादयो नेदुरित्यन्वयः ॥ ८४ ॥ कौतुकाभिर्द्वन्द्वमालाभिराबद्धतोरणाम् ॥ ८५ ॥ निचीयमानः राशीक्रियमाणः[1] ॥८६॥ यदुराजाय उग्रसेनाय ॥८७ ॥

॥ इति श्रीमद्भागवतटीकायां श्रीविजयध्वजतीर्थकृतायां पदरत्नावल्यां दशमस्कन्धे उत्तरार्धे एकोनपञ्चाशत्तमोऽध्यायः ॥

---

स्कन्धावारेण सैन्यनिवेशार्थं वस्त्रविरचितपुरान्तःपुरादिगृहनिचयेन ॥ १-६ ॥

हय गताविति धातुः, हयत्यनेनेति हयः । वैराणं पल्याणम् अश्वपृष्ठासनमित्यर्थः । श्रेणीबद्धाः पङ्क्तिबद्धाः । पञ्जरं गजानां पृष्ठे शत्रुमुक्तशरस्तम्भियन्त्रगृहम्[2] ॥ ७-१७ ॥

---

१. निचीयमानो विकीर्यमाणः -स.  २. यन्तृगृहम् -ग.

त्रिधा विभज्य गोविन्दः स्वसेनां चतुरङ्गिणीम् । न्ययोजयदमेयात्मा मागधेन्द्रबलं प्रति ॥ १० ॥
सङ्कर्षणं च हार्दिक्यं गदं सारणमेव च । वामेन प्रेषयामास मार्गेण मधुसूदनः ॥ ११ ॥
सात्यकिं विपृथुं चैव पृथुमुद्धवमेव च । दक्षिणेनैव मार्गेण प्राहिणोत् सेनया सह ॥ १२ ॥
स्वयं कतिपयैर्युक्तो रथैः कमललोचनः । अग्रे मगधराजस्य प्रविवेश महद्बलम् ॥ १३ ॥
सा सेना बहुनागाश्वरथपादातिसङ्कुला । प्रसुप्ता यमुनातीरे विस्रब्धा रमते सुखम् ॥ १४ ॥
उदयाद्रिं समारोहत्यर्के तमसि नश्यति । नीडस्थेष्वेव कूजत्सु विहङ्गेषु ततस्ततः ॥ १५ ॥
विकसत्सु सरोजेषु गायत्स्वलिकुलेषु च । प्रविवेश बलं भीमं मागधेन्द्रस्य दुर्जयम् ॥ १६ ॥
हयाश्चाबद्धवैराणाः श्रेणीबद्धाः समन्ततः । कुञ्जराश्च तदा राजन्ननारोपितपञ्जराः ॥ १७ ॥
अनादत्तप्रहरणा भटाश्चाबद्धमूर्धजाः । अप्रविष्टात्मवर्माणस्तदा नारूढवाहनाः ॥ १८ ॥
रथाश्चाबद्धतुरगाः सर्वतोनुद्धृतध्वजाः । सेनायां मगधेन्द्रस्य प्रवेशे पीतवाससः ॥ १९ ॥
त्रिदिक्ष्वापतितं सैन्यं दृष्ट्वा तद् राजमण्डलम् । इतिकर्तव्यतामूढं विभ्रान्तं समपद्यत ॥ २० ॥
केचिद् भटाः समापेतुर्भयात् केचिच्च दुद्रुवुः । केचिदात्तप्रहरणास्त्वभिसस्रुररीन् रणे ॥ २१ ॥
केचिद् विभिन्नवर्माणश्छिन्नपादोरुबाहवः । रिपूनेवाभ्यवर्तन्त क्रोधोद्वृत्तारुणेक्षणाः ॥ २२ ॥
केचिद् [1]हयानपर्याणानारुह्य दृढविक्रमाः । मर्दयन्तो रिपून् युद्धे विमलं लेभिरे यशः ॥ २३ ॥
राजानः सहसोद्बुध्य दृष्ट्वा सैनिकसङ्क्षयम् । विना रणोपस्करणं चक्रुः केचन सङ्गरम् ॥ २४ ॥
केचिद् विसृज्य शिबिरं विविशुर्गहनं वनम् । केचिन्मागधमासाद्य विजयस्वेति चाब्रुवन् ॥ २५ ॥
रथेनैकेन गोविन्दः प्रविश्य रिपुवाहिनीम् । जघान सुबहून् वीरान् सायुधान् सरणोद्यमान् ॥२६॥
सङ्कर्षणोऽपि बलवान् महत्या सेनया वृतः । बलं प्रविश्य वामेन मर्दयामास मागधम् ॥ २७ ॥
शैनेयोऽपि महाबाहुर्दक्षिणेनैव वर्त्मना । प्रविश्य चतुरङ्गेण सैन्येन महताऽर्दयत् ॥ २८ ॥
एवं सा व्यथिता सेना मागधेन्द्राभिरक्षिता । दुद्राव त्रास्यमाना वै क्षणमात्रं दिशो दश ॥ २९ ॥

---

अनादत्तप्रहरणाः अस्वीकृतायुधाः ॥ १८ ॥ पीतवाससः श्रीकृष्णस्य । प्रवेशे प्रवेश-समये ॥ १९ ॥ विभ्रान्तमनवस्थानम् ॥ २०, २१ ॥ तदा जरासन्धसेनावस्थाप्रकारं कथयति **केचिदिति** ॥ २२ ॥ पर्याणमुभयपार्श्वावलम्बकमापदं कविका वा[2] ॥ २३ ॥ रणोपस्करणं युद्धसाधनम् ॥ २४-२९ ॥

---

१. हयानपल्याणान् इति स.पाठः । अपल्याणान् अखलीनान् -स.

२. अपदं कविका वा -ग. । अस्पष्टमिदं वाक्यम् ।

तामनुद्रुत्य वार्ष्णेयः सात्यकिः पञ्चयोजनम् । निहत्य मागधं सैन्यं जयी व्यावर्त्तताहवात् ॥३०॥
मतङ्गजान् पर्वतसन्निभान् बहून् निगृह्य सोपस्करतोमराङ्कुशान् ।
रथांश्च शस्त्रध्वजवाजिसंयुतान् निनाय कृष्णो मधुरां मनोरमाम् ॥ ३१ ॥
छत्राणि हेमाम्बररत्नमिश्रितान्यनेकवालव्यजनानि माधवः ।
किरीटपट्टाङ्गदकुण्डलांशुकान्यवाप कृष्णोऽगणितानि संयुगे ॥ ३२ ॥
हलायुधो मागधकोशवाहनप्रजावरोधायुधभूषणादिकम् ।
नियोजितः कंसभिदा रणाजितं यदुप्रवीराय धनं न्यवेदयत् ॥ ३३ ॥
॥ इति पञ्चाशत्तमोऽध्यायः ॥

## अथ एकपञ्चाशत्तमोऽध्यायः

### श्री शुक उवाच

मागधस्तु रणश्लाघी माधवेन पराजितः । जगाम शोणितपुरं बाणं द्रष्टुं बलेः सुतम् ॥ १ ॥
तं तथाऽऽयान्तमाकर्ण्य वृतराजन्यमण्डलम् । मित्रं पराजितं युद्धे विष्णुना दानवेश्वरः ॥ २ ॥
अलङ्कृतैर्गजैरश्वैर्विचित्रस्यन्दनैर्भटैः । वारकान्ताकदम्बैश्च सूतमागधबन्दिभिः ॥ ३ ॥
ध्वजैः पताकैश्छत्रैश्च माङ्गल्यैः पटहस्वनैः । सुवर्णतोरणैश्चित्रैर्दीपैः कलशदर्पणैः ॥ ४ ॥
उपतस्थे जरासन्धं बाणो बाहुसहस्रवान् । तौ दृष्ट्वा परमस्निग्धौ परस्परमनोऽनुगौ ॥ ५ ॥
पूजां चक्रतुरन्योन्यमन्योन्यप्रियकारिणौ । ततोऽब्रवीज्जरासन्धो बाणमाभाष्य संसदि ॥ ६ ॥
दानवेन्द्र निबोधेदं गोपेनाधर्मचारिणा । रात्रौ चौर्यप्रतापेन वञ्चितोऽस्मि दुरात्मना ॥ ७ ॥
गृहीता बहवस्तुङ्गा मातङ्गा मदशालिनः । तुरङ्गमाश्च बहवो रथाश्च सपरिच्छदाः ॥ ८ ॥

---

मगधस्य अधिपतिः मागधः तस्य मागधस्य विद्यमानमपि मागधं सैन्यम् । अन्यथा मागधं निहत्येत्यनन्वितं स्यात् ॥ ३०,३१ ॥ हेमाम्बरादीनि[1] छत्राणीत्यस्य विशेषणानि ॥३२,३३ ॥

॥ इति श्रीमद्भागवतटीकायां श्रीविजयध्वजतीर्थकृतायां पदरत्नावल्यां दशमस्कन्धे उत्तरार्धे पञ्चाशत्तमोऽध्यायः ॥

---

रणश्लाघी अत्युत्कटरणमाकाङ्क्षमाणः ॥१,२॥ वारकान्ताकदम्बैः गणिकास्त्रीनिकरैः ॥३॥ माङ्गल्यैर्मङ्गलद्योतकैः ॥ ४-८ ॥

---

१. हेमाम्बरेत्यादि इत्यर्थः ।

द्वन्द्वेन सज्जमानं मामिमे भूपा न सेहिरे। निरुद्धस्तैरहं भूपैरेतैः समसुखासुखैः ॥ ९ ॥
त्वत्सन्निधिमिहायातः साहाय्यं कुरु मे प्रभो। इत्युक्तस्तं निजपुरं प्रवेश्य बलिनन्दनः ॥ १० ॥
स राजमण्डलायाशु कारयामास सत्क्रियाम्। भोजनस्नानशयनगन्धताम्बूलपूर्वकैः ॥ ११ ॥
अर्हणैरर्हयामास सराजन्यं जरासुतम्। तं भुक्तवन्तं विश्रान्तं दृष्टदर्शनकौतुकम् ॥ १२ ॥
अलङ्कृतं सहनृपैरासीनं काञ्चनासने। उवाच दानवपतिर्नृपानाभाष्य सादरम् ॥ १३ ॥

बाण उवाच

जरासन्ध निबोधेदं न मृषा कथ्यते मया। एते गजा इमे अश्वा इदं राज्यमिमाः प्रजाः ॥
त्वदधीनमिदं विश्वं यच्चान्यद् वस्तु विद्यते ॥ १४ ॥

श्रीशुक उवाच

इत्युक्त्वा प्रददौ तस्मै मागधाय बलेः सुतः। गजानां षष्टिसाहस्रं रथानां नियुतं तथा।
प्रयुतं चतुरङ्गाणां[१] मनोमारुतरंहसाम् ॥ १५ ॥
दानवानां प्रसिद्धानां मायासङ्ग्रामवेदिनाम्। त्रिशतं स्वात्मसाम्यानां ददौ बाणो बलेः सुतः ॥१६॥
विचित्रशिबिकाच्छत्रव्यजनाकल्पवाससाम्। असङ्ख्यातं ददौ राजन् भाण्डशय्यासनादिकम् ॥१७॥
कुभाण्डं कूपकर्णं च मन्त्रिणौ दैत्यसत्तमौ। आज्ञापयामास बाणः साहाय्यार्थं कुरूद्वह ॥ १८ ॥

---

द्वन्द्वेन युद्धेन ॥ ९,१०॥ सत्क्रियाम् सत्कारम् ॥११॥

(सराजन्यम्) राजसैन्यसहितम्। दृष्टं दर्शनकौतुकं स्वप्नकौतुकं येन स तथा। स्वप्ने कौतुकं दृष्ट्वा कौतूहलबुद्धिर्भवति तथा बाणसम्पदं दृष्टवानित्यर्थः[२]। ''दर्शनं चक्षुषि स्वप्ने बुद्धि-शास्त्रोपलब्धिषु'' इति ॥ १२-१४ ॥ रथानां नियुतं लक्षम् ॥ १५-१८ ॥

---

१. ''तुरङ्गाणां च प्रयुतं दशलक्षं'' इति सत्यधर्मतीर्थव्याख्यानम्। तुरङ्गशब्दपक्षे समानपदत्वात् तुरङ्गाणाम् इति णत्वे अविवादः। चतुरङ्गशब्दपक्षे तु रूढशब्दत्वात् समानपदत्वमिति कृत्वा णत्वं कथंचिदुपपादनीयम्। चतुरङ्गैकदेशभूतानां गजानां रथानां च पृथगुक्तेः तुरङ्गाणां च इति योजनैव युक्ततया भाति।

२. दर्शनेन कौतुकं येन पदार्थेन स दृष्टो येन तम्। कदाप्यदृष्टं दृष्टवन्तमिति यावत्। जाग्रद्दशायां कदाप्यदृष्टं दृष्टं दर्शनस्य स्वप्नस्य तत्सम्बन्धिकौतुकमिवाद्भुतं येनेति वा। 'दर्शनं नयनस्वप्नबुद्धिधर्मोपलब्धिषु' इति विश्वः -स.

क सुरासुरसङ्घातसंहारणपटुर्हरिः । कुभाण्डकूपकर्णौ क वराकौ बाणमन्त्रिणौ ॥ १९ ॥
अजानन्तो विष्णुशक्तिं भूपाला विनशिष्णवः । चक्रुर्भूयो रणोद्योगं मागधेन प्रचोदिताः ॥२०॥
बाणेन समनुज्ञातो मागधः शोणितात् पुरात् । निर्गत्यानेकभूपालचतुरङ्गबलान्वितः ।
दिनैः कतिपयैर्भूयो मधुरामन्वपद्यत ॥ २१ ॥
सन्निरुध्य पुरद्वारं गोपुराट्टालतोरणैः । दीर्घिकोपवनोद्यानैरुपेतं सालभूषितम् ॥ २२ ॥
कुन्तैः कुठारैः कुद्दालैर्दण्डभारैश्च भूरिभिः । कर्षणस्थैश्च पाषाणैर्बभञ्ज परितः पुरम् ॥ २३ ॥
भज्यमाने पुरे तस्मिन् श्रुत्वा मागधमागतम् । सन्नाहभेरीः सन्नाद्य रामकृष्णावमर्षिणौ ॥ २४ ॥
रथाश्वकुञ्जरानीकैः सायुधैः सपरिच्छदैः । सात्यकिं कृतवर्माणमुग्रसेनं तथा गदम् ॥ २५ ॥
आहुकं वसुदेवं च पुरस्कृत्य महाबलौ । निर्जग्मतुरसम्भ्रान्तौ दीप्तौ केसरिणौ यथा ॥ २६ ॥
मधुराया विनिर्गत्य कृष्णः कमललोचनः । पाञ्चजन्यं महाशङ्खं प्रदध्मौ रिपुभीषणम् ॥ २७ ॥
ततः प्रववृते युद्धं यदूनां क्षत्रियैः सह । कुभाण्डकूपकर्णौ च दानवौ बाणमन्त्रिणौ ॥ २८ ॥
दैत्यसैन्येन महता वृतौ मायाविशारदौ । युयुधाते महावीर्यौ मायया वृष्णिभिः सह ॥ २९ ॥
स्वसैन्यं मायया क्लिष्टं दृष्ट्वा यादवसत्तमः । विज्ञानास्त्रेण तन्मायामपास्य निमिषान्तरे ।
सात्यकिं कृतवर्माणं प्रोवाचाहवलालसौ ॥ ३० ॥

आभ्यां भवन्तौ रणदुर्मदाभ्यां रणं सुघोरं कुरुतां रणप्रियौ ।
तावेवमुक्तौ कदनं भयानकं महाबलौ सम्प्रति चक्रतुर्नृप ॥ ३१ ॥

चापेनैकेन गोविन्दः क्षत्रियैः शतसम्मितैः । युयुधे न हि तच्चित्रं राजन् विश्वात्मनो हरेः ॥ ३२ ॥
केचिद् हताः समापेतुः कुञ्जराश्छिन्नपुष्कराः । निपेतुर्बहवो राजंस्तुरङ्गाः कृत्तकन्धराः ॥ ३३ ॥
विशीर्णैरास्तृता पृथ्वी स्यन्दनैश्छिन्नबन्धनैः ॥ ३४ ॥
भटाश्च रुधिराक्ताङ्गाश्छिन्नपादोरुबाहवः । पेतुः कृत्तमहामूलाः किंशुका इव पुष्पिताः ॥ ३५ ॥

---

अथ जरासन्धेन सह योद्धुं श्रीकृष्णस्याशक्यमिति मन्दाशङ्कां परिहरति केति । वराकौ षण्ढतिलनिस्सारौ ॥ १९-२१ ॥

सालैः प्राकारैः भूषितम् ॥ २२ ॥ दण्डभारैर्दीर्घीकृतनिशितप्राग्रखर्वमयदण्डैः । कर्षणस्थैः पाषाणयन्त्रनिहितैः ॥ २३-२५॥ दीप्तौ क्रोधेन ज्वलितौ ॥ २६-२९ ॥ आहवलालसौ युद्धोत्सुकौ ॥ ३०,३१ ॥ शतसम्मितैः शतसङ्ख्यापरिमितैः ॥ ३२ ॥ छिन्नपुष्कराः द्विधाकृतहस्ताः ॥ ३३-३५ ॥

शार्ङ्गमुक्ताः शरगणाः कङ्कबर्हिणवाससः । तैलाक्ता नतपर्वाणः स्वर्णपुङ्खा अयोमुखाः ।
एकैकस्मिन् दशदश भटे चाश्वे शतंशतम् ।। ३६ ।।
रथेरथे च साहस्रमयुतं च गजेगजे । अदृश्यन्त परानीके तदद्भुतमिवाभवत् ।। ३७ ।।
तथा तैरर्द्यमानेषु चतुरङ्गेषु मागधः । रथेन क्रोडचिह्नेन बलभद्रमुपाद्रवत् ।। ३८ ।।
स पूर्ववैरं नृपतिः स्मरन् रुषा रथं महाकाञ्चनतालकूबरम् ।।
आलक्ष्य दूरादधिगम्य रंहसा जरासुतः प्राह हलायुधं गदी ।। ३९ ।।

आदत्स्व ते मुसलं राम तूर्णं येनाहितानिच्छसि जेतुमाहवे ।
बलं च बाह्वोस्तव दर्शयाशु मे यावद् गदां न प्रहराम्यहं त्वयि ।। ४० ।।
इत्येवमुक्तो मगधेश्वरेण सङ्कर्षणोऽमर्षणविह्वलेक्षणः ।
आदाय घोरं मुसलं तडित्प्रभं दण्डं यथा सूर्यसुतो युगक्षये ।। ४१ ।।
आवर्त्तयित्वा मुसलं हलायुधः सहस्रकृत्वो रिपुदर्पहारिणम् ।
धूमाङ्कुरोद्गारिणमाशु तस्मै चिक्षेप राजन् व्यनदद्धरिर्यथा ।। ४२ ।।

रामबाहुविमुक्तेन मुसलेन जरासुतः । साश्वसूते रथे क्षुब्धे क्षणेन व्यंसितः स्वयम् ।। ४३ ।।
ततः कालायसीं गुर्वीं गिरिकूटोपमां गदाम् । बिभ्रद् गुर्वीं पदा पृथ्वीं चालयन्नभ्यगाद् बलम् ।।
तमापतन्तमालोक्य विरथं रोहिणीसुतः । तमेवाभ्यद्रवत पद्भ्यां विसृज्य स्यन्दनं रणे ।। ४५ ।।
पश्यतां सर्वभूतानां मागधः क्रोधविह्वलः । आवर्त्तयन् गदां गुर्वीमयःसारमयीं दृढाम् ।।
अभ्येत्य गदया रामं प्रजहार ननाद च ।। ४६ ।।
तां गदां पतितां वक्षस्यश्मकुट्टनिभां दृढाम् । वामेन जगृहे रामः स्वहस्तेन कुरूद्वह ।। ४७ ।।
विसृज्य स गदां तूर्णमुरस्याहत्य मागधम् । जग्राहाश्लिष्य बलिनं बलवान् रोहिणीसुतः ।। ४८ ।।
बबन्ध पद्भ्यां जठरं मागधस्य हलायुधः । चकार कुक्षौ तत्कण्ठं ततस्तौ पेततुर्भुवि ।। ४९ ।।
तयोर्निपततो राजन् उपर्यासीद्धलायुधः । तं मागधः क्षणेनाधश्चकारामितविक्रमः ।। ५० ।।

---

कङ्कानां लोहपृष्ठानां बर्हिणां मयूराणां पक्षा एव वासांसि येषां ते[1] ।।३६,३७।। क्रोडचिह्नेन वराहलक्षणेन ध्वजेन ।। ३८ ।। काञ्चनतालश्च कूबरः युगन्धरश्च यस्मिन् स तथा ।। ३९,४० ।। सूर्यसुतो यमः ।। ४१ ।। हरिः सिंहः ।। ४२ ।। स्वयं मागधो व्यंसितो वञ्चितः ।। ४३ ।। कालायसीं कृष्णायोमयीम् ।। ४४-४६ ।। अश्मकुट्टनिभाम् अश्मसारसमाम् ।। ४७-५४ ।।

---

१. बर्हिणवासस इत्यार्षः प्रयोगः ।

तत उत्थाय तौ वीरौ क्रोधसंरक्तलोचनौ । भूयो जग्रहतुर्घोरौ मत्तौ द्वाविव कुञ्जरौ ॥ ५१ ॥
तावुभौ परमक्रुद्धौ परस्परवधैषिणौ । उरसोरः समाहत्य भीमौ चकृषतू रणे ॥ ५२ ॥
एवं धनुः शतशतं तावाकृष्य परस्परम् । निकटस्थान् द्रुमान् शैलांश्चूर्णयामासतुर्नृप ॥ ५३ ॥
तं विसृज्य जरासन्धो गदामादाय दुर्मदः । उदतिष्ठदमेयात्मा रामोऽपि स महाबलः ।
क्षणादादत्त मुसलं प्रहर्तुमुपचक्रमे ॥ ५४ ॥

तं कामपालो मुसलेन मूर्ध्नि जत्रुण्यंसे भुजयोर्नाभिदेशे ।
शङ्खे च जानौ जठरे च वक्षस्यनेकशो वै प्रजहार युद्धे ॥ ५५ ॥
तं मागधो वक्षसि कन्धरे च मुखे ललाटे चुबुके तथांऽसे ।
नाभौ नितम्बे च तथैव पार्श्वे समं स मानी प्रजहार रामम् ॥ ५६ ॥

एवं प्रहरतोस्तत्र राममागधयोर्मृधे । राजानो रणसंविग्ना बभूवुर्भृशपीडिताः ॥ ५७ ॥
क्रमेण ते विमनसो निवृत्तकदनोद्यमाः । आसन्नासन्ननिधनं मन्वाना मागधेश्वरम् ॥ ५८ ॥
सात्यकिस्तु महातेजाः सङ्गरे बाणमन्त्रिणा । युध्यमानस्त्रिभिर्बाणैः कुभाण्डेन समर्पितः ॥
सोऽतिविद्धो महाबाहुः क्रुद्धः सर्प इव श्वसन् ॥ ५९ ॥
आददे पञ्चनाराचान् कुभाण्डं हन्तुमाहवे ॥ ६० ॥
ततो हाहारवो जज्ञे सेनायां दैत्यमन्त्रिणः । सात्यकिस्तं महाबाहुराकृष्याकर्णमाशुगैः ॥ ६१ ॥
विव्याध कुरुशार्दूल कुभाण्डं बाणमन्त्रिणम् । नाभौ कण्ठे ललाटे च हृदि मूर्ध्न्यपि दानवम् ॥६२॥
अभिविद्धो रथोपस्थे निषसाद विचेतनः । तं विचेतनमालोक्य दुर्मनास्तस्य सारथिः ॥ ६३ ॥
अपोवाह रणात् तूर्णं रथेन भरतर्षभ ॥ कूपकर्णस्तु दैतेयः प्रसक्तः कृतवर्मणा ॥ ६४ ॥
गतं कुभाण्डमालोक्य प्राप्तं च प्राणसंशयम् । विसृज्य कृतवर्माणमपायात् समराङ्गणात् ॥ ६५ ॥
तौ विसृज्य रणं दैत्यावनापृच्छ्य च भूपतिम् । अविसृष्टौ मागधेन हतशेषबलान्वितौ ।
दैत्यौ तेनैव मार्गेण जग्मतुः शोणितं पुरम् ॥ ६६ ॥

॥ इति एकपञ्चाशत्तमोऽध्यायः ॥

---

कामपालो बलभद्रः । जत्रुणि[1] वक्षःस्कन्धयोर्मध्ये । शङ्खे स्कन्धमूले[2] ॥५५-६५॥ अनापृच्छय गमिष्यामित्यनुक्त्वा ॥ ६६ ॥

॥ इति श्रीमद्भागवतटीकायां श्रीविजयध्वजतीर्थकृतायां पदरत्नावल्यां दशमस्कन्धे उत्तरार्धे एकपञ्चशत्तमोऽध्यायः ॥

---

१. जत्रुणि गलतले -स. २. ऊरौ चेति स.पाठः । शङ्खे चेति पाठे 'शङ्खो निध्यन्तरे कम्बुललाटास्थिनखेषु च' इति विश्वात् ललाटास्थिषु नखेषु वेत्यर्थः -स.

## ॥ अथ द्विपञ्चाशोध्यायः ॥

श्रीशुक उवाच

बाणसेनां गतां दृष्ट्वा शस्त्रौघेण भृशार्दिताः । राजपुत्रा विमनसो बभूवुर्नृपसत्तम ॥ १ ॥
गतां च दानवीं सेनां श्रान्तांश्च धरणीपतीन् । दृष्ट्वा कृष्णं च युध्यन्तं रामस्य ववृधे बलम् ॥ २ ॥
स मागधं गृहीत्वाजौ मौलौ वामेन पाणिना । प्रहर्तुमैच्छच्छिरसि मुसलेन हलायुधः ॥ ३ ॥

ततोऽन्तरिक्षे घनघोषघर्घरां शुश्राव वाणीं विशदाशरीरिणीम् ।
न राम वध्यो भवता जरासुतः सुखी निवर्त्तस्व रणादिति स्फुटम् ॥ ४ ॥
वचस्तदाकर्ण्य हलायुधो बली विसृज्य चास्थाय रथं रणाङ्गणात् ।
न्यवर्त्तत ब्रह्मर्षिसिद्धसङ्घैरभिष्टुतो मागधसूतबन्दिभिः ॥ ५ ॥
जरासुतः सम्प्रति नम्रकन्धरो नृपैश्च युद्धाभिजितैः समन्वितः ।
हतावशिष्टाल्पबलेन संवृतो निवृत्तयुद्धः प्रययौ स्वकं पुरम् ॥ ६ ॥

श्री शुक उवाच

गोविन्दस्तु महातेजाः सपत्नांश्छरसञ्चयैः । आच्छाद्य भूपान् विद्राव्य हत्वा च सुबहून् रणे ॥७॥
संस्तूयमानः सन्तुष्टैः सूतमागधबन्दिभिः । ब्राह्मणैश्च महाविद्यैः स्तोत्रं कुर्वद्भिरुच्चकैः ॥ ८ ॥
अन्वीयमानो भगवान् प्राविशन्मधुरां पुरीम् । हृष्टपुष्टजनाकीर्णां तुङ्गप्राकारतोरणाम् ॥ ९ ॥
चलत्कदलिकोपेतां दीपाङ्कुरविराजिताम् । प्रविशन् राजमार्गेण स्त्रीभिः प्रासादसंस्थितैः ॥ १० ॥
पुष्पैश्च लाजाञ्जलिभिः कीर्यमाणो व्यराजत । उपायनानि दिव्यानि पुष्पस्रगनुलेपनान् ॥ ११ ॥
प्रियङ्करा माधवाभ्यामुपजह्नुः पुरौकसः । एवं स राजमार्गेण गत्वा यादवसत्तमः ॥ १२ ॥
सभां प्रविश्य विपुलामुपविश्य वरासने । रामेण सहितो वीरः शैनेयेन च धीमता ॥ १३ ॥
पूजितो यदुभिर्विप्रैर्दिवि शक्र इवामरैः । तत्रासीनैर्बुद्धिमद्भिर्यदुवृद्धैर्महात्मभिः ॥ १४ ॥
उग्रसेनोद्धवमुखैरक्रूरप्रमुखैर्हरिः । समाभाष्याभ्यनुज्ञातः सङ्कर्षणसहायवान् ॥ १५ ॥

---

विमनसो युद्धविरतमनसः ॥ १ ॥ दानवस्य बाणस्य विद्यमानाम् ॥ २ ॥ मौलौ संयतकेशे । ''मौलिः संयतकेशेषु चूडायां मुकुटोप्ययम्'' इति ॥ ३ ॥

घर्घरां गम्भीराम् । ''गाम्भीर्ये नूपरारावे घर्घरः समुदाहृतः'' इति । अशरीरिणीं शरीरहीनां दैवीमित्यर्थः ॥ ४-७ ॥ सम्यक् प्रीतपुरुषैः । महती विद्या शास्त्रविषया येषां ते तथा तैः ॥ ८-१५ ॥

द्रष्टुकामो महादुर्गं गोमन्तं पर्वतोत्तमम् । निर्गम्य मधुरां प्रातर्दक्षिणाभिमुखो ययौ ॥ १६ ॥
स रामानुगतः श्रीमानुत्तीर्य यमुनां हरिः । देशान् बहूनतिक्रम्य पर्वतान् सरितो गिरौ ॥ १७ ॥
गच्छन् क्वचिद् वनोद्देशे वृक्षमूलनिवासिनम् । ददर्श कञ्चन मुनिं जटामण्डलमण्डितम् ॥ १८ ॥
चीरकृष्णाजिनधरं कमण्डलुविराजितम् । माधवौ समुपाविष्टं तेजसा भास्करोपमम् ॥ १९ ॥
फलमूलकृताहारं वृतं शिष्यशतैर्मुनिम् । दृष्ट्वा परमसन्तुष्टौ रामकृष्णौ जगत्पती ॥ २० ॥
प्रणामं चक्रतुर्वीरौ यथान्यायमतन्द्रितौ । इदं चोवाच भगवान् कृष्णस्तं मुनिपुङ्गवम् ॥ २१ ॥
नमस्ते भार्गव श्रीमन् जामदग्न्य तपोधन । रामकृष्णौ स्मृतावावां कच्चित् ते श्रवणं गतौ ॥ २२ ॥
इत्युक्तस्तेन धर्मात्मा वासुदेवेन भार्गवः । निरीक्ष्य माधवौ प्राह प्रीत्युत्फुल्लमुखेक्षणः ॥ २३ ॥
स्वागतं ते यदुश्रेष्ठ साग्रजाय महात्मने । जाने त्वां यदुषूत्पन्नं भगवन्तमधोक्षजम् ॥ २४ ॥
कार्याणां कारणं पूर्वं जगतामादिपूरुषम् । नमस्ते पुण्डरीकाक्ष विश्वलोकैककारण ॥ २५ ॥
किमर्थमिह सम्प्राप्तौ भवन्तौ विश्ववन्दितौ । इत्युक्तौ जामदग्न्येन प्राहतू रामकेशवौ ॥ २६ ॥
गोमन्तं द्रष्टुमिच्छावो दुर्गहेतोरिह प्रभो । तदाकर्ण्याब्रवीद् रामो जामदग्न्यो जनार्दनम् ॥ २७ ॥
एवमस्तु महाबाहो गोमन्तं गच्छ साग्रजः । करवीरपुरं नाम तन्मूले परिपालितम् ॥ २८ ॥
शृगालवासुदेवेन स युवां न सहिष्यति । तं हत्वा समरे शैलं गोमन्तं साध्ववाप्स्यथ ॥ २९ ॥
इत्युक्तौ तेन रामेण जामदग्न्येन माधवौ । तमनुज्ञाप्य सर्वज्ञं जग्मतुर्दक्षिणामुखम् ॥ ३० ॥
तौ तथा यदुशार्दूलौ गच्छन्तौ दक्षिणापथम् । ददर्शतुश्च गोमन्तमभ्रङ्कषमहाद्रुमम् ॥ ३१ ॥
करवीरपुरं चैव तन्मूले तुङ्गतोरणम् । दृष्ट्वा विचित्रप्राकारं हर्म्यप्रासादगोपुरम् ॥ ३२ ॥

---

मधुरां रक्षितुं निर्गम्य निर्धार्य । पञ्चम्यर्थे वा द्वितीया ॥ १६,१७ ॥ गिरौ वनोद्देशे वने उन्नतप्रदेशे वृक्षमूले निवासिनं कृतावासम् । कञ्चन लोकविलक्षणम् ॥ १८,१९ ॥

फलं लाभः आनन्दः चेतनस्य मूलं ज्ञानं ते एव कृते पूर्णे आहारो यस्य स तथा तम् ॥२०॥

प्रणामं चक्रतुरित्यादिना प्रतीयमानः कृष्णभार्गवरामयोः नम्यनन्तृभावो भेदाविनाभावं गमयति । तत् कथमुभयोर्विष्णुत्वे सङ्गच्छत इत्याशङ्का– ''सर्वावताराभिन्नोऽपि सर्वशक्तिरपि स्वयम् । पूज्यपूजकनीचोच्चं मोहनाय दुरात्मनाम् । अखण्डैकरसो विष्णुर्दर्शयेत् तत्र तत्र हि'' इति षाड्गुण्यवचनेन परिहरणीयेति ॥ २१-३० ॥

अभ्रङ्कषा महान्तो द्रुमाः यस्मिन् स तथा तम् । अभ्राणि मेघान् कषन्त्युल्लिखन्तीत्यभ्रङ्कषाः। कषतेर्धातोरभ्रादिषूपपदेषु खश् प्रत्ययो भवति ॥ ३१-३५ ॥

शङ्खमाध्मापयामास शङ्खचक्रगदाधरः । तस्य शङ्खध्वनिं श्रुत्वा बभूव क्रोधविह्वलः ॥ ३३ ॥
शृगालो वासुदेवाख्यः प्रत्यगाद् यदुनन्दनौ । सोऽभ्येत्य बहुपादातितुरङ्गरथकुञ्जरः ॥ ३४ ॥
अभ्यवर्षच्छरौघेण छादयन्निव माधवौ । तदनीकमनाधृष्यं दृष्ट्वा यादवसत्तमौ ॥ ३५ ॥
योधयामासतुर्वीरौ द्वावेवाजौ पदातिनौ । सैन्यं च बाणपूगेन व्यथितं भृशविह्वलम् ॥ ३६ ॥
दृष्ट्वा शृगालभूपालस्तावधावदमर्षणः । तमायान्तमभिप्रेक्ष्य रथिनं धृतकार्मुकम् ॥ ३७ ॥
तावुभौ परमक्रुद्धौ वासुदेवौ महाबलौ । युयुधाते तथाऽन्योन्यमन्योन्यवधकाङ्क्षिणौ ॥ ३८ ॥
स तथा विद्यमानस्य वासुदेवस्य सङ्गरे । शिरो जहार गोविन्दः क्षणेन मुकुटोज्ज्वलम् ॥ ३९ ॥
ततस्तत्सैनिकाः सर्वे हतशेषाः कुरूद्वह । कृष्णेन स्वामिनिं हते दुद्रुवुः सर्वतोदिशम् ॥ ४० ॥
ततस्तौ रामगोविन्दौ करवीरपुरं महत् । प्रविश्य पूजितौ विप्रैर्वणिग्भिश्च यथा प्रियः ॥ ४१ ॥
तद्गजाश्वरथानीककोशादिधनसञ्चयम् । मधुरां प्रेषयामास तदीयैर्भृत्यपूरुषैः ॥ ४२ ॥

॥ इति द्विपञ्चाशोऽध्यायः ॥

---

## ॥ अथ त्रिपञ्चाशत्तमोऽध्यायः ॥

### श्रीशुक उवाच

गोमन्तं पर्वतश्रेष्ठं तुङ्गद्रुमलतान्वितम् । सालतालतमालाढ्यं प्रियालाशोकशोभितम् ॥ १ ॥
कदम्बनिम्बहिन्तालपूगपुन्नागशोभितम् । आरुह्य [१]कदलीखण्डमण्डितं मत्तकोकिलम् ॥ २ ॥

---

पदातिनौ पादैः सञ्चरमाणौ रथादिरहिताविर्थ्यः ॥ ३६,३७ ॥ वासुदेवौ वसुदेवपुत्रौ कृष्णशृगालौ ॥ ३८ ॥ वासुदेवस्य शृगालनाम्नः ॥ ३९,४० ॥ प्रियः सुहृद् यथा तथा पूजितौ ॥ ४१ ॥ तदीयैस्तस्य विद्यमानैः ॥ ४२ ॥

॥ इति श्रीमद्भागवतटीकायां श्रीविजयध्वजतीर्थकृतायां पदरत्नावल्यां दशमस्कन्धे उत्तरार्धे द्विपञ्चाशत्तमोऽध्यायः ॥

---

सालः सर्जः, तालस्तृणराजः, तमालः कालस्कन्धः प्रियालो राजादनः। अशोको वञ्जुलः। "सालं सर्जं च सूरयः । तृणराजस्तालः कथ्यते । कालस्कन्धः तमालः स्यात् । राजादनः प्रियालः स्यात् वञ्जुलोऽशोक उच्मते" ॥ १ ॥

कदम्बो हरिप्रियः । निम्बः पिचुमन्दः । "पिचुमन्दस्तु निम्बः स्यात्" । हिन्तालो वनक्रमुकः । नागः नागकेसरः । पूगोतिसारो ग्रामक्रमुकः । पुन्नागः सुरवर्णिका[२] ॥ २,३ ॥

---

१. कोशोदाहरणमिदं शोधनीयम् । २. गोमन्तमारुह्य ददृशतुरित्यन्वयः ।

भ्रमद्भ्रमरसङ्घातप्लवङ्गाकम्पितद्रुमम् । फलभारनतैः स्कन्धैर्नारिकेलैर्विराजितम् ।। ३ ।।
बहुप्रस्रवणोपेतं सुच्छायं निर्मलोदकम् । रम्यं ददृशतुर्वीरौ प्रदेशं रामकेशवौ ।। ४ ।।
तत्र प्रवर्षणं नाम शृङ्गं पर्वतमूर्धनि । अवापतुर्यत्र मेघा नित्यं वर्षन्त्यविक्लवाः ।। ५ ।।
तत्रारुह्य यदुश्रेष्ठौ पश्यन्तौ हि दिशो दश । रममाणौ यथाकाममूषतुः पर्वतोत्तमे ।। ६ ।।
एतस्मिन्नेव काले तु क्षीरोदे सागरोत्तमे । निवासे देवदेवस्य शङ्खचक्रगदाभृतः ।। ७ ।।
उपासीनो महाबाहुः श्रीमान् वैरोचनो बलिः । जहार देवदेवस्य किरीटं रत्नचित्रितम् ।। ८ ।।
इन्द्रनीलसहस्राढ्यं गोमेदकशताचितम् । पद्मरागमहानीलमुक्ताफलविराजितम् ।। ९ ।।
पुष्यरागप्रवालाढ्यं दिव्यकाञ्चननिर्मितम् । हृतं दानववीरेण विदित्वा पुरपालकः ।।
तमन्वधावत् त्वरितं वैनतेयो विहङ्गराट् ।। १० ।।
तमन्तरे समासाद्य दानवेन्द्रं दुरासदम् । कृत्वा युद्धं महाघोरं जित्वा दानवपुङ्गवम् ।। ११ ।।
गृहीत्वा रत्ननिचयं किरीटं भास्करोपमम् । आगच्छन् ददृशे देवं देवकीनन्दनं हरिम् ।। १२ ।।
वसन्तं साग्रजं रम्ये गोमन्ते पर्वतोत्तमे । तस्य मूर्ध्नि निधायाशु किरीटं दिव्यभूषणम् ।।
प्रणम्य पादयोर्मूर्ध्ना स्तोतुं तमुपचक्रमे ।। १३ ।।

गरुड उवाच

नमो नमः कारणपूरुषाय नारायणायाखिलवल्लभाय ।
सुरारिसंहारणकारणाय नारायणायाखिलकर्मसाक्षिणे ।। १४ ।।

---

बहुभिः प्रस्रवणैर्निर्झरैरुपेतम् ।। ४-७ ।। ''सुरै[१]रुपासीनो महाबाहुः'' इत्यादिना मुक्तगम्ये क्षीरमागरे बलिना दानवेन्द्रेण हरेः किरीटहरणं गरुडेन तं जित्वा किरीटमादायागच्छता मार्गे गोमन्ते वसन्तं श्रीकृष्णं दृष्ट्वा किरीटहीने तच्छिरसि तन्निधानमुच्यते । तत्र संशयः । अमुक्तस्य बलेर्गमनम्, ''अजमनिद्रमस्वप्नम्'' इति श्रुतेः नित्यनिरस्तनिद्रस्य हरेः किरीटनयनमित्यादिकं कथं सङ्गच्छत इति । इयमाशङ्का ''बहूनि स्थानजातानि कृष्णस्य क्षीरसागरे'' इत्यादि-माहात्म्यवचनेन परिहृतेति ज्ञातव्यम् ।। ८-१३ ।।

नमोनम सति पुनरुक्तिरादरार्था । पुरुषायेत्युक्ते जीवायेति शङ्का स्यात् । अतस्तन्निरासार्थं **कारणेति** । ''कारणं बन्धमोक्षयोः'' इति श्रुतेः जीवस्यापि कारणत्वप्रतीतेर्निस्तुषत्वेन शङ्कानिवृत्तये **नारायणायेति** । अयं शब्दो देवदत्तादिशब्दवत् साङ्केतिको न भवति किन्तु

---

१. सुरैरित्यस्यान्वयो न ज्ञायते । क्षीरोदे उपासीन इत्यादि पाठः स्यात् ।

हिरण्यगर्भत्वमुपेत्य मूले सृजस्यशेषं भुवनं स एव ।
नारायणात्मन् परिपासि भूयो जहार चान्ते भगवन् शिवात्मन् ॥ १५ ॥
तं त्वा यदोर्वंशकरं सुरेशं जानेऽवतीर्णं भुवने वृषाकपिम् ।
अहं हि भृत्यस्तव वैनतेयो ब्रूहि क्रियां किं करवाणि देव ॥ १६ ॥

श्रीशुक उवाच

**इत्युक्त्वा देवदेवेशं प्रणिपत्य विहङ्गराट् । जानुनी धरणीं कृत्वा तस्थौ प्राञ्जलिरग्रतः ॥ १७ ॥**
**तं दृष्ट्वा यादवश्रेष्ठो गरुडं पक्षिपुङ्गवम् । प्रीत्युत्फुल्लमुखो दोर्भ्यां पस्पर्शाङ्गं तदुत्तमम् ॥ १८ ॥**
**गच्छ भद्र यथाकाममेहि काले मया स्मृतः । इत्युक्त्वा तं विसृज्योभावीश्वरौ रामकेशवौ ॥ १९ ॥**
**फलमूलकृताहारौ पीतनिर्झरवारिणौ । अवरुह्य गिरेः भृङ्गात् करवीरपुरं गतौ ॥ २० ॥**
**तत्र तौ चतुरो मासानुषित्वा भरतर्षभ । महत्या सेनया सार्धं जग्मतुर्मधुरां पुरीम् ॥ २१ ॥**

---

गुणनिबद्ध इति भावेनाह– **अखिलेति** । न तर्हि शौर्यादिगुणयोगोऽस्येत्यत्राह **सुरारीति** । राक्षसवत् संहारी चेन्न कोप्येनमाश्रयतीत्यत्राह– **नारायणेति** ।

नारो नरसमुदायस्तदाश्रयो नारायणस्तस्मै । ननु सर्वाश्रयत्वं राजवद् बहिस्थत्वेनोतान्तःस्थत्वेनाहोस्विद् वायुवदुभयरूपेण ? नाद्यः । ''अन्तर्बहिश्च तत्सर्वं व्याप्य नारायणः स्थितः'' इति श्रुतिव्याकोपात् । न द्वितीयः । कर्मभोगप्राप्तेः । न तृतीयः । अखण्डात्मनो द्वित्वानुपपत्तेरिति तत्राह– **अखिलेति**[१] ॥ १४ ॥

सृष्टिसंहारयोश्चतुर्मुखपञ्चमुखहेतुत्वोक्तेरस्याखिलहेतुत्वं कथमिति तत्राह– **हिरण्यगर्भत्वमिति** । मूले आदिकाले हिरण्यगर्भं सृष्ट्वा तदन्तर्यामित्वेन तन्नामवाच्यत्वमुपेत्य । भूयः पश्चान्नारायणात्मन् नारायणनामपरमात्मन् । पुनः शिवात्मानं सृष्ट्वा तदन्तर्यामित्वेन तन्नामवाच्यस्त्वम् । तदुक्तम्– ''ब्रह्मस्थो ब्रह्मनामासौ रुद्रस्थो रुद्रनामकः'' इत्यादि ॥ १५ ॥

एवंविधो विष्णुस्त्वमित्याह– **तं त्वेति** । भुवने प्रसिद्धं वृषाकपिं विष्णुमवतीर्णं तत्सृष्ट्यादिहेतुं च जान इत्यन्वयः । ''विष्णौ रुद्रे वृषाकपिः'' इत्यतो यदोर्वंशकरमित्यादि क्रियाविशेषणं कर्तव्यम् । धर्मप्रेरकत्वेन फलवर्षणाद् वृषः अकस्यासुखस्य पातृत्वादकपिः । यद्वा अकात् दुःखात् शरणागतं जगत् पातीति वृषाकपिरिति ॥ १६-१७ ॥

तस्य उत्तमम् अङ्गम् शिर इत्यर्थः ॥ १८-२५ ॥

---

१. अस्पष्टमिदम् ।

शृगालं निहतं श्रुत्वा मागधः क्रोधविह्वलः । आजगाम कुरुश्रेष्ठ महत्या सेनया वृतः ॥ २२ ॥
तेन सार्धमभूद् युद्धं सप्ताहं रामकृष्णयोः । तदा पराजितो युद्धे मागधो बहुसैनिकः ॥ २३ ॥
जगाम मागधानेव बहुभिः क्षत्रियैः सह ॥ रामकृष्णौ च धर्मज्ञौ सूतमागधबन्दिभिः ॥ २४ ॥
स्तूयमानौ विविशतुः सानुगौ मधुरां पुरीम् । एवं सप्तदशकृत्वस्तावदक्षौहिणीबलः ॥ २५ ॥
युयुधे मागधो राजा यदुभिः कृष्णपालितैः । अक्षिण्वत बलं सर्वं वृष्णिभिः कृष्णतेजसा ॥२६॥
हतेषु तेष्वनीकेषु त्यक्तोऽयादरिभिर्नृप । अष्टादशमसङ्ग्रामे आगामिनि तदन्तरा ॥ २७ ॥
नारदप्रेषितो वीरो यवनः प्रत्यदृश्यत । रुरोध मधुरामेत्य तिसृभिर्म्लेच्छकोटिभिः ॥ २८ ॥
नृलोके चाप्रतिद्वन्द्वो वृष्णीन् श्रुत्वाऽऽत्मसंमतान् । तं दृष्ट्वाऽचिन्तयत् कृष्णः सङ्कर्षणसहायवान् ॥
अहो यदूनां वृजिनं प्राप्तं ह्युभयतो महत् । यवनोऽयं निरुन्धेऽस्मानद्य श्वो वा महाबलः ॥ ३० ॥
मागधोऽप्येति दुष्टात्मा परश्वो नैव संशयः । आवयोर्युध्यतोरस्य यद्यागच्छेज्जरासुतः ॥ ३१ ॥
बन्धून् वधिष्यत्यथवा नेष्यते स्वपुरं बली । तस्मादद्य विधास्यामो दुर्गं द्विपददुर्गमम् ॥ ३२ ॥
तत्र ज्ञातीन् समाधाय यवनं घातयामहे । इति सम्मन्त्र्य भगवान् दुर्गं द्वादशयोजनम् ॥ ३३ ॥
अन्तःसमुद्रे नगरं कृष्णोऽद्भुतमचीक्लृपत् । दृश्यते यत्र हि त्वाष्ट्रं विज्ञानं शिल्पनैपुणम् ॥ ३४ ॥
रथ्याचत्वरवीथीभिर्यथावास्तु विनिर्मितम् । सुरद्रुमलतोद्यानविचित्रोपवनान्वितम् ॥ ३५ ॥
हेमशृङ्गैर्दिविस्पृग्भिः स्फाटिकाट्टालगोपुरैः । राजतारपुटैः कोष्ठैर्जुष्टं हैमैः स्वलङ्कृतैः ॥ ३६ ॥

---

अक्षिण्वत अक्षीयत ॥२६-२९॥ उभयतो मागधाद् यवनाच्च प्राप्तं वृजिनं दुःखम् ॥३०॥ अस्येति षष्ठी तृतीयार्थे । अनेन सह चावयोर्युध्यतोः ॥ ३१ ॥

दुःखं गच्छत्यस्मिन्निति दुर्गम् । "सुदुरोरधिकरणे" इति गमेर्डप्रत्ययः ॥ विशिनष्टि– **द्विपदेति** । द्वे पदे येषां ते तथा द्विपदः । पदेति निपातो विवक्षितः । मनुष्यैरगम्यमित्यर्थः।
॥ ३२,३३ ॥

त्वष्टुर्विश्वकर्मणो विद्यमानं त्वाष्ट्रम् । किं तद्विज्ञानम् ? अत्राह– **शिल्पनैपुणमिति** । शिल्पविद्यापटुत्वम् ॥ ३४ ॥

रथ्या राजमार्गः । वीथी वणिजां मार्गः । यथावास्तु वास्तुलक्षणमनतिक्रम्य ॥ ३५ ॥

दिविस्पृग्भिः, "हृद्द्युभ्यामुपसङ्ख्यानम्" इत्यलुक्समासः। राजतैः रजतमयैररपुटैर्लोह-विशेषैः क्लृप्तैः कोष्ठैरन्तर्गृहैः ॥ ३६ ॥

रत्नकूटैर्गृहैर्हैमैर्महामरकतस्थलैः । वास्तोष्पतीनां च गृहैर्वलभीभिश्च निर्मितम् ॥ ३७ ॥
चातुर्वर्ण्यजनाकीर्णं यदूनां च गृहैर्लसत् । सुधर्मां पारिजातं च महेन्द्रः प्राहिणोद्धरेः ॥ ३८ ॥
यत्र चावस्थितो मर्त्यो मर्त्यधर्मैर्वियुज्यते । यत् प्रियं देवदेवस्य विष्णोः क्षीरोदवासिनः ॥ ३९ ॥
श्यामैककर्णान् वरुणो हयान् शुक्लान् मनोजवान् । ददौ सहस्रसङ्ख्यातान् देवदेवाय तोयराट् ।४०।
अष्टौ निधिपतिः कोशान् रत्नपूर्णानविक्षयान् । तथाऽन्ये लोकपालाश्च ददुः स्वाधिकृतं धनम् ॥
यद्यद् भगवता दत्तमाधिपत्यं स्वसिद्धये[1] । सर्वं प्रत्यर्पयामासुर्हरौ भूमिगते नृप ॥ ४२ ॥
तत्र योगप्रभावेण नीत्वा स्वान् भगवान् हरिः । मधुरायाश्च रामेण कृष्णः समनुमन्त्रितः ॥
निर्जगाम पुरद्वारात् पद्ममाली निरायुधः ॥ ४३ ॥

॥ इति त्रिपञ्चाशत्तमोऽध्यायः ॥

---

## ॥ अथ चतुःपञ्चाशत्तमोऽध्यायः ॥

### श्रीशुक उवाच

तं विलोक्य विनिष्क्रान्तमुज्जिहानमिवोडुपम् । दर्शनीयतमं श्यामं पीतकौशेयवाससम् ॥ १ ॥
श्रीवत्सवक्षसं भ्राजत्कौस्तुभामुक्तकन्धरम् । पृथुदीर्घचतुर्बाहुं नवकञ्जारुणेक्षणम् ॥ २ ॥
नित्यप्रमुदितं श्रीमत्सुकपोलं शुचिस्मितम् । मुखारविन्दं बिभ्राणं स्फुरन्मकरकुण्डलम् ॥ ३ ॥

---

रत्नकूटैः रत्नशृङ्गैः वास्तोष्पतीनां वास्तुदेवतानाम् ॥ ३७,३८ ॥ मर्त्यधर्मैर्जरादिलक्षणैः । क्षीरोदशायिनो विष्णोर्यत् प्रियं हृद्यं तदपि ददौ ॥ ३९,४० ॥

निधिपतिः कुबेरः । अष्टौ कोशान् निधीन् । अविक्षयानव्ययान् । स्वाधिकृतं स्वकीयत्वेनाभिमतम् ॥ ४१ ॥

क्षीरोदधिमथने हरिणा दत्तम् ॥ ४२ ॥ योगप्रभावेण मधुरास्थितपदार्थराशिर्यथा द्वारकास्थितो भवति तथा करणसामर्थ्येन । रामेण समनुमन्त्रितः सहितः ॥ ४३ ॥

॥ इति श्रीमद्भागवतटीकायां श्रीविजयध्वजतीर्थकृतायां पदरत्नावल्यां दशमस्कन्धे उत्तरार्धे त्रिपञ्चाशत्तमोऽध्यायः ॥

---

उज्जिहानमुद्यन्तम् ॥ १-५ ॥

---

१. तदर्पणफलं लपति - स्वसिद्धये स्वस्वरूपलाभायेति -स.

वासुदेवो ह्ययमिति पुमान् श्रीवत्सलाञ्छनः । चतुर्भुजोऽरविन्दाक्षो वनमाल्यतिसुन्दरः ॥ ४ ॥
लक्षणैर्नारदप्रोक्तैर्नान्यो भवितुमर्हति । निरायुधश्चरन् पद्भ्यां योत्स्येऽनेन निरायुधः ॥ ५ ॥
इति निश्चित्य यवनः प्राद्रवन्तं पराङ्मुखम् । अन्वधावज्जिघृक्षुस्तं दुरापमपि योगिनाम् ॥ ६ ॥
हस्तप्राप्तमिवात्मानं हरिणा स पदेपदे । नीतो दर्शयता दूरं यवनेशोऽद्रिकन्दरम् ॥ ७ ॥
पलायनं यदुकुले जातस्य तव नोचितम् । इति क्षिपन्ननुगतो नैनं प्रापाहताशुभः ॥ ८ ॥
एवं क्षिप्तोऽपि भगवान् प्राविशद् गिरिकन्दरम् । सोऽपि प्रविष्टस्तत्रान्यं शयानं ददृशे नरम् ॥९॥
नन्वसौ दूरमानीय शेते मामिह साधुवत् । इति मत्वाऽच्युतं मूढस्तं पदा समताडयत् ॥ १० ॥
स उत्थाय चिरं सुप्तः शनैरुन्मील्य लोचने । दिशो विलोकयन् पार्श्वे तमद्राक्षीदवस्थितम् ॥११॥
स तावत् तस्य रुष्टस्य दृष्टिपातेन भारत । देहजेनाग्निना दग्धो भस्मसादभवत् क्षणात् ॥ १२ ॥

राजोवाच

को नाम स पुमान् ब्रह्मन् कस्य किंवीर्य एव वा । कस्माद् गुहागतः शिश्ये किन्तेजा यवनार्दनः[१]॥

श्रीशुक उवाच

स इक्ष्वाकुकुले जातो मान्धातृतनयो महान् । मुचुकुन्द इति ख्यातो ब्रह्मण्यः सत्यसङ्गरः ॥१४॥
स याचितः सुरगणैरिन्द्राद्यैरात्मरक्षणे । असुरेभ्यः परित्रस्तैस्तद्रक्षां सोऽकरोच्चिरम् ॥ १५ ॥
लब्ध्वा गुहं ते स्वःपालं मुचुकुन्दमथाब्रुवन् । राजन् विरमतां कृच्छ्राद् भवान् नः परिपालनात् ॥
नरलोकं परित्यज्य राज्यं निहतकण्टकम् । अस्मान् पालयतो वीर कामास्ते सर्व उज्झिताः ॥१७॥
सुता महिष्यो भवतो ज्ञातयोऽमात्यमन्त्रिणः । प्रजाश्च तुल्यकालीना नाधुना सन्ति कालिताः ॥

---

जिघृक्षुर्ग्रहणेच्छुः ॥ ६ ॥ दूरमद्रिकन्दरं प्रति नीतः । पदेपदे हस्तप्राप्तमिवात्मानं, दर्शयित्वेति शेषः । दर्शयता आत्मानमिति शेषः ॥ ७ ॥ अहताशुभः अनष्टपापः ॥ ८-१२ ॥ कस्य, पुत्र इति शेषः । यवनमर्दितवान् हिंसितवान् ॥ १३,१४ ॥

तेषां सुराणां रक्षाम् ॥१५॥ स्वःपालं स्वर्गरक्षाकरम् । परिपालनाज्जातात् कृच्छ्रात् ॥ १६ ॥ उज्झिताः त्यक्ताः ॥ १७ ॥ तुल्यकालीनास्तत्कालसमानजाताः । कालिताः कालेन विनाशिताः ॥ १८ ॥

---

१. किंतेजो यवनार्दनमित्यपि स.पाठः । यवनार्दनमिति तेजसो विशेषणम् ।

कालो बलीयान् बलिनां भगवानीश्वरोऽव्ययः । प्रजाः कालयते क्रीडन् पशुपालो यथा पशून् ॥
वरं वृणीष्व भद्रं ते ऋते कैवल्यमात्मनः । एक एवेश्वरस्तस्य भगवान् विष्णुरव्ययः ॥ २० ॥
एवमुक्तः स वै देवानभिवाद्य महायशाः । अयाचत गुहाविष्टो निद्रां तु बहुकालिकीम् ॥ २१ ॥
तथेत्युक्तस्तु तैर्देवैर्मुचुकुन्दो महामनाः । अशयिष्ट गुहाविष्टो निद्रया देवदत्तया ॥ २२ ॥
यवने भस्मसान्नीते भगवान् सात्वतर्षभः । आत्मानं दर्शयामास मुचुकुन्दाय धीमते ॥ २३ ॥
तमालोक्य घनश्यामं पीतकौशेयवाससम् । श्रीवत्सवक्षसं भ्राजत्कौस्तुभेन विराजितम् ॥ २४ ॥
चतुर्भुजं रोचमानं वैजयन्त्या च मालया । चारुप्रसन्नवदनं स्फुरन्मकरकुण्डलम् ॥ २५ ॥
प्रेक्षणीयं त्रिलोकस्य सानुरागस्मितेक्षणम् । अपीच्यवयसं मत्तमृगेन्द्रोदारविक्रमम् ॥ २६ ॥
पर्यपृच्छन्महाबुद्धिस्तेजसा तस्य विस्मितः । शङ्कितः शनकै राजा दुर्धर्षमतितेजसा ॥ २७ ॥

मुचुकुन्द उवाच

को भवानिह सम्प्राप्तो विपिने गिरिगह्वरे । पद्भ्यां पद्मपलाशाभ्यां विचरस्युरुकण्टके ॥ २८ ॥
किंस्वित्तेजस्विनां तेजो भगवांस्त्वं विभावसुः। सूर्यः सोमो महेन्द्रो वा लोकपालोऽपरोऽपि वा ॥
मन्ये त्वां देवदेवानां त्रयाणां पुरुषर्षभम् । यद् भाससे[1] गुहाध्वान्तं प्रदीपः प्रभया यथा ॥ ३० ॥
शुश्रूषतामव्यलीकमस्माकं नरपुङ्गव । स्वजन्मकर्मगोत्रं वा कथ्यतां यदि रोचते ॥ ३१ ॥

---

कालयते उभयपदी । कालः क इति तत्राह– **भगवानिति** । स्वरूपतोऽवयतोऽपि नाशरहितः ॥ १९, २० ॥ आत्मनस्तु बहुकालिकीम् बहुकालभोग्याम् ॥ २१-२५ ॥ त्रिलोकस्य मध्ये दर्शनीयगुणम् ॥ २६ ॥ अतितेजसा अधिकतेजसा ॥ २७ ॥ गिरिगह्वरे प्रवेष्टुमशक्ये ॥ २८ ॥

तेजस्विनां ज्योतिष्मतां पुञ्जीभूतमेकं तेजः किंस्वित् ? सामान्योक्तं विशिनष्टि– भगवानिति ॥ २९ ॥

त्रयाणां ब्रह्मविष्णुशिवानां मध्ये पुरुषर्षभं पुरुषश्रेष्ठं विष्णुं मन्ये । यद्वा त्रयाणां ब्रह्मरुद्रेन्द्राणां त्रेताग्नीनां वा[2] । तत्र हेतुमाह **यदिति** । गुहाध्वान्तमित्युपलक्षणम् । ब्रह्माण्ड-गुहाव्यापितिमिरमपि । प्रदीपो न गृहान्तवर्तिज्योतीरूपं परं न गृह्यते किन्तु सूर्योऽपि[3] ॥ ३० ॥

---

१. यद् बाधसे इति पाठः सरलो विरलार्थश्च -स. २. अस्पष्टमिदम् । 'त्रेधाग्नीनां' इति पाठः स्याद् वा ?
३. अस्पष्टमिदम् । प्रदीपशब्देन न केवलं दीपोऽपितु सूर्योपि गृह्यत इत्याशयः स्यात् ।

वयं तु पुरुषव्याघ्र ऐक्ष्वाकाः क्षत्रबन्धवः । मुचुकुन्द इति प्रोक्तो यौवनाश्वात्मजः प्रभो ॥ ३२ ॥
चिरं प्रजागरश्रान्तो निद्रयोपहतेन्द्रियः । शयेऽस्मिन् विजने कामं केनाप्युत्थापितोऽधुना ॥३३॥
सोऽपि भस्मीकृतो नूनमात्मीयेनैव पाप्मना । अनन्तरं भवान् श्रीमान् लक्षितोऽमित्रशासनः ॥
तेजसा तेऽविषह्येण भूरि द्रष्टुं न शक्नुमः । हतौजसो महाभाग माननीयोऽसि देहिनाम् ॥ ३५ ॥
एवं सुभाषितो राज्ञा भगवान् भूतभावनः । प्रत्याह प्रहसन् वाण्या मेघह्रादगभीरया ॥ ३६ ॥

श्रीकृष्ण उवाच

जन्मकर्माभिधानानि सन्ति मेऽङ्ग सहस्रशः । न शक्यन्तेऽनुसङ्ख्यातुमनन्तत्वान्ममापि हि ॥३७॥
कश्चिद्रजांसि विममे पार्थिवान्युरुजन्मभिः । गुणकर्माभिधानानि न मे जन्मानि कर्हिचित् ॥३८॥
कालत्रयोपपन्नानि जन्मकर्माणि मे नृप । अनुक्रमन्तो नैवान्तं गच्छन्ति परमर्षयः ॥ ३९ ॥
तथाप्यद्यतनान्यङ्ग शृणुष्व गदतो मम । विज्ञापितो विरिञ्चेन पुराऽहं धर्मगुप्तये ॥ ४० ॥
भूमेर्भारायमाणानामसुराणां क्षयाय च । अवतीर्णो यदुकुले गृह आनकदुन्दुभेः ॥ ४१ ॥
वदन्ति वासुदेवेति वसुदेवसुतं हि माम् । कालनेमिर्हतः कंसः प्रलम्बाद्याश्च सद्द्विषः ॥ ४२ ॥
अयं च यवनो दग्धो राजंस्ते तिग्मचक्षुषा । सोऽहं तवानुग्रहार्थं गुहामेतामुपागतः ॥ ४३ ॥
प्रार्थितः प्रचुरं पूर्वं त्वयाऽहं भक्तवत्सलः । वरान् वृणीष्व राजर्षे सर्वान् कामान् ददामि ते ॥४४॥
मां प्रपन्नो जनः कश्चिन्न भूयोऽर्हति शोचितुम् ॥ ४५ ॥

श्रीशुक उवाच

इत्युक्तस्तं प्रणम्याह मुचुकुन्दो मुदान्वितः । ज्ञात्वा नारायणं देवं गर्गवाक्यमनुस्मरन् ॥ ४६ ॥

---

अव्यलीकं सत्यम् । शुश्रूषतां श्रोतुकामानाम् ॥ ३१ ॥ ऐक्ष्वाका इक्ष्वाकुकुले जाताः ॥ ३२-३४ ॥ हतौजसः नष्टतेजसः ॥ ३५ ॥ ह्रादो निःस्वनः ॥ ३६ ॥

ममापि सङ्ख्यातुं न शक्यन्ते । कुतः? अनन्तत्वात् । अतोऽनन्तानामनन्ता इत्येव परिसंङ्ख्यानम् । अन्यथानन्तत्वहानिः ॥ ३७ ॥

अनन्तत्वमाह– कश्चिदिति । कश्चित् क व ब्रह्मैव । सोऽपि मे जन्मानि गुणकर्माभिधानानि न विममे ॥ ३८ ॥ अनुक्रमन्तो निरन्तरं पठन्तः ॥ ३९-४० ॥

भारायमाणानां भारवदाचरताम् । "कर्तुः क्यङ् सलोपश्च" इति पाणिनिः । गृहे भार्यालक्षणे ॥४१॥ निमित्तं कथयति– **वसुदेवेति** ॥४२ ॥ तिग्मचक्षुषा चण्डेनाग्निना ॥४३-४६॥

मुचुकुन्द उवाच

विमोहितोऽयं जन ईश मायया त्वदीयया त्वां न भजत्यनर्थदृक् ।
सुखाय दुःखप्रभवेषु सज्जते गृहेषु योषित् पुरुषश्च वञ्चितः ॥ ४७ ॥
लब्ध्वा जनो दुर्लभमत्र मानुषं कथञ्चिदप्यङ्गमयत्नतोऽनघ ।
पादारविन्दं न भजत्यसन्मतिर्गृहान्धकूपे पतितो यथा पशुः ॥ ४८ ॥
ममैष कालोऽजित निष्फलो गतो राज्यश्रियोन्नद्धमदस्य भूपतेः ।
मर्त्यात्मबुद्धेः सुतदारकोशेष्वासज्जमानस्य दुरन्तचिन्तया ॥ ४९ ॥
कलेवरेऽस्मिन् घटकुड्यसन्निभे निरूढमानो नरदेव इत्यहम् ।
वृतो रथेभाश्वपदात्यनीकपैर्गां पर्यटंस्त्वामगणय्य दुर्मदः[१] ॥ ५० ॥
प्रमत्तमुच्चैरितिकृत्यचिन्तया प्रवृद्धलोभं विषयेषु लालसम् ।
त्वमप्रमत्तः सहसाऽभिपद्यसे क्षुल्लेलिहानोऽहिरिवाखुमन्तकः ॥ ५१ ॥
पुरा रथैर्हेमपरिष्कृतैश्चरन् मतङ्गजैर्वा नरदेवसंज्ञितः ।
स एव कालेन दुरत्ययेन वै कलेवरो विट्कृमिभस्मसञ्ज्ञितः ॥ ५२ ॥

---

अनर्थदृक् स्वपुरुषार्थदर्शी न भवतीत्यर्थः । यद्वा अनर्थं संसारमर्थं पश्यतीति । दुःखप्रभवेषु दुःखहेतुषु । पुरुषेण वञ्चिता योषित् तया पुनः पुरुषश्च वञ्चितः ॥ ४७ ॥

मायया मोहितत्वमुपपादयति– **लब्ध्वेति** । अत्र कर्मभूमौ । मानुषमङ्गं देहम् । असत्सु विषयेषु मतिर्यस्य स तथा ।"अन्धकूपे पतितः पशुर्यथा स्वरूपं न भजति तथा गृहलक्षणान्धकूपे ॥ ४८ ॥ मर्त्यात्मबुद्धेर्देहात्मबुद्धेः ॥ ४९ ॥

देहात्मबुद्धित्वं दर्शयति– **कलेवर** इति । दुरन्तविषयचिन्तया दुष्टो मदो विद्याभिजनलक्षणो यस्य स तथा ॥ ५० ॥

धनादिनिमित्तमदस्य दुष्टत्वं कथमत्राह– **प्रमत्तमिति** । क्षुधा जिह्वया सृक्किणी लेलिहानः । ॥५१॥

किमत्र प्रमाणमित्यतः प्रत्यक्षमेवेत्याह **पुरेति** । यो देहः पुरा नरदेवसंज्ञितः स एव दुरत्ययेन कालेन विट्कृमिभस्मसंज्ञितः, भवतीति शेषः । श्वादिभक्षितो विष्ठासंज्ञितो भवति । अदग्धः कृमिसंज्ञितः । दग्धः भस्मसंज्ञितः इति विशेषः ॥ ५२ ॥

---

१. गां पर्यटंस्त्वाऽगणयन् सुदुर्मद इत्यपि स पाठः ।

निर्जित्य दिक्चक्रमभूतविग्रहो वरासनस्थः समराजवन्दितः ।
गृहेषु मैथुन्यपरेषु योषितां क्रीडामृगः पूरुष ईश गीयते ॥ ५३ ॥
करोति कर्माणि तपःसुनिष्ठितो निवृत्तभोगस्तदपेक्षया ददत् ।
पुनश्च भूयाय महीश राधसे प्रवृद्धतर्षो न सुखाय कल्पते ॥ ५४ ॥
भवापवर्गो भ्रमतो यदा भवेज्जनस्य तर्ह्यच्युत सत्समागमः ।
सत्सङ्गमो यर्हि तदैव सद्गतौ परावरेशे त्वयि जायते मतिः ॥ ५५ ॥
मन्ये ममानुग्रह ईश ते कृतो राज्यानुबन्धापगमो यदृच्छया ।
यः प्रार्थ्यते साधुभिरेकचर्यया वनं विविक्षुद्भिरखण्डभूमिपैः ॥ ५६ ॥
न कामयेऽन्यं तव पादसेवनादकिञ्चनप्रार्थ्यतमाद् वरं विभो ।
आराध्य कस्त्वां ह्यपवर्गदं हरे वृणीत आर्यो वरमात्मबन्धनम् ॥ ५७ ॥

---

इदं च लज्जाकरमित्याह– **निर्जित्येति** । दिक्चक्रं दिङ्मण्डलम् । अभूतविग्रहः अजातयुद्धः । वयसा कुलेन दानेन विद्यया च समै राजभिर्वन्दितः । बहिरेवंविधः पुरुषो मैथुन्यपरेषु ग्राम्यसुखमात्ररतेषु गृहेषु योषितां क्रीडामृगो लीलामृगो गीयत इत्यन्वयः[1] ॥ ५३ ॥

त्वद्भक्तिरहितस्य पुंसः कर्मकरणं गजस्नानतुल्यमिति भावेनाह– **करोतीति** । स पुनश्च धनादि ददत् भूयाय भूयसे महते राधसे सम्पदे प्रवृद्धतर्षः अत्युद्रिक्ततृष्णः सुखाय न कल्पत इत्यन्वयः । सुखं नाम मुक्तिलक्षणम् ॥ ५४ ॥

तर्हि कदा मोक्षः स्यात् ? अत्राह– **भवेति** । हे अच्युत नानायोनिषु भ्रमतो जनस्य यदा सत्सङ्गमः तर्हि तदा भवापवर्गः स्यात् । भगवज्ज्ञानफलं मोक्षः कथमन्यतः स्यादिति तत्राह– **सत्सङ्गम इति** । यर्हि यदा सत्सङ्गमः स्यात् तदैव त्वयि श्रवणादिलक्षणः सङ्गमः स्यात् । तस्मात् परावरेशे मुक्तामुक्तस्वामिनि त्वयि मतिस्त्वत्प्रसादजनकं ज्ञानं स्यात् ॥ ५५ ॥

अतो ज्ञानद्वारा सत्सङ्गमो मुक्तिसाधनमसत्सङ्गमोऽनर्थहेतुरिति गृहादिसङ्गत्यागः सत्सङ्गहेतुरित्याशयेनाह– **मन्य इति** । ते त्वया राज्यानुबन्धापगमः राज्यस्य तदनुबन्धकस्य कोशादेश्चापगमस्त्यागः । एकचर्यया ‘‘एक एव चरेद् भिक्षुः’’ इति वचनात् एकाकित्वेन चरणम् । अखण्डभूमिपैः सार्वभौमैः विविक्षुद्भिः[2] प्रवेष्टुमिच्छद्भिः ॥ ५६ ॥

---

१. पुरुषो मैथुन्यं ग्राम्यधर्मस्तदेव परं येषु तेषु गृहेषु योषितां क्रीडामृगो लीलामृगः, कपिरिति यावत्, गीयते -स. २. विविक्षुशब्दपर्यायोऽयं विविक्षुच्छब्दः -स.

तस्माद् विसृज्याशिष ईश सर्वशो रजस्तमःसत्वगुणानुबन्धनाः ।
निरञ्जनं निर्गुणमद्वयं परं त्वां ज्ञप्तिमात्रं पुरुषं व्रजाम्यहम् ॥ ५८ ॥
चिरमिह वृजिनार्तस्तप्यमानोऽनुतापैरवितृष उरुकृच्छ्रे लब्धशान्तिः कथञ्चित् ।
शरणद समुपेतस्त्वत्पदाब्जं परात्मन्नभयमृतमशोकं पाहि मा पन्नमीश ॥ ५९ ॥

श्री भगवानुवाच

**सार्वभौम महाराज मतिस्ते विमलोर्जिता । वरैः प्रलोभितस्यापि न कामैर्विहता यतः ॥ ६० ॥**
**प्रलोभितो वरैर्यत् त्वमप्रमादाय विद्धि तत् । न धीर्मय्येकभक्तानामाशीर्भिर्भिद्यते क्वचित् ॥ ६१ ॥**
**ज्ञानिनामेकभक्तानां प्राणायामादिभिर्मनः । न क्षीणवासनं राजन् दृश्यते क्वचिदुत्थितम् ॥ ६२ ॥**
**विचरस्व महीं कामं मय्यावेशितमानसः । अस्त्वेव नित्यदा तुभ्यं भक्तिर्मय्यनपायिनी ॥ ६३ ॥**
**क्षत्रधर्मस्थितो जन्तून् वधीर्मृगयादिभिः । समाहितस्तत्तपसा जह्यघं मामुपाश्रितः ॥ ६४ ॥**
**जन्मन्यनन्तरे राजन् सर्वभूतसुहृत्तमः । भूत्वा द्विजवरस्त्वं वै मामुपेष्यसि केवलम् ॥ ६५ ॥**

॥ इति चतुःपञ्चाशत्तमोऽध्यायः ॥

---

फलितमाह– **नेति** । आर्यो ज्ञानी । आत्मनः स्वस्य बन्धनं संसारकारणं वरम् ॥ ५७ ॥

तर्हि किं करोषीति तत्राह– **तस्मादिति** । आशिषः स्वर्गादिसम्पदः । रजसा मानुषः, तमसा राक्षसादिः, सत्वेन देवादिः । ज्ञप्तिमात्रं ज्ञानघनम् ॥ ५८ ॥

अधुना कर्तव्यं किम्? तत्राह– **चिरमिति** । वृजिनार्तः दुःखक्लिष्टः । एतदेव विवृणोति– **तप्यमान इति** । अवितृषः सतृष्णः । उरुकृच्छ्रविषये कथंचिल्लब्धशान्तिः लब्धमोक्षः, प्राप्तत्याग इत्यर्थः । ऋतं शश्वदेकप्रकारम् पन्नं संसारकूपे पतितम् । उरुकृच्छ्रे वृजिनार्त इति वा ॥ ५९,६० ॥

वरैः प्रलोभित इति यत् तदप्रमादाय विद्धि । नैतच्चित्रमित्याशयेनाह– **नेति** ॥ ६१ ॥ क्षीणा दुष्कर्मवासना यस्मिन् तत् तथा । उत्थितं विषयाभिमुखम् ॥ ६२-६४ ॥ केवलं मां ''केवलो निर्गुणश्च'' इति श्रुतेः ॥ ६५ ॥

॥ इति श्रीमद्भागवतटीकायां श्रीविजयध्वजतीर्थकृतायां पदरत्नावल्यां दशमस्कन्धे उत्तरार्धे चतुःपञ्चाशत्तमोऽध्यायः ॥

## ॥ अथ पञ्चपञ्चाशत्तमोऽध्यायः ॥

### श्रीशुक उवाच

इत्थं सोऽनुगृहीतोऽङ्ग कृष्णेनेक्ष्वाकुनन्दनः । तं परिक्रम्य सन्नम्य निश्चक्राम गुहामुखात् ॥ १ ॥
स वीक्ष्य क्षुल्लकान् मर्त्यान् पशून् वीरुद्वनस्पतीन् । मत्वा कलियुगं प्राप्तं जगाम दिशमुत्तराम् ॥२॥
तपःश्रद्धायुतो वीरो निःसङ्गो मुक्तसंशयः । समाधाय मनः कृष्णे प्राविशद् गन्धमादनम् ॥ ३ ॥
बदर्याश्रममासाद्य नरनारायणाश्रमम् । सर्वद्वन्द्वसहः शान्तस्तपसाऽऽराधयद्धरिम् ॥ ४ ॥
भगवान् पुनराव्रज्य मधुरां यवनाहृतम् । हत्वा म्लेच्छबलं निन्ये तदीयं द्वारकां धनम् ॥ ५ ॥
नीयमाने धने गोभिर्नृभिश्चाच्युतचोदितैः । आजगाम जरासन्धस्त्रयोविंशत्यनीकपः ॥ ६ ॥
ततो राजा जरासन्धः कालान्तानलसन्निभः । विधाय मकरव्यूहं रथनागाश्वपत्तिमत् ॥
अन्तश्चकार गोविन्दं व्यूहस्य निमिषान्तरे ॥ ७ ॥
ततो विलोक्य गोविन्दो वृक्षमुत्पाट्य रंहसा । गजान् रथान् हयान् युद्धे पोथयामास दुर्मदः ॥८॥
कृष्णेन हन्यमानास्ते वृक्षेण रिपुकुञ्जराः । पेतुर्गतासवो भूमौ वज्रनुन्ना इवाद्रयः ॥ ९ ॥
रथाश्च रथिभिर्युक्ताः सतुरङ्गाः सचोदकाः । निष्पिष्टा इव न क्वापि दृश्यन्ते कुरुसत्तम ॥ १० ॥
रामस्तु मुष्टिना चाजौ कुञ्जरान् मदशालिनः । जघान कुपितः शैलान् वज्रेणेव सुरेश्वरः ॥ ११ ॥
राममुष्टिप्रहारेण विकीर्णस्यन्दना नृप । न व्यदृश्यन्त भूपृष्ठे चूर्णिताः शीर्णपर्णवत् ॥ १२ ॥
यवनस्य धनं विश्वं गच्छन्तं द्वारकामनु ॥ निहत्य यादवान् विश्वांस्तद् गृहीत्वा जरासुतः ॥१३॥
अभ्यवर्तत सङ्ग्रामे रामकृष्णौ कुरूद्वह । विलोक्य वेगरभसं रिपुसैन्यस्य माधवौ ॥ १४ ॥
तं चापतन्तमालोक्य सहितं सबलैर्नृपैः । कीर्यमाणौ शरौघेण वृष्ट्येव करिपोतकौ ॥ १५ ॥

---

इक्ष्वाकोर्वंशं नन्दयतीति इक्ष्वाकुनन्दनः । सन्नम्य सम्यङ् नत्वा ॥ १ ॥ क्षुल्लकान् गुणतः परिमाणतश्चाल्पमानान् ॥ २,३ ॥ इदं तत्वमुतातत्वमिति संशयो मुक्तो येन स तथा ॥ ४ ॥ प्रकृतमनुसरति – भगवानिति । यवनेनाहृतमानीतम् ॥ ५ ॥ त्रयोविंशत्यनीकपः त्रयोविंशदक्षौहिणीपतिः ॥ ६ ॥ रथनागाश्वपत्तिमदिति क्रियाविशेषणम् । रथादिमन्तमिति व्यत्ययेन वा योज्यम् ॥ ७ ॥ दुर्मदो यथा जन्तून् हन्ति तथा । लुप्तोपमम् ॥ ८ ॥ अद्रयो गिरयः ''अद्रयोऽर्कगिरिर्द्रुमा'' इति ॥ ९ ॥ सतुरङ्गाः सचोदकाः ससादिनः, निष्पिष्टाः हताः ॥ १०-१२ ॥

यादवैर्द्वारकां गच्छन्तं नीयमानं यवनस्य विश्वं धनं दृष्ट्वा अनुद्रुत्य यादवान् निहत्य निर्जित्य ॥ १३ ॥ वेगरभसं वेगसम्भ्रमम् ॥ १४-१७ ॥

विरथौ विप्रहरणौ विवर्माणौ विसैनिकौ ॥ मनुष्यचेष्टामापन्नौ राजन् दुद्रुवतुर्द्रुतम् ॥ १६ ॥
विहाय वित्तं प्रचुरमभीतौ भीरुभीतवत् । पद्भ्यां पद्मपलाशाभ्यां चेरतुर्बहुयोजनम् ॥ १७ ॥
पलायमानौ तौ दृष्ट्वा मागधः प्रहसन् बली । अन्वधावद् रथानीकैरीशयोरप्रमाणवित् ॥ १८ ॥
प्रहृत्य वीरौ विश्रान्तौ करवीरपुरे निशि । तावारुरुहतुर्वीरौ गोमन्तमुदिते रवौ ॥ १९ ॥
सिद्धचारणगन्धर्वविद्याधरनिषेवितम् । आरुह्य शैलं गोमन्तं रामकृष्णौ त्वरान्वितौ ॥ २० ॥
प्रवर्षणाख्यं तच्छृङ्गं यत्राब्दा नित्यवर्षिणः । तत्र तावासतू राजन् फलमूलाशनौ सुखम् ॥ २१ ॥
जरासन्धस्तु तुष्टात्मा तावनुद्रुत्य माधवौ । रुरोध शैलं गोमन्तं महत्या सेनया वृतः ॥ २२ ॥
स भूपालान्समाहूय स्वानुगान् युद्धदुर्मदान् । कलिङ्गं कुञ्जरपतिं सुराष्ट्राधिपतिं तथा ॥ २३ ॥
जयद्रथं सिन्धुपतिं सोमदत्तं च कौरवम् । गान्धारराजं शकुनिं वैदर्भं रुग्मिमेव च ॥ २४ ॥
सुदक्षिणं च काम्बोजं विराटं मत्स्यभूपतिम् । एतानाज्ञापयामास पूर्वस्यां दिशि भूपतीन् ॥ २५ ॥
पाञ्चालराजं द्रुपदं दमघोषं च चेदिपम् । ब्रह्मदत्तं च शाल्वेशमेकलव्यं निषादपम् ॥ २६ ॥
बाह्लीकं च कुरुश्रेष्ठं युधामन्युं च दुर्जयम् । विन्दानुविन्दावावन्त्यौ काशिराजं च पौण्ड्रकम् ॥२७॥
आज्ञापयामास नृपानेतान् वीरो जरासुतः । गिरिं गोमन्तमारोढुं दक्षिणस्यां दिशि प्रभो ॥ २८ ॥
द्रुमं किम्पुरुषाधीशं दन्तवक्त्रं सहानुजम् । वीरं विदेहराजानं भूरिश्रवसमेव च ॥ २९ ॥
करुशेशं बृहच्चापं दशार्णं च शतध्वजम् । शैव्यं सुवीरराजानं दरदं च महारथम् ॥ ३० ॥
एतान् महीपतीन् राजा जरासन्धोऽमितद्युतिः । प्राह गोमन्तमारोढुं पश्चिमस्यां दिशि द्रुतम् ॥३१॥
त्रिगर्तं च सुशर्माणं बलिनं वेणुधारिणम् ॥ कुलिन्दं च महासत्वं केकयानपि भूपतीन् ॥ ३२ ॥
शिशुपालं च भूपालं भीष्मकं चापि दुर्जयम् । पुरस्कृत्यारुरोहाशु कौबेर्यां मागधो दिशि ॥ ३३ ॥
एवं गोमन्तमारुह्य सर्वर्तुफलपादपम् । विचिन्त्य तत्र सर्वत्राप्यधः शृङ्गात् प्रवर्षणात् ॥ ३४ ॥

चिच्छिदुः सकलान् वृक्षान् नापश्यन् राममाधवौ ।
गिरौ विलीनावाज्ञाय नाधिगम्य पदं नृप ॥ ३५ ॥

ददाह गिरिमेधोभिः समन्तादग्निमुत्सृजन् । तत उत्प्लुत्य तरसा दह्यमानात्तु तावुभौ ॥ ३६ ॥
दशैकयोजनोत्तुङ्गान्निपेततुरधो भुवि । अलक्ष्यमाणौ रिपुणा सानुगेन यदूत्तमौ ॥ ३७ ॥
स्वपुरीं पुनरायातौ समुद्रपरिखां नृप । सोऽपि दग्धाविति मृषा मन्वानो बलकेशवौ ॥ ३८ ॥

---

प्रमाणं ज्ञानबलेयत्तां न वेत्तीति अप्रमाणवित् ॥ १८,१९ ॥ गोमन्तं पर्वतमारुह्य ॥ २० ॥ प्रवर्षणाख्यं तस्य गोमन्तस्य शृङ्गम्, आपतुरिति शेषः । तत्र शृङ्गे आसतुः उपविविशतुः ॥ २१-३५ ॥ एधोभिः काष्ठैः ॥ ३६,३७ ॥

बलमाकृष्य सुमहन्मगधान् मागधो ययौ । अष्टादशे तु सङ्ग्रामे जित्वा यादवसत्तमौ ॥ ३९ ॥
दृप्तः स्वराष्ट्रे न्यवसज्जितदिङ्मण्डलो नृप । माधवौ तु महात्मानौ प्रविश्य द्वारकां पुरीम् ॥ ४० ॥
स्तूयमानौ दिवारात्रं सूतमागधबन्दिभिः । वृतावानन्दबहुलैर्बन्धुभिः सुखमूषतुः ॥ ४१ ॥

॥ इति पञ्चपञ्चाशत्तमोऽध्यायः ॥

---

## ॥ अथ षट्पञ्चाशत्तमोऽध्यायः ॥

### श्रीशुक उवाच

कदाचिद् देवकीपुत्रो रामशैनेयसंयुतः । सेव्यमानः सभायां वै नानादेशेश्वरैर्नृपैः ॥ १ ॥
पाञ्चालराजं द्रुपदं बालैः कुन्तीसुतैर्मृधे । बद्धं शुश्राव कौरव्य ब्राह्मणैः सत्रयाजिभिः ॥ २ ॥
तत् श्रुत्वा हृष्टहृदयः कृतवर्माणमच्युतः । नगरं हस्तिनपुरं प्रेषयामास वेदितुम् ॥ ३ ॥
स गत्वा हस्तिनपुरं वृद्धं कुरुपितामहम् । ददर्श द्रोणविदुरधृतराष्ट्रकृपैर्वृतम् ॥ ४ ॥
युधिष्ठिरं च राजानं चतुर्भिर्भ्रातृभिर्वृतम् । सभाजयामास भृशं कुन्तीं च हृदिकात्मजः ॥ ५ ॥
युधिष्ठिरोऽपि पप्रच्छ सानुगं कंसमर्दनम् । हतं च कालयवनं जरासन्धं च निर्जितम् ॥ ६ ॥
वासुदेवं च निहतं करवीरपुरेश्वरम् । द्वारवत्याश्च करणं नगर्या वरुणालये ॥ ७ ॥
हतौ च हंसडिबिकौ ब्रह्मदत्तं च दुर्जयम् । श्रुत्वा हार्दिक्यवचनाद् यथार्थेन युधिष्ठिरः ॥ ८ ॥
मेने त्रैलोक्यसाम्राज्यं स्वहस्तगतमक्षयम् । सभाजितश्च हार्दिक्यः सुखसम्भाषणादिभिः ॥ ९ ॥
पाण्डुपुत्रैस्तथा कुन्त्या सौहार्दस्नुतबाष्पया । हार्दिक्यस्ताननुज्ञाप्य बान्धवान् पृथया सह ॥ १० ॥
मातृष्वसेयान् धर्मज्ञानभिवाद्य यथावयः । गाङ्गेयेनाभ्यनुज्ञातो धृतराष्ट्रेण चानघ ॥ ११ ॥
विदुरेणाङ्गराजेन द्रोणेन च कृपेण च ॥ प्राज्ञेनाचार्यपुत्रेण तथा दुर्योधनेन च ॥ १२ ॥

---

समुद्र एव परिखा खातं नदी यस्याः सा तथा ॥ ३८-४१ ॥

॥ इति श्रीमद्भागवतटीकायां श्रीविजयध्वजतीर्थकृतायां पदरत्नावल्यां दशमस्कन्धे उत्तरार्धे पञ्चपञ्चाशत्तमोऽध्यायः ॥

---

"परा पूर्वेषां सख्या वृणक्ति वितर्तुराणो अपरेभिरेति" इत्यादिश्रुत्यर्थं दीपकन्यायेन दर्शयत्यस्मिन्नध्याये । तत्र श्रीकृष्णो युद्धे कुन्तीसुतैर्बद्धं पाञ्चालभूपतिं श्रुत्वा हृष्टस्तद्वृत्तान्त-विवित्सया तत्समीपे कृतवर्माणं प्रेषयामासेति कथयति– **कदाचिदिति** ॥ १ ॥

ब्राह्मणैरुक्तम् ॥ २-६ ॥ वासुदेवं शृगालनामानम् । वरुणालये समुद्रे ॥ ७-१५ ॥

कृतवर्माऽभ्यनुज्ञातो निर्गत्य गजसाह्वयात् । द्वारकां वृष्णिनिलयामाजगाम दिनात्यये ।। १३ ।।
स प्रविश्य सभां दिव्यामनेकनृपसेविताम् । दृष्ट्वा गोविन्दमासीनं काञ्चने परमासने ।। १४ ।।
वीजच्चामरसङ्घातस्रहितं वनमालिनम् । आचचष्टेऽखिलं तस्य यथादृष्टं यथाश्रुतम् ।। १५ ।।
वृत्तान्तं कौरवेयाणां नगरे गजसाह्वये ।। १५ ।।
तदाकर्ण्य हरिः सर्वं वृत्तान्तं जगदीश्वरः ।। पौरुषं पाण्डुपुत्राणां बभूवानन्दनिर्भरः ।। १६ ।।

।। इति षट्पञ्चाशत्तमोऽध्यायः ।।

---

## ।। अथ सप्तपञ्चाशत्तमोऽध्यायः ।।

श्रीशुक उवाच

आनर्ताधिपतिः श्रीमान् रेवतो रेवतीं सुताम् । ब्रह्मणा चोदितः प्रादाद् बलायेति पुरोदितम् ।।१।।

राजोवाच

रेवतो नाम राजासौ ब्रह्मणा चोदितः कथम् ।। तदहं श्रोतुमिच्छामि विस्तरेण महामुने ।। २ ।।

श्रीशुक उवाच

रेवतो नाम राजाऽऽसीत् पुरा धर्मार्थतत्त्ववित् । रेवती नाम तस्यैका जज्ञे कन्या यशस्विनी ।।३।।
स ब्रह्माणं ययौ प्रष्टुं कस्मै दास्यामि तामिति । अदत्वा याच्यमानोऽपि नानाजनपदेश्वरैः ।। ४ ।।

---

आनन्दनिर्भरः आनन्दपूर्णो बभूवेत्यनेन पूर्णानन्दत्वं सदातनं, न कादाचित्कमिति सूचयति । ''भूसत्तायाम्'' इति धातोः । सत्तायाः सदातनत्वादिति ।। १६ ।।

।। इति श्रीमद्भागवतटीकायां श्रीविजयध्वजतीर्थकृतायां पदरत्नावल्यां दशमस्कन्धे उत्तरार्धे षट्पञ्चात्तमोऽध्यायः ।।

---

अनित्यत्वात् संसारो हेयस्तदर्थं कामक्रोधादिनिलयाद् देहात् संविदेवाहर्तव्येति दर्शनायोत्तराध्यायत्रयस्य प्रारम्भः । आनर्तविषयाधिपतिः ।। १ ।।

धर्मार्थो धर्मविषयो विष्णुस्तस्य तत्वं वेत्तीति । धर्मस्य अर्थस्य च तत्वं वेत्तीति, धर्मस्यार्थस्य तत्वं हरिविषयत्वलक्षणं वेत्तीति वा ।। ३ ।।

येयं मम कन्या ताम् । याचकाभावात् किम्? अत्राह– **अदत्वेति**[1] । ब्रह्मणः सर्वस्य गुरुत्वाद् गुर्वनुज्ञापूर्वकं क्रियमाणं सर्वं फलवदित्यभिसन्धाय याचकेभ्यो न दत्तेति भावः ।। ४ ।।

---

१. 'याचकसम्भवात् कुतो न दत्तेत्यत्राह – अदत्वेति' इति कोशान्तरे ।

सभायां ब्रह्मणस्तत्र गन्धर्वौ द्वौ हहाहुहूः । तस्मिन्नगायतां काले ग्राममूर्च्छाविचक्षणौ ।। ५ ।।
राजाऽतिष्ठद् बहिः किञ्चित् तद्विरामप्रतीक्षया । गीतावसाने पप्रच्छ प्रणिपत्य पितामहम् ।। ६ ।।
एषा मे भगवन् कन्या कस्मै दास्य इमामिति । तं प्राह पद्मभूः कस्ते राजपुत्रो विरोचते ।। ७ ।।
तत्रान्यांश्च महीपालानाचक्ष्वेति कुरूद्वह । ततस्तान् रेवतः प्राह भूपालान् विषयेश्वरान् ।। ८ ।।
स तानाकर्ण्य नृपतीन् प्रहस्योवाच रैवतम् । युगानि तु बहून्यत्र गतानि तव भूपते ।। ९ ।।
क्षणमात्रमिवाश्राव्यं शृण्वतो गीतमेतयोः । केदानीं तव ते भूपाः सुतायाः सदृशा वराः ।। १० ।।
इदानीं राजशार्दूल यदुवंशविवर्द्धनौ । वसुदेवगृहे जातौ रामकृष्णाह्वयौ प्रभू ।। ११ ।।
तत्र सङ्कर्षणायेमां कन्यां यच्छस्व भूपते । इत्युक्तस्तेन भूपालस्तं प्रणम्य पुरं गतः ।।
रामाय प्रददौ कन्यां रूपिणीं बाहुशालिने ।। १२ ।।
तामादियुगसम्भूतां दीर्घदेहां महाभुजः । आकृष्य लाङ्लेनांसे समां चक्रे हलायुधः ।। १३ ।।
भगवानपि गोविन्द उपयेमे कुरूद्वह । वैदर्भीं भीष्मकसुतामिन्दिरांशां स्वयम्वरे ।। १४ ।।
प्रमथ्य तरसा राज्ञः शाल्वादींश्चैद्यपक्षगान् । पश्यतां सर्वभूतानां तार्क्ष्यपुत्रः सुधामिव ।। १५ ।।

राजोवाच

भगवान् भीष्मकसुतां रुग्मिणीं रुचिराननाम् । राक्षसेन विवाहेन उपयेम इति श्रुतम् ।। १६ ।।
भगवन् श्रोतुमिच्छामि कृष्णस्यामिततेजसः ।यथा मागधशाल्वादीन् जित्वा तत्पारमागमत् ।।
ब्रह्मन् विष्णुकथाः पुण्या माध्वीर्लोकमलापहाः । को नु तृप्येत शृण्वानः श्रुतज्ञो नित्यनूतनाः ।।

---

तत्र तस्मिन्नवसरे । ग्राममूर्छाविचक्षणौ सप्तस्वरगानविशेषविदग्धौ । स्वराणां मण्डलं ग्रामः, आरोहावरोहः मूर्च्छा । "सप्तस्वरास्त्रयो ग्रामा एकविंशति मूर्च्छनाः" इति भरतः।।५।। अल्पार्थे किञ्चिदित्यव्ययम् । अल्पकालमित्यर्थः ।। ६-८ ।।

त्वदभीष्टवरो नास्ति तदानींतनकालीयानामतीतत्वादिति ब्रह्मा वक्ति– **तं प्राहेति** । तव ते तुभ्यं मनुष्यस्य सुबहूनि युगानि क्षणमात्रमिव गतानीति ।। ९ ।।

तत्र निमित्तमाह– **आश्राव्यमिति** ।। १० ।। तर्हि किं कर्तव्यमिति तत्राह – **इदानीमिति** ।।११,१२।। आदियुगम् कृतयुगम् ।। १३-१६ ।। तेषां पारं यथा अगमत् तथा तस्य हरेर्विवाहलक्षणं चरितं श्रोतुमिच्छामि ।। १७ ।। माध्वीः मधुराः ।। १८ ।।

श्रीशुक उवाच

राजाऽऽसीद् भीष्मको नाम विदर्भाधिपतिर्महान्। तस्य पञ्चाभवन् पुत्राः कन्यैका च वरानना ॥

रुग्म्यग्रजो रुग्मरथो रुग्मबाहुरनन्तरः। रुग्मकेशो रुग्ममाली रुग्मिण्येषां स्वसा सती ॥ २० ॥

सोपश्रुत्य मुकुन्दस्य रूपवीर्यगुणश्रियः। गृहागतैर्गीयमानांस्तं मेने सदृशं पतिम् ॥ २१ ॥

तां बुद्धिलक्षणौदार्यरूपशीलगुणाश्रयाम्। कृष्णश्च सदृशीं भार्यां समुद्वोढुं मनो दधे ॥ २२ ॥

बन्धूनामिच्छतां दातुं कृष्णाय भगिनीं नृप। रुग्मी निवार्य कृष्णद्विड् चैद्याय समकल्पयत् ॥२३॥

तदवेत्यासितापाङ्गी वैदर्भी दुर्मना भृशम्। विचिन्त्याप्तं द्विजं कञ्चित् कृष्णाय प्राहिणोद् द्रुतम् ॥

द्वारकां स समभ्येत्य प्रतीहारैः प्रवेशितः। अपश्यदाद्यं पुरुषमासीनं काञ्चनासने ॥ २५ ॥

दृष्ट्वा ब्रह्मण्यदेवस्तमवरुह्य निजासने। उपवेश्यार्हयाञ्चक्रे यथात्मानं दिवौकसः ॥ २६ ॥

तं भुक्तवन्तं विश्रान्तमुपगम्य सतां गतिः। पाणिनाऽभिमृशन् पादावव्यग्रस्तमपृच्छत ॥ २७ ॥

कच्चिद् द्विजवरश्रेष्ठ धर्मस्ते वृद्धसम्मतः। वर्तते नातिकृच्छ्रेण सन्तुष्टमनसः सदा ॥ २८ ॥

सन्तुष्टो यर्हि वर्तेत ब्राह्मणो येन केनचित्। अहीयमानः स्वाद् धर्मात् स ह्यस्याखिलकामधुक् ॥

असन्तुष्टः सुखं विप्र नाप्नोत्यपि सुरेश्वरः। अकिञ्चनोऽपि सन्तुष्टः शेते सर्वाङ्गविज्वरः ॥ ३० ॥

विप्रान् स्वलाभसन्तुष्टान् साधून् भूतसुहृत्तमान्। निरहङ्कारिणः शान्तान् नमस्ये शिरसाऽसकृत् ॥

कच्चिद् वः कुशलं ब्रह्मन् राजतो यस्य हि प्रजाः। सुखं वसन्ति विषये पाल्यमानाः स मे प्रियः ॥

यतस्त्वमागतो दुर्गं निस्तीर्येह यदृच्छया। सर्वं मे ब्रूह्यगुह्यं चेत् किं कार्यं करवाम ते ॥ ३३ ॥

---

वरं मनोहरम् आननं यस्याः सा तथा ॥ १९, २० ॥ गृहागतैर्जनैः ॥ २१-२३ ॥ असितापाङ्गी नीलकटाक्षस्थला। आप्तं विश्वस्तम् ॥२४-२६॥ अव्यग्रः असम्भ्रान्तः ॥ २७,२८ ॥ यः स्वाद् धर्मादहीयमानः स्वधर्मत्यागी न स्यात् ॥ २९ ॥ सुरेश्वरोऽपि असन्तुष्टः सुखं नाप्नोति। अकिञ्चनो दरिद्रोऽपि। सन्तुष्टः अलम्बुद्धिः ॥ ३० ॥ स्वतो लाभो यस्य धनस्य तत्तथा तेन ॥ ३१ ॥ यस्य विषये राष्ट्रे। स राजा मे प्रियः ॥ ३२ ॥

आगमनकारणं पृच्छति– **यत इति**। यतः कारणात्। तत् सर्वं कारणम् ॥ ३३ ॥

एवं सम्पृष्टसम्प्रश्नो ब्राह्मणः परमेष्ठिना । विधाय लिखितं पत्रं पादयोः प्रणनाम तम् ।। ३४ ।।
तदादाय जगन्नाथः स्मितसुन्दरलोचनः । वाचयामास धर्मात्मा सादरं स्पृहयन्निव ।। ३५ ।।

रुग्मिण्युवाच

श्रुत्वा गुणान् भुवनसुन्दर सङ्गमांस्ते निर्विश्य कर्णविवरं हरतोऽङ्गतापम् ।
रूपं परं भुवनमङ्गलमङ्गलं ते त्वय्यच्युताविशति चित्तमपत्रपं मे ।। ३६ ।।
का त्वा मुकुन्द महती गुणशीलरूपविद्यावयोद्रविणधामभिरात्मतुल्यम् ।
व्रीडावती कुलवती न वृणीत कन्या काले नृसिंह नरलोकमनोभिरामम् ।। ३७ ।।
स त्वं मयाऽप्यभिवृतः पतिरिन्दिराया भक्तप्रियः कृपणलोकशरण्य ईशः ।
मत्वैतदङ्ग तव पादसरोजदास्याः कामं कुरु प्रियतम प्रणतास्मि तेऽङ्घ्रिम् ।। ३८ ।।
तन्मे भवान् खलु वृतः पतिरङ्ग जायामात्माऽर्पितश्च भवतोऽत्र विभो विधेहि ।
मा वीरभागमभिमर्शतु चैद्य आराद् गोमायुवन्मृगपतेर्बलिमम्बुजाक्ष ।। ३९ ।।
पूर्तेष्टदत्तनियमव्रतदेवविप्रगुर्वर्चनादिभिरलं भगवान् परेशः ।
आराधितो यदि गदाग्रज एत्य पाणिं गृह्णातु मे न दमघोषसुतादयोऽन्ये ।। ४० ।।

---

परमेष्ठिना सर्वोत्तमेन ।। ३४ ।। धर्मः आत्मा स्वरूपं यस्य स तथा । सुकृतविषयो वा । स्पृहयन्निव कामयमान इव ।। ३५ ।।

हे भुवनसुन्दर श्रोतॄणां कर्णविवरं निर्विश्याङ्गतापं शरीरसन्तापं हरतः, सम्यग्गमो व्याप्तिर्येषां ते तथा तान्, स्वरूपाभिन्नान् वा, ते तव गुणान् श्रुत्वा ते तव भुवनसुमङ्गलमङ्गलं परमुत्कृष्टं रूपं च श्रुत्वा मे चित्तं त्वय्यपत्रपमाविशति ।। ३६ ।।

महती विशाला, मनोगुणेनेति शेषः । धाम तेजः । कुलवती शुद्धवंशा । नरलोको मुक्तामुक्तप्रपञ्चस्तस्य मनोभिरामं मनांस्यभिरमयतीति ।। ३७ ।।

अभिवृतः आभिमुख्येन वृतः । एतद् भक्तप्रियत्वादिकम् । पादसरोजदास्याः मम । यतोऽङ्घ्रिं प्रणतास्मि ।। ३८ ।।

तत् तस्मात्, हे अङ्ग हे अम्बुजाक्ष, मां जायां विधेहि । चशब्द एवार्थे । अस्या मे ममात्मा देहः भवतोऽर्पित एव । वीरस्य तव भागमात्मानम् । आराद् दूरात् स्थातुयोग्यश्चैद्यो माऽभिमर्शतु मा स्पृशतु । तत्र दृष्टान्तमाह– **गोमायुवदिति** । गोमायवः शृगालाः । मृगपतेः सिंहस्य बलिमुपहारम् ।। ३९,४० ।।

श्वोभाविनि त्वमजितोद्वहने विदर्भान् गुप्तां समेत्य पृतनापतिभिः समेतैः ।
निर्मथ्य चैद्यमगधेन्द्रबलं प्रसह्य मां राक्षसेन विधिनोद्वह वीयशुल्काम् ।। ४१ ।।
अन्तःपुरान्तरचरान्निहत्य बन्धूंस्त्वामुद्वहे कथमिति प्रवदाम्युपायम् ।
पूर्वेद्युरस्ति महती कुलदेवियात्रा यस्यां बहिर्नवधूर्गिरिजामुपेयात् ।। ४२ ।।
तत्रैत्य मां रथपदातिगजाश्वयुक्तः सम्मथ्य शाल्वमगधान् सहचेदिभूपान् ।
आदाय मां सहचरीभिरथो रमेशो गृह्णातु पाणिमुपनीय पुरीं स्वकीयाम् ।। ४३ ।।
यस्याङ्घ्रिपङ्कजरजःस्तवनं महान्तो वाञ्छन्त्युमापतिरिवात्मतमोनिहत्यै ।
यद्यम्बुजाक्ष न लभेय भवत्प्रसादं जह्यामसून् व्रतकृशा शतजन्मभिःस्याम् ।। ४४ ।।

श्रीशुक उवाच

इति पत्रगतं विश्वं विमृश्य मधुसूदनः । सन्देशं राजकन्यायास्तं ब्राह्मणमवैक्षत ।। ४५ ।।

ब्राह्मण उवाच

इत्येते गुह्यसन्देशा यदुदेव मयाऽऽहृताः । विमृश्य युक्तं यच्चात्र क्रियतां तदनन्तरम् ।। ४६ ।।

।। इति सप्तपञ्चाशत्तमोऽध्यायः ।।

---

## ।। अथ अष्टपञ्चाशत्तमोऽध्यायः ।।

श्रीशुक उवाच

वैदर्भ्याः स तु संदेशं निशम्य यदुनन्दनः । प्रगृह्य पाणिना पाणिं प्रहसन् द्विजमब्रवीत् ।। १ ।।

---

उद्वहने विवाहे श्वोभाविनि श्वःप्रभाते भविष्यति सति समेतैः पृतनापतिभिः गुप्ताम् । विदर्भान् समेत्य राक्षसेन विधिना बलात् कन्याहरणलक्षणेन । वीर्यं शुल्कं मौल्यं यस्याः सा तथा तां माम् ।। ४१ ।। नववधूर्दर्शनाय ।। ४२,४३ ।।

यथोमापतिः श्रीहरिचरणसरसि स्तुतिं करोति तस्य तव । यदि भवत्प्रसादं पूज्यानुग्रहं न लभेयं तर्हि असून् प्राणान् जह्यां त्यक्ष्यामि । किञ्च शतजन्मभिः व्रतकृशा तव भार्यैव स्यामित्यर्थः ।। ४४-४६ ।।

इति श्रीमद्भागवतटीकायां श्रीविजयध्वजतीर्थकृतायां पदरत्नावल्यां दशमस्कन्धे उत्तरार्धे सप्तपञ्चाशत्तमोऽध्यायः ।।

---

मम द्वेषाद् रुग्मिणा विवाहो निवारित इतीममर्थमहं वेद्मि ।। १,२ ।।

श्रीभगवानुवाच

तथाऽहमपि तच्चित्तो निद्रां नाध्यगमं निशि । वेदाहं रुग्मिणा द्वेषान्ममोद्वाहो निवारितः ॥ २ ॥
तामानयिष्य उन्मथ्य राजन्यापसदान् मृधे । मत्परामनवद्याङ्गीमेधसोऽग्नेःशिखामिव ॥ ३ ॥
उद्वाहर्क्षं च विज्ञाय रुग्मिण्या मधुसूदनः । रथः संयुज्यतामाशु दारुकेत्याह सारथिम् ॥ ४ ॥
स चाश्वैः शैव्यसुग्रीवमेघपुष्पबलाहकैः । युक्तं रथमुपानीय तस्थौ प्राञ्जलिरग्रतः ॥ ५ ॥
आरुह्य स्यन्दनं शौरिर्द्विजमारोप्य तूर्णगैः । आनर्तादेकरात्रेण विदर्भानगमद्धयैः ॥ ६ ॥
राजा स कुण्डिनपतिः पुत्रस्नेहवशंगतः । शिशुपालाय स्वां कन्यां दास्यन् कार्याण्यकारयत् ॥७॥
पुरं सम्मृष्टसंसिक्तमार्गरथ्याचतुष्पथम् । चित्रध्वजपताकाभिस्तोरणैः समलङ्कृतम् ॥ ८ ॥
स्रग्गन्धमाल्याभरणैर्विरजाम्बरभूषणैः । जुष्टं स्त्रीपुरुषैः श्रीमद् गृहैरगुरुधूपितैः ॥ ९ ॥
पितॄन् देवान् समभ्यर्च्य विप्रांश्च विधिवन्नृप । भोजयित्वा यथान्यायं वाचयामास मङ्गलम् ॥१०॥
सुस्नाता सुदती कन्या कृतकौतुकमङ्गला । अहतांशुकयुग्मेन भूषिता भूषणोत्तमैः ॥ ११ ॥
चक्रुः सामर्ग्यजुर्मन्त्रैर्वध्वा रक्षां द्विजोत्तमाः ॥ पुरोहितोऽथर्वविद् वै जुहाव ग्रहशान्तये ॥ १२ ॥
हिरण्यरूप्यवासांसि तिलांश्च गुडमिश्रितान् । प्रादाद् धेनूश्च विप्रेभ्यो राजा विधिविदां वरः ॥१३॥
एवं चैद्यपती राजा दमघोषः सुताय वै । कारयामास मन्त्रज्ञैः सर्वमभ्युदयोचितम् ॥ १४ ॥
मदच्युद्भिर्गजानीकैः स्यन्दनैर्हेममालिभिः । पत्त्यश्वसङ्कुलैः सैन्यैः परीतः कुण्डिनं ययौ ॥ १५ ॥
तं वै विदर्भाधिपतिः समेत्याभिप्रपूज्य च । निवेशयामास मुदा कल्पितान्यनिवेशने ॥ १६ ॥

---

एधसः काष्ठादग्नेः शिखां ज्वालाम् ॥ ३ ॥ उद्वाहर्क्षं विवाहनक्षत्रम् ॥ ४ ॥

हयैर्युक्तम् ॥ ५,६ ॥ कार्याणि विवाहयोग्यकार्याणि अकारयत् ॥ ७ ॥ उक्तमेव स्पष्टयति **पुरमिति** । प्राक् सम्मृष्टास्त्यक्तावस्कराः पश्चात् संसिक्ताः गोमयोदकादिप्रोक्षिता मार्गादयो यस्मिंस्तत्तथा ॥ ८-१० ॥

सुस्नाताऽऽभूदिति शेषः । कृतं कौतुके कुतूहले महोत्सवे मङ्गलं हस्तसूत्रलक्षणं मङ्गलं यस्याः सा तथा । ''आबध्नन्ति करे सूत्रं माङ्गल्यार्थं नवस्त्रियः'' इति । ''कौतुकं विषयाभोगे हस्तसूत्रे कुतूहले । कामे ख्याते मङ्गले च'' इति यादवः । अहतांशुकयुग्मेन नूतनवस्त्रयुगलेन । ''अंशुकं केवले वस्त्रे सूक्ष्मवस्त्रोत्तरीययोः'' इति च ॥ ११ ॥

''गृहानेतान् रक्षया विवृणोमि'' इत्याद्यथर्ववेदोक्तवित् ॥ १२ ॥ रूप्यं रजतम् ॥ १३ ॥ सुताय शिशुपालाय ॥ १४ ॥ पूर्वोक्तयात्राशेषं कथयति - **मदच्युद्भिरिति** । मदच्युद्भिः मदजलस्राविभिः ॥ १५ ॥ तदर्थं कल्पितेऽन्यस्मिन् निवेशने गृहे ॥ १६ ॥

तत्र शाल्वो जरासन्धो दन्तवक्त्रो विदूरथः । आजग्मुश्चैद्यपक्षीयाः पौण्ड्रकाद्याः सहस्रशः ॥१७॥
कृष्णरामद्विषो यत्ताः कन्यां चैद्याय साधितुम् । यद्यागत्य हरेत् कृष्णो रामाद्यैर्यदुभिर्वृतः ॥१८॥
योत्स्यामः सहिताः सर्वे इति निश्चितमानसाः । आजग्मुर्भूभुजः सर्वे समग्रबलवाहनाः ॥ १९ ॥
श्रुत्वैतद् भगवान् रामो विपक्षीयनृपोद्यमम् । कृष्णं चैकं गतं हर्तुं कन्यां कलहशङ्कितः ॥ २० ॥
बलेन महता सार्धं भ्रातृस्नेहपरिप्लुतः । त्वरितः कुण्डिनं प्रागाद् गजाश्वरथपत्तिभिः ॥ २१ ॥
भीष्मकन्या वरारोहा काङ्क्षन्त्यागमनं हरेः । प्रत्यापत्तिमपश्यन्ती द्विजस्याचिन्तयत् तदा ॥२२॥
अहो त्रियामान्तरित उद्वाहो मेऽल्पराधसः । नागच्छत्यरविन्दाक्षो नाहं वेद्म्यत्र कारणम् ॥२३॥
सोऽपि नावर्ततेऽद्यापि मत्सन्देशहरो द्विजः । अपि मय्यनवद्यात्मा दृष्ट्वा किञ्चिज्जुगुप्सितम् ॥२४॥
मत्पाणिग्रहणे नूनं नायाति हि कृतोद्यमः । दुर्भगाया न मे धाता नानुकूलो महेश्वरः ॥ २५ ॥
देवी वा विमुखा गौरी रुद्राणी गिरिजा सती । एवं चिन्तयती बाला गोविन्दहृतमानसा ।
न्यमीलयत कालज्ञा नेत्रे अश्रुकलाकुले ॥ २६ ॥
एवं वध्वाः प्रतीक्षन्त्या गोविन्दागमनं नृप । वाम ऊरुर्भुजो नेत्रमस्फुरन् प्रियभाषिणः ॥ २७ ॥
अथ कृष्णविनिर्दिष्टः स एव द्विजसत्तमः । अन्तःपुरचरां देवीं राजपुत्रीं ददर्श ह ॥ २८ ॥
सा तं प्रहृष्टवदनमव्यग्रात्मगतिं सती । आलक्ष्य लक्षणाभिज्ञा तमपृच्छच्छुचिस्मिता ॥ २९ ॥
आवेदयामास तस्यै सम्प्राप्तं यदुनन्दनम् । उक्तं च सत्यवचनमात्मोपनयनं प्रति ॥ ३० ॥
तमागतं समाज्ञाय वैदर्भी हृष्टमानसा । न पश्यन्ती ब्राह्मणाय प्रियमन्यन्ननाम सा ॥ ३१ ॥

---

तत्र कुण्डिनपुरे ॥१७-२१॥ वरो वरणीय आरोहो जघनप्रदेशो यस्याः सा तथा । प्रत्यापत्तिं पुनरागमनम् ॥२२॥

त्रियामान्तरितः रात्रिमात्रव्यवहितः । अल्पराधसः मन्दीभूतकार्यसिद्धेः ॥ २३-२५ ॥

''गौरोऽरुणेसिते पीते'' इति गौरीशब्दस्यानेकार्थवाचित्वेनानिश्चय इत्यतो **रुद्राणीति** । सामान्यविवक्षायां गङ्गाया अपि तत्पत्नीत्वेन संशयानिस्तार इत्यतो **गिरिजेति** । ''गिरिजा मेनकात्मजा'' इत्यभिधानम् । नन्वभिधानस्य योगबलानुसारित्वेन प्रवृत्तेर्नद्या अपि गिरिजातत्वादित्यतः **सतीति** । 'सती सती यागविसृष्टदेहा तां जन्मने शैलवधूं प्रपेदे'' इति । ध्यानकालज्ञा ॥ २६ ॥

वाम ऊरुरस्फुरत् । नेत्रभुजावस्फुरताम् । प्रियभाषिणः अभीष्टकार्यशंसिनः ॥ २७,२८ ॥
अव्यग्रात्मगतिमसम्भ्रान्तनिजगमनम् ॥ २९-३४ ॥

प्राप्तौ श्रुत्वा स्वदुहितुरुद्वाहप्रेक्षणोत्सुकौ । अभ्ययात्तूर्यघोषेण रामकृष्णौ समर्हणैः ।। ३२ ।।

मधुपर्कमुपानीय वासांसि रुचिराणि सः । उपायनान्यभीष्टानि विधिवत् समपूजयत् ।। ३३ ।।

तयोर्निवेशनं श्रीमदुपकल्प्य महामतिः । बाह्योद्याने कुण्डिनस्य यथायोगं सुविस्तृतम् ।। ३४ ।।

आवेद्य पूर्णं नगरं जरासन्धादिभिर्नृपैः । ससैन्ययोः सानुगयोरातिथ्यं विदधे यथा ।। ३५ ।।

एवं राज्ञां समेतानां यथावीर्यं यथावयः । यथाबलं यथावित्तं सर्वैः कामैः समर्हयत् ।। ३६ ।।

कृष्णमागतमाकर्ण्य विदर्भपुरवासिनः । आगत्य नेत्राञ्जलिभिः पपुस्तन्मुखपङ्कजम् ।। ३७ ।।

अस्यैव भार्या भवितुं रुग्मिण्यर्हति नापरा । असावप्यनवद्यात्मा भैष्म्याः समुचितः पतिः ।।३८।।

किञ्चित् सुचरितं यन्नस्तेन तुष्टस्त्रिलोककृत् । अनुगृह्णातु वैदर्भ्या गृह्णातु पाणिमच्युतः ।। ३९ ।।

श्रीशुक उवाच

एवं प्रेमकलाबद्धा वदन्ति स्म पुरौकसः । कन्या चान्तःपुरात् प्रागाद् भटैर्गुप्ताऽम्बिकालयम् ।।

पद्भ्यां विनिर्ययौ द्रष्टुं भवान्याः पादपल्लवम् । सा चानुध्यायती सम्यङ् मुकुन्दचरणाम्बुजम् ।४१।

यतवाङ् मातृभिः सार्धं सखीभिः परिवारिता ।। ४२ ।।

गुप्ता राजभटैः शूरैः सन्नद्धैरुद्यतायुधैः । वेत्रझर्झरहस्तैश्च वृद्धैः कञ्चुकिभिस्तथा ।

मृदङ्गशङ्खपणवांस्तूर्यभेरीश्च[1] जघ्निरे ।। ४३ ।।

नानोपहारबलिभिर्वारमुख्याः सहस्रशः । स्रग्गन्धवस्त्राभरणैर्द्विजपत्न्यः स्वलङ्कृताः ।। ४४ ।।

गायन्तश्च स्तुवन्तश्च गायका वाद्यवादकाः । परिवार्य वधूं जग्मुः सूतमागधबन्दिनः ।। ४५ ।।

आसाद्य देवसदनं धौतपादकराम्बुजा । उपस्पृश्य शुचिः शान्ता प्रविवेशाम्बिकान्तिकम् ।। ४६ ।।

तां वै प्रवयसो बालां विधिज्ञा विप्रयोषितः । भवानीं वन्दयाञ्चक्रुर्भवपत्नीं भवान्विताम् ।। ४७ ।।

नमस्ये त्वाऽम्बिकेऽभीक्ष्णं स्वसन्तानयुतां शिवाम् । भूयात् पतिर्मे भगवान् कृष्णस्तदनुमोदताम् ।।

अद्भिर्गन्धाक्षतैर्धूपैर्वस्त्रमाल्यविभूषणैः । नानोपहारबलिभिः प्रदीपावलिभिः पृथक् ।। ४९ ।।

---

किमिति नगरप्रवेशाप्रदानं कृष्णरामयोरिति तत्राह– **आवेद्येति** । जरासन्धादिराजभिर्नगरं पूर्णं निबिडमनवकाशमित्यावेद्य विज्ञाप्य ।। ३५-४२ ।।

वेत्राणि झर्झराश्च राजाज्ञासूचकयष्टयश्च हस्तेषु येषां ते तथा तैः कञ्चुकिभिः दौवारिकैः छन्नलिङ्गैः ।। ४३-४५ ।। धौतपादकराम्बुजा प्रक्षालितपादहस्तपद्मा ।। ४६ ।। प्रवयसो वृद्धाः विधिज्ञा स्त्रीशास्त्रकुशलाः ।। ४७-४९ ।।

---

१. मृदङ्गशङ्खपणवातूर्यभेर्यश्च जघ्निरे इति गपाठः । जघ्निरे अवाद्यन्त ।

विप्रस्त्रियः पतिमतीस्तथा तैः समपूजयत् । लवणापूपताम्बूलकण्ठसूत्रफलेक्षुभिः ॥ ५० ॥
तस्यै स्त्रियस्ताः प्रददुः शेषा युयुजुराशिषः । ताभ्यो देव्यै नमश्चक्रे शेषाश्च जगृहे वधूः ॥ ५१ ॥
मुनिव्रतमथ त्यक्त्वा निश्चक्रामाम्बिकागृहात् । उपकण्ठे सुरेशस्य पौलोम्याश्च निकेतनम् ॥ ५२ ॥
तौ विदर्भप्रसूतानां नृपाणां कुलदेवते । तदन्तिकमुपागम्य शचीं सुरपतिप्रियाम् ॥ ५३ ॥
चिराराधितपादाब्जां सा प्रणम्य विनिर्ययौ ॥ प्रगृह्य पाणिना धात्रीं रत्नमुद्रोपशोभिताम् ।
धृतानेकातपत्राढ्यां वीजच्चामरसङ्कुलाम्[१] ॥ ५४ ॥

तां देवमायामिव वीरमोहिनीं सुमध्यमां कुण्डलमण्डितानानाम् ।
श्यामां नितम्बार्पितरत्नमेखलां व्यञ्जत्स्तनीं कुन्तलशङ्कितेक्षणाम् ॥ ५५ ॥
शुचिस्मितां बिम्बफलाधरद्युतिशोणायमानद्विजकुन्दकुड्मलाम् ।
पदा चलन्तीं कलहंसगामिनीं सिञ्जत्कलन्नूपुरपादशोभिताम्[२] ॥
विलोक्य वीरा मुमुहुः समागता यशस्विनस्तत्कृतहृच्छयार्दिताः ॥ ५६ ॥
यां वीक्ष्य ते नृपतयस्तदुदारहासव्रीडावलोकहृतचेतस उज्झितास्त्राः ।
पेतुः क्षितौ गजरथाश्वगता विमूढा यात्राच्छलेन हरयेऽर्पयतीं स्वशोभाम् ॥ ५७ ॥
सैवं शनैश्चलयती पदपद्मकोशौ प्राप्तिं तदा भगवतः प्रसमीक्षमाणा ।
उत्सार्य वामकरजैरलकानपाङ्गैः प्राप्तान् ह्रियैक्षत नृपान् ददृशेऽच्युतं सा ॥ ५८ ॥
तां राजकन्यां रथमारुरुक्षतीं जहार कृष्णो द्विषतां समीक्षताम् ॥ ५९ ॥
रथं समारोप्य सुपर्णलक्षणं राजन्यचक्रं परिभूय माधवः ।
ततो ययौ रामपुरोगमैः शनैः शृगालमध्यादिव नागहृद्धरिः ॥ ६० ॥

॥ इति अष्टपञ्चाशत्तमोऽध्यायः ॥

---

पतिमतीः भर्तृमत्यः ॥ ५० ॥ शेषाः अक्षताः अवशिष्टा राजस्त्रियो वा ॥ ५१ ॥ मुनिव्रतं मौनव्रतम् । उपकण्ठे समीपे । पौलोम्याः शच्याः ॥ ५२-५४ ॥ देवमायां लक्ष्मीम् । श्यामां द्व्यष्टवर्षाम् । कुन्तलैरावरकैः शङ्कितमिव ईक्षणं यस्याः सा तथा ताम् ॥ ५५-५९ ॥ नागहृद् गजहरो हरिः सिंहः[३] ॥ ६० ॥

॥ इति श्रीमद्भागवतटीकायां श्रीविजयध्वजतीर्थकृतायां पदरत्नावल्यां दशमस्कन्धे उत्तरार्धे अष्टपञ्चाशत्तमोऽध्यायः ॥

---

१. धृतानेकातपत्राढ्या वीजच्चामरसङ्कुला - इति ग.पाठः स. पाठश्च । धृतानेकातपत्राद्यामिति च कचित्पाठः । २. सिञ्जत्कनन्नूपुरपादशोभितामिति स. पाठः । सिञ्जन्तौ ध्वनन्तौ कनन्तौ काशमानौ नूपुरौ -स. ३. ततो हरणानन्तरं रामपुरोगमैः सह शनैः शृगालमध्याद् हरिः सिंह इव ययौ । त्वरातो गमने पलायित इत्यपयशः स्यात् । किञ्च रणरणरणिकातश्च मन्दं नन्दनन्दनोऽगादिति भावः - स.

## ॥ अथ एकोनषष्टितमोऽध्यायः ॥

श्रीशुक उवाच

तं मानिनः स्वाभिभवं यशःक्षयं परे जरासन्धवशा न सेहिरे ।
अहो धिगस्मद्यश आत्तधन्विनां गोपैर्हृतं केसरिणां मृगैरिव ॥ १ ॥
इति सर्वे सुसंरब्धा वाहानारुह्य दंशिताः । स्वैःस्वैर्बलैः परिक्रान्ता अन्वीयुर्धृतकार्मुकाः ॥ २ ॥
तानापतत आलोक्य यादवानीकयूथपाः । तस्थुर्वै सन्मुखा राजन् विस्फूर्ज्य स्वधनूंषि ते ॥ ३ ॥
अश्वपृष्ठे गजस्कन्धे रथोपस्थे च कोविदाः । मुमुचुः शरवर्षाणि मेघा अद्रिष्वपो यथा ॥ ४ ॥
पत्युर्बलं शरासारैश्छन्नं वीक्ष्य सुमध्यमा । सव्रीडमैक्षत् तद्वक्त्रं भयविह्वललोचना ॥ ५ ॥
प्रहस्य भगवानाह मा भैस्त्वं वामलोचने । विनङ्क्ष्यत्यधुनैवैतत् तावकैः शात्रवं बलम् ॥ ६ ॥
तेषां तद्विक्रमं वीरा गदसङ्कर्षणादयः । अमृष्यमाणा नाराचैर्जघ्नुर्हयगजान् रथान् ॥ ७ ॥
पेतुः शिरांसि रथिनामश्विनां गजिनां भुवि । सकुण्डलकिरीटानि सोष्णीषाणि च कोटिशः ॥८॥
हस्ताः सासिगदेष्वासाः करभा ऊरवोऽङ्घ्रयः । अश्वाश्वतरनागोष्ट्रखरमर्त्यशिरांसि च ॥ ९ ॥
हन्यमानबलानीका वृष्णिभिर्जयकाङ्क्षिभिः । राजानो विमुखा जग्मुर्जरासन्धपुरःसराः ॥ १० ॥
शिशुपालं समेत्याथ हृतदारमिवातुरम् । नष्टत्विषं गतोत्साहं शुष्यद्वदनमब्रुवन् ॥ ११ ॥

राजान ऊचुः

भो भो पुरुषशार्दूल दौर्मनस्यमिदं त्यज । न प्रियाप्रिययो राजन् निष्ठा देहिषु दृश्यते ॥ १२ ॥
यथा दारुमयी योषिन्नृत्यते कुहकेच्छया । एवमीश्वरतन्त्रोऽयमीहते सुखदुःखयोः ॥ १३ ॥
[१]शौरेः सप्तदशाहं वै संयुगानि पराजितः । त्रयोविंशतिभिः सैन्यैर्जिग्य एकमहं परम् ॥१४॥

---

यः अरिभिः कृतः, तम् । के के परे इति तत्राह— **जरासन्ध इति** ॥ १,२ ॥ यादवानामनीकानां यूथानि समूहास्तान् पान्ति रक्षन्तीति यादवानीकयूथपाः ॥ ३ ॥ अश्वपृष्ठादिषु स्थित्वा ॥ ४ ॥ "आसारो वेगवान् वर्षः" इति । सुमध्यमा रुग्मिणी । ऐक्षत् ऐक्षत दृष्टवती ॥ ५-८ ॥

करभाः कनिष्ठिकाया मूलप्रदेशाः । गर्दभादश्वायां जातः अश्वतरः ॥ ९ ॥ आत्मनो जयकाङ्क्षिभिः जयप्रकाशकैः, जयेच्छुभिर्वा ॥ १० ॥ हृतदारं बलादपहृतभार्यं पुरुषम् ॥ ११ ॥ प्रियाप्रिययोः सुखदुःखयोर्निष्ठा व्यवस्थानियतत्वम् । "निष्ठोत्कर्षे व्यवस्थायाम्" इति ॥१२॥ कुहकेच्छया मायिकेच्छया ॥ १३ ॥

---

१. राजसु मध्ये जरासन्धवचनमिदमिति ज्ञेयम् ।

तथाप्यहं न शोचामि न प्रहृष्यामि कर्हिचित् । कालेन दैवयोगेन जानन् विद्रावितं जगत् ॥१५॥
अधुनाऽपि वयं सर्वे वीरयूथपयूथपाः । पराजिताः फल्गुतन्त्रैर्यदुभिः कृष्णपालितैः ॥ १६ ॥
रिपवो जिग्युरधुना काल आत्मानुसारिणि ॥ तदा वयं तु जेष्यामो यदा कालः प्रदक्षिणः ॥१७॥

श्रीशुक उवाच

एवं सम्बोधितो मित्रैश्चैद्योऽगात् सानुगः पुरम् । हतशेषा पुनस्तेऽपि ययुः स्वं स्वं पुरं नृपाः॥१८॥
रुग्मी तु राक्षसोद्वाहं कृष्णद्विडसहन् स्वसुः । पृष्ठतोऽनुगमत्[1] कृष्णमक्षौहिण्या वृतो बली ॥१९॥
रुग्म्यमर्षी सुसंरब्धः शृण्वतां सर्वभूभुजाम् । प्रतिजज्ञे महाबाहुर्दंशितः सशरासनः ॥ २० ॥
अहत्वा समरे कृष्णमप्रत्यूह्य च रुग्मिणीम् । कुण्डिनं न प्रवेक्ष्यामि सत्यमेतद् ब्रवीमि वः ॥२१॥

श्रीशुक उवाच

इत्युक्त्वा रथमारुह्य सारथिं प्राह सत्वरः । चोदयाश्वान् यतः कृष्णस्तस्य मे संयुगं भवेत् ॥२२॥
अद्याहं निशितैर्बाणैर्गोपालस्य सुदुर्मतेः । नेष्ये वीर्यमदं येन स्वसा मे प्रसभं हृता ॥ २३ ॥
विकत्थमानः कुमतिरीश्वरस्याप्रमाणवित् । रथैनैकेन गोविन्दमन्वधावत रंहसा ॥ २४ ॥
स गत्वा नर्मदां देवीं तरन्तं मधुसूदनम् । आसाद्य युद्धसन्नद्धस्तिष्ठ तिष्ठेति चाब्रवीत् ॥ २५ ॥
धनुर्विकृष्य सुदृढं जघ्ने कृष्णं त्रिभिः शरैः । आह चारे क्षणं तिष्ठ यदूनां कुलपांसन ॥ २६ ॥
कुत्र यासि स्वसारं मे मुषित्वा ध्वाङ्क्षवद्धविः । हरिष्येऽद्य मदं मन्द मायिनः कूटयोधिनः ॥२७॥
यावन्न मे हतो बाणैः शयीथा मुञ्च दारिकाम् । धनुर्विकृष्य सुदृढं जघ्ने कृष्णं त्रिभिः शरैः ॥२८॥
स्मयन् कृष्णो धनुश्छित्वा षड्भिर्विव्याध रुग्मिणम् । अष्टभिश्चतुरो वाहान् द्वाभ्यां सूतं ध्वजं त्रिभिः ॥
स चान्यद् धनुरादाय कृष्णं विव्याध पञ्चभिः । तैस्ताडितः शरौघैस्तु चिच्छेद धनुरच्युतः ॥३०॥
पुनरन्यदुपादत्त तदप्यच्छिनदच्युतः । परिघं पट्टिशं शूलं चर्मासी शक्तितोमरैः[2] ॥ ३१ ॥

---

योऽहं त्रयोविंशतिभिः सैन्यैरक्षोहिणीभिः शौरेः सप्तदशसंयुगेषु पराजितः । परं पश्चात् सोऽहं तावतीभिः सम्भूयैकं सेनादिविकलं कृष्णं जिग्ये एकमष्टादशमं सङ्ग्रामं वा ॥ १४ ॥

तथाप्युभयथापि ॥ १५ ॥ फल्गुतन्त्रैः अल्पसेनापरिच्छदैः ॥ १६ ॥ प्रदक्षिणः अनुकूलः ॥ १७,१८ ॥ असहन्नसहमानः ॥ १९, २० ॥ अप्रत्यूह्य अनावृत्य अन्यस्यादत्वेति वा ॥ २१-२५ ॥ अरे (इति) नीचसम्बोधनम् । तदेव व्यनक्ति– **यदूनामिति** ॥ २६,२७ ॥ ततः पूर्वमेव मुञ्च ॥ २८-३० ॥

---

१. अन्वगमत् । अडभावश्छान्दसः । २. शक्तितोमरैः सह यद्यदादत्तेत्यन्वयः - स.

यद्यदायुधमादत्त तत्सर्वं सोऽच्छिनद् विभुः । ततो रथादवप्लुत्य गृहीत्वा खड्गचर्मणी ॥ ३२ ॥
कृष्णमभ्यद्रवत् क्रुद्धः पतङ्ग इव पावकम् । तस्य चापततः खड्गं तिलशश्चर्म चेषुभिः ॥ ३३ ॥
छित्त्वाऽसिमाददे तिग्मं रुग्मिणं हन्तुमुद्यतः । दृष्ट्वा भ्रातृवधोद्योगं रुग्मिणी भयविह्वला ।
पतित्वा पादयोः पत्युरुवाच करुणं सती ॥ ३४ ॥

रुग्मिण्युवाच

योगेश्वराप्रमेयात्मन् देवदेव जगत्पते । हन्तुं नार्हसि कल्याण भ्रातरं मे महाभुज ॥ ३५ ॥

श्रीशुक उवाच

इत्युक्त्वा जगृहे पादौ कृपणा दीनभाषिणी । भ्रातरं त्रातुकामा सा कृष्णस्य जगतीपतेः ॥ ३६ ॥

तया परित्रासविकम्पिताङ्ग्या शुचाऽवशुष्यन्मुखरुद्धकण्ठया ।
कातर्यविस्रंसितहेममालया गृहीतपादः करुणो न्यवर्तत ॥ ३७ ॥
चैलेन बध्द्वा तमसाधुकारिणं सश्मश्रुकेशं प्रवपन् व्यरूपयत् ।
तावत् समीयुर्जितशत्रुसैन्या यदुप्रवीरा नलिनीं यथा गजाः ॥ ३८ ॥

कृष्णान्तिकमुपव्रज्य ददृशुस्तत्र रुग्मिणम् । तथाभूतं हतप्रायं दृष्ट्वा सङ्कर्षणो विभुः ॥ ३९ ॥
विमुच्य बद्धं करुणो भगवान् कृष्णमब्रवीत् ॥ ४० ॥

बलभद्र उवाच

असाध्विदं त्वया कृष्ण कृतमस्मिन् जुगुप्सितम् । वपनं श्मश्रुकेशानां वैरूप्यं सुहृदो वधम् ॥४१॥
मैवास्मान् साध्व्यसूयेथा भ्रातुर्वैरूप्यचिन्तया । सुखदुःखदो न चान्योऽस्ति यतः स्वकृतभुक् पुमान् ॥

---

परिघं परिघातनम् । पट्टिशं लोहदण्डम् । शक्तितोमरैः सह चिच्छेद । द्विमुखस्तोमरः ॥ ३१-३६ ॥

परित्रासेन परितो भयेन कम्पितमङ्गं यस्याः सा तथा तया । शुष्यन्मुखा च रुद्धकण्ठा च तया । करुणः करुणाकरः ॥ ३७ ॥

प्रवपन् वपनं मुण्डनं कुर्वन् व्यरूपयत् सौन्दर्यहीनमकरोत् ॥ ३८-४० ॥ श्मश्रुकेशानां वपनलक्षणं वैरूप्यं सुहृदो बन्धोर्वधं कृतवान् ॥ ४१ ॥

इदानीं रुग्मिणीं सान्त्वयति– **मैवेति** । हे साध्वि रुग्मिणि । अस्मान् प्रति । स्वस्मादन्यः। अत्र **हेतुर्यत इति** ॥ ४२ ॥

**बन्धुर्वधार्हदोषोऽपि न बन्धुर्वधमर्हति । त्याज्यः स्वेनैव दोषेण हतः किं हन्यते पुनः ॥ ४३ ॥**
**क्षत्रियाणामयं धर्मः प्रजापतिविनिर्मितः । भ्राताऽपि भ्रातरं हन्याद् येन घोरतरस्ततः ॥ ४४ ॥**
**राज्यस्य भूमेर्वित्तस्य स्त्रियो मानस्य तेजसः । मानिनोऽन्यस्य वा हेतोः श्रीमदान्धाः क्षिपन्ति हि ॥**
**आत्ममोहो नृणामेष कल्प्यते देवमायया । सुहृच्छत्रुरुदासीन इति देहात्ममानिनाम् ॥ ४६ ॥**
**एक एव परो ह्यात्मा सर्वेषामपि देहिनाम् । नानेव गृह्यते मूढैर्यथा ज्योतिर्यथा नभः ॥ ४७ ॥**
**देह आद्यन्तवानेष द्रव्यप्राणगुणात्मकः । आत्मन्यविद्यया क्लृप्तः संसारयति देहिनम् ॥ ४८ ॥**

---

नन्वस्तु सुखादेः स्वयं हेतुरथापि बन्धोर्देहवियोगकरणलक्षणो वधो लोकाचारो न भवति जुगुप्सितत्वादिति तत् सत्यमित्याह– **बन्धुरिति** । वधार्हो दोषो यस्य स तथा । द्वितीय-बन्धुशब्दो हेत्वर्थः । तत्र किं कर्तव्यमित्याह– **त्याज्य इति** । त्यागो देशनिर्यातनादिलक्षणः । [१]किं त्याज्य इति ? मृतमारणदोषापत्तेरिति भावेनाह– **हत इति** ॥ ४३ ॥

तर्ह्येतदीदृशं कर्म किमिति क्रियत इत्यतोऽयमन्यायः क्षत्रियेभ्योऽन्यत्र न क्षत्रियाणा-मित्याह– **क्षत्रियाणामिति** । कोऽसौ धर्म इत्यत्राह- **भ्राताऽपीति** । ततस्तस्माद् राजा येन कर्मणा घोरतर इत्युच्यते, धर्मविषयो वा घोरतरो धर्म इति ॥ ४४ ॥

ननु तर्हि सर्वः सर्वं हन्यादित्यतिप्रसङ्ग इत्यत्राह– **राज्यस्येति** । मानिनः देहाभिमानवन्तः। अन्यस्य स्त्रीजनस्य वा । क्षिपन्ति घ्नन्ति । राज्यादेः सर्वस्य हेतोरिति सम्बन्धः ॥ ४५ ॥

किमत इत्यतः स्वस्य श्रीहर्यधीनत्वकल्पनामन्तरेण स्वकपोलकल्पना बुद्धिभ्रम एवेत्याह **आत्मेति** । देह एवात्मेति मानं ज्ञानं येषां तेषां नृणाम् । निरपेक्षत्वेनोपकर्ता सुहृत् स्वसुखनाशकर्ता शत्रुस्तदुभयकर्तृत्वशून्य उदासीन इत्येष आत्ममोहो मनोभ्रमः देवस्य हरेर्मायया बन्धकशक्त्या कल्प्यते । ततः सुहृच्छत्रू उभयोरितर उदासीन इति स्वकपोलकल्पना इत्याद्येति भावः[२] ॥ ४६ ॥

देवः कीदृश इति तत्स्वरूपमाह– **एक एवेति** । आत्मा परः परमात्मा, नियामक इति शेषः । नन्वेकत्वे ''सच्च त्यच्चाभवत्'' इति नानाभावः कथमिति तत्राह– **नानेति** ॥ ४७ ॥

---

१. अस्पष्टमिदम् । कुतस्त्याज्य इत्यतोऽन्यथा मृतमारणदोषापत्तेरिति भावेनाहेति स्वरसम् ।
१. इत्याद्या स्वकपोलकल्पनेति भावः इति सरलम् ।

यथा शयान आत्मानं विषयान् फलमेव च । अनुभुङ्क्तेऽप्यसत्यर्थे तथात्मापि ध्रुवोऽध्रुवान् ।।४९।।
तस्मादज्ञानजं शोकमात्मबोधविमोहनम् । तत्वज्ञानेन निर्हृत्य स्वस्था भव शुचिस्मिते ।। ५० ।।
एवं भगवता तन्वी रामेण प्रतिबोधिता । वैमनस्यं परित्यज्य मनो बुद्ध्या समादधे ।। ५१ ।।
प्राणावशेष उत्सृष्टो द्विड्भिर्हतबलप्रभः । स्मरन् विरूपकरणं वितथात्ममनोरथः ।।
चक्रे भोजकटं नाम निवासाय महत्पुरम् ।। ५२ ।।
अहत्वा दुर्मतिं कृष्णमप्रत्यूह्य यवीयसीम् । कुण्डिनं न प्रवेक्ष्यामीत्युक्त्वा तत्रावसद् रुषा ।।५३।।
भगवान् भीष्मकसुतामेवं निर्जित्य भूमिपान् । पुरमानीय विधिवदुपयेमे कुरूद्वह ।। ५४ ।।
तदा महोत्सवो नृणां यदुपुर्यां गृहेगृहे । अभूदनन्यभावानां कृष्णे यदुपतौ नृप ।। ५५ ।।
नरा नार्यश्च मुदिताः प्रमृष्टमणिकुण्डलाः । पारिबर्हमुपाजह्रुर्वरयोश्चित्रवाससोः ।। ५६ ।।

सा वृष्णिपुर्युत्तभितेन्द्रकेतुभिर्विचित्रमालाम्बररत्नतोरणैः ।
बभौ प्रतिद्वार्युपयुक्तमङ्गलैरापूर्णकुम्भैरगुरुधूपदीपकैः ।। ५७ ।।

---

देहात्मत्वं भ्रमनिमित्तमित्यत्र हेतुमाह– देह इति । द्रव्याणि पञ्चभूतानि पञ्चप्राणास्त्रयो गुणाः । देह आत्मा न भौतिकत्वाद्, घटवदिति । आत्मनि जीवे अविद्यया हरीच्छया अज्ञानेन वा । देहिनं देहात्मदर्शिनम् । संसारयति संसारिणं करोति । ''तत्करोतीत्युपसंख्यानम्'' इति णिच् ।। ४८ ।।

देहः स्वेतरवृत्तिनित्यनिष्ठाधिकरणं प्रमेयत्वात् घटवत्' इति तत्राह– **यथेति** । शयानः स्वप्नं पश्यन्नात्मानं विषयान् फलं दुःखादिलक्षणं यथाऽनुभुङ्क्ते वासनानुगुणमनुभवति । अर्थे विषये तदानीमसत्यप्यविद्यामानेऽपि तथाऽऽत्मा जीवो ध्रुवोऽध्रुवाननित्यान् देहादीन् अनुभुङ्क्ते इत्यन्वयः । देहः स्वस्वेतरवृत्त्यनित्यनिष्ठाधिकरणमिति प्रत्यनुमानपराहतं तदनुमानमिति सन्तोष्टव्यम् ।। ४९।। अपसंहरति **तस्मादिति** ।। ५० ।। बुद्ध्या कदाप्यतिरोहितज्ञानेन ।।५१।।

रुग्मी तत्र किं चकारेति तत्राह– **प्राणेति** ।। ५२ ।। अप्रत्यूह्य अनिवर्तयित्वा । यवीयसीमनुजाम् ।। ५३,५४ ।। यदुपतौ कृष्णे अनन्यभावानाम् अन्यः शत्रुरिति भावरहितानाम्[1] । निरतिशयभक्तियुक्तानामित्यर्थः ।। ५५,५६ ।। उत्तभितेन्द्रकेतुभिः उत्क्षिप्तेन्द्रध्वजैः ।। ५७ ।।

---

१. 'यादृशी मयि भक्तिः स्यात् तादृश्यन्यत्र नैव चेत् । अनन्यभक्तिर्विज्ञेया' इत्युक्तेः यदुपतावन्यसदृशो भावो भक्तिः स नास्ति येषां तेऽनन्यभावाः - स.

सिक्तमार्गा मदच्युद्भिराहूतप्रेष्ठभूभुजाम् । गजैर्वास्तुपरामृष्टा रम्भापूगोपशोभिता ॥ ५८ ॥

कुरुसृञ्जयकैकेयविदर्भयदुकुन्तयः । मिथो मुमुदिरे तस्मिन् सम्भ्रमात् परिधावतः ॥ ५९ ॥

रुग्मिण्याहरणं श्रुत्वा गीयमानं ततस्ततः । राजानो राजकन्याश्च बभूवुर्भृशविस्मिताः ॥ ६० ॥

द्वारकायामभूद् राजन् महामोदः पुरौकसाम् । रुग्मिर्णीं रमणोपेतां दृष्ट्वा कृष्णं श्रियः पतिम् ॥६१॥

॥ इति एकोनषष्टितमोऽध्यायः ॥

---

## ॥ अथ षष्टितमोऽध्यायः ॥

श्रीशुक उवाच

सत्राजित् तनयां तन्वीं कृष्णाय कृतकिल्बिषः । स्यमन्तकेन मणिना स्वयमुद्यम्य दत्तवान् ॥१॥

राजोवाच

सत्राजितः[1] किमकरोद् ब्रह्मन् कृष्णस्य किल्बिषम् । स्यमन्तकः कुतस्तस्य कस्माद् दत्ता सुता हरेः ॥

श्रीशुक उवाच

आसीत् सत्राजितः सूर्यो भक्तस्य परमः सखा । प्रीतस्तस्मै मणिं प्रादात् सूर्यस्तुष्टः स्यमन्तकम् ॥

---

आहूतप्रेष्ठभूभुजां गजैः जुष्टेति शेषः । वास्तुपरामृष्टा गृहदेवतासंयुक्ता । यद्वा वास्तुपरामृष्टा त्यक्तरजोगृहा[2] ॥ ५८ ॥ तस्मिन् नगरे परिधावत इतस्ततो धावन्तः[3] ॥ ५९ ॥

॥ इति श्रीमद्भागवतटीकायां श्रीविजयध्वजतीर्थकृतायां पदरत्नावल्यां दशमस्कन्धे उत्तरार्धे एकोऽनषष्टितमोऽध्यायः ॥

---

त्रिविक्रमावतारस्य निरपेक्षभक्तानुकम्पिनो यदुनन्दनस्य एतज्जन्मानुष्ठितकर्मनिमित्तदुर्यशः-शमनहेतुविक्रममनुक्रामत्यस्मिन्नध्याये । तत्र परीक्षितः प्रश्नबीजमुत्थापयति– **सत्राजिदिति** । सत्रेण हिरण्यादिदानलक्षणतपसा सूर्यस्थितं हरिं जितवान् वशीकृतवानित्यतः सत्राजिदिति नाम लब्धवान् । ''यज्ञभेदे सदा दाने सत्रमाच्छादने वने'' इति । कृतकिल्बिषः कृतापराधः । मणिना सह । स्वयमुद्यम्य याचनादिपरप्रेरणामन्तरेण मत्कन्यां तुभ्यं दास्यामीति वचनादिप्रयत्नं विधाय । सत्राजितोऽन्तरात्मा सत्रविषये अजित इति वा ॥ १, २ ॥

---

१. सत्राजित् सत्राजित इति पर्यायशब्दौ.

२. वास्तूनि परामृष्टानि पराभिः कर्मकर्त्रीभिरामृष्टान्यलं शोभितानि यस्यां सा- स.  ३. नुमभाव आर्षः।

स तं बिभ्रन्मणिं कण्ठे भ्राजमानो यथा रविः । प्रविष्टो द्वारकां राजंस्तेजसा नोपलक्षितः ॥ ४ ॥
तं विलोक्य जना दूरात्तेजसा मुष्टदृष्टयः । दीव्यतेऽक्षैर्भगवते शशंसुः सूर्यशङ्किताः ॥ ५ ॥
नारायण नमस्तेऽस्तु शङ्खचक्रगदाधर । दामोदरारविन्दाक्ष गोविन्द यदुनन्दन ॥ ६ ॥
एष आयाति सविता त्वां दिदृक्षुर्जगत्पते । मुष्णन् गभस्तिचक्रेण नृणां चक्षूंषि तिग्मरुक् ॥ ७ ॥
नन्वन्विच्छन्ति ते मार्गं त्रिलोक्यां विबुधर्षभाः । ज्ञात्वाऽद्य गूढं यदुषु द्रष्टुं त्वां यात्यजः प्रभो ॥

श्रीशुक उवाच

निशम्य बालवचनं प्रहस्याम्बुजलोचनः । प्राह नासौ रविर्देवः सत्राजिन्मणिना ज्वलन् ॥ ९ ॥
सत्राजित् स्वगृहं श्रीमत् कृतकौतुकमङ्गलम् । प्रविश्य देवसदने मणिं विप्रैर्न्यवेशयत् ॥ १० ॥
दिनेदिने स्वर्णभारानष्टौ स सृजति प्रभो । दुर्भिक्षमार्यरिष्टानि सर्पाधिव्याधयोऽशुभाः ॥ ११ ॥
न सन्ति मायिनस्तत्र यद्राष्ट्रेऽभ्यर्चितो मणिः । स याचितो मणिः क्वापि यदुराजाय शौरिणा ॥

श्रीशुक उवाच

नैवार्थकामुकः प्रादाद् याञ्चाभङ्गमतर्कयत् । तमेकदा मणिं कण्ठे प्रविमुच्य महाप्रभम् ॥ १३ ॥
प्रसेनो हयमारुह्य मृगयां व्यचरद् वने । प्रसेनं सहयं हत्वा मणिमाच्छिद्य केसरी ॥ १४ ॥
विलं विशन् जाम्बवता निहतो मणिमिच्छता । सोऽपि चक्रे कुमारस्य मणिं क्रीडनकं बिले ॥१५॥
अपश्यन् भ्रातरं भ्राता सत्राजित् पर्यतप्यत । प्रायः कृष्णेन निहतो मणिग्रीवो वनं गतः ॥ १६ ॥

---

भक्तस्य सत्राजितः सखा ॥ ३ ॥ तेजसाऽर्चिषा नोपलक्षितो न दृष्टः ॥ ४ ॥ अक्षैर्देवनाङ्गैर्दीव्यते द्यूतक्रीडां कुर्वते ॥ ५,६ ॥ गभस्तिचक्रेण रश्मिमण्डलेन । तिग्मरुक् सूर्यः ॥ ७ ॥

विबुधर्षभाः देवश्रेष्ठाः त्रिलोक्यां ते मार्गमन्विच्छन्ति मृगयन्ते ननु । तेष्वजः सूर्यः अद्य यदुषु गूढं ज्ञात्वा द्रष्टुं यात्यायाति "अजाय लोकत्रयभावनाय" इति वचनात् ॥ ८,९ ॥

गृहदेवसदने देवस्थाने । न्यवेशयत् प्रतिष्ठितवान् ॥ १० ॥

पञ्चविंशतितुलात्मको भारः । तानष्टौ भारान् सृजति ददाति । मारी अकालमृत्युः । अरिष्टं मृत्युचिह्नम् ॥११॥ क्वापि कदाचित् ॥१२॥ अतर्कयत् न्यरूपयत्[1] । प्रतिमुच्य बद्ध्वा ॥१३॥ आच्छिद्य स्वीकृत्य ॥ १४ ॥ क्रीडनकं लीलासाधनम् ॥ १५ ॥

---

१. प्राग् यत् कर्तव्यत्वेनातर्कयदिदमेव कर्तव्यमित्यूहितवाननन्तरं नैव प्रादात् - स.

भ्राता ममेति तत् श्रुत्वा कर्णेकर्णेऽजपञ्जनाः । भगवान् तदुपश्रुत्य दुर्यशो लिप्तमात्मनि ॥ १७ ॥
मार्ष्टुं प्रसेनपदवीमन्वपद्यत नागरैः । हतं प्रसेनमश्वं च वीक्ष्य केसरिणा वने ॥ १८ ॥
तं चाद्रिपृष्ठे निहतमृक्षेण ददृशुर्जनाः । ऋक्षराजबिलं भीममन्धेन तमसा वृतम् ॥ १९ ॥
एको विवेश भगवानवस्थाप्य बहिः प्रजाः । तत्र दृष्ट्वा मणिश्रेष्ठं बालक्रीडनकं कृतम् ॥
हर्तुं कृतमतिस्तस्मिन्नवतस्थेऽर्भकान्तिके ॥ २० ॥
तमपूर्वं नरं दृष्ट्वा धात्री चुक्रोश भीतवत् । तत् श्रुत्वाऽभ्यद्रवत् क्रुद्धो जाम्बवान् बलिनां वरः ॥
स वै भगवता तेन युयुधे स्वामिनाऽऽत्मनः । पुरुषं प्राकृतं मत्वा कुपितो नानुभाववित् ॥ २२ ॥
द्वन्द्वयुद्धं सुतुमुलमुभयोर्विजिगीषतोः । आयुधाश्मद्रुमैर्दोर्भिः क्रव्यार्थे श्येनयोरिव ॥ २३ ॥
आसीत् तदष्टाविंशाहमितरेतरमुष्टिभिः । वज्रनिष्पेषपरुषैरविश्रममहर्निशम् ॥ २४ ॥
कृष्णमुष्टिविनिष्पातनिष्पिष्टाङ्गोरुबन्धनः । क्षीणसत्वः स्विन्नगात्रस्तमाहातीवविस्मितः ॥ २५ ॥
जाने त्वां सर्वभूतानां प्राणओजःसहोबलम् । विष्णुं पुराणपुरुषं प्रभविष्णुमधीश्वरम् ॥ २६ ॥
त्वं हि विश्वसृजां स्रष्टा सृष्टानामधिपो वसन् । कालः कलयतामीश पर आत्मा तथाऽऽत्मनाम् ॥

यस्येषदुत्कलितरोषकटाक्षमोक्षैर्वर्त्मादिशत् क्षुभितनक्रतिमिङ्गिलोऽब्धिः ।
सेतुः कृतः स्वयशउज्ज्वलिता च लङ्का रक्षःशिरांसि भुवि पेतुरिषुक्षतानि ॥ २८ ॥

---

शौरेर्याञ्चाभङ्गदोषादिदमनर्थजातमभूत् अन्यथा मणिमाहात्म्यस्तवनं व्यर्थमिति तात्पर्यमवगन्तव्यम् । मणिः ग्रीवायां यस्य स तथा ॥ १६ ॥ मम भ्राता कृष्णेन निहत इति यत् तत् श्रुत्वा ॥ १७,१८ ॥ ऋक्षेण जाम्बवता ॥ १९-२३ ॥ अविश्रमं निरन्तरम् ॥ २४,२५ ॥

सर्वभूतानां प्राणादिप्रदम् । प्राणः प्राणनं चेष्टाशक्तिः, ओजः अवष्टम्भशक्तिः, सहः शरीरसामर्थ्यम्, बलं स्थौल्यम्[1] ॥ २६ ॥ सृष्टानामधिपः । सृष्टेषु वसन् । कालः संहर्ता । आत्मनां चेतनानां पर आत्मा परमचेतनः। ''नित्यो नित्यानाम्'' इति श्रुतिः ॥ २७ ॥

उत्कलितेन उन्नतेन रोषेण जातैः कटाक्षमोक्षैर्नेत्रान्तपातैः क्षुभिताः क्षोभिता नक्रास्तिमिङ्गिलाश्च यस्मिन् स तथा[2]। स्वयशोरूपः उज्ज्वलिता दग्धा । इषुक्षतानि शरच्छिन्नानि ।
॥ २८,२९ ॥

---

१. बलं स्वेच्छाधीनकरणशक्तिरित्यन्यत्रोक्तम् ।
२. यस्य रामस्येषदुत्कलितोऽल्पमङ्कुरितो रोषस्तेनाविर्भूता ये कटाक्षमोक्षास्तैःक्षुभिता चलिता - स.

इति विज्ञातविज्ञानमृक्षराजानमच्युतः । व्याजहार महाराज भगवान् देवकीसुतः ॥ २९ ॥
अभिमृष्यारविन्दाक्षः पाणिना शङ्करेण तम् । कृपया परया भक्तं मेघगम्भीरया गिरा ॥ ३० ॥
मणिहेतोरिह प्राप्ता वयमृक्षपते बिलम् । मिथ्याभिशापं प्रमृजन्नात्मनो मणिनाऽमुना ॥ ३१ ॥
इत्युक्तः स्वां दुहितरं कन्यां जाम्बवतीं मुदा । अर्हणार्थं सहमणिं कृष्णायोपजहार सः ॥ ३२ ॥
अदृष्ट्वा निर्गमं शौरेः प्रविष्टस्य बिलं जनाः । प्रतीक्ष्य द्वादशाहानि दुःखितास्ते पुरं ययुः ॥ ३३ ॥
निशम्य देवकीदेवी रुग्मिण्यानकदुन्दुभिः । सुहृदो ज्ञातयोऽशोचन् बिलात् कृष्णमनिर्गतम् ॥
सत्राजितं शपन्तस्ते दुःखिता द्वारकौकसः । उपतस्थुर्महामायां दुर्गां कृष्णोपलब्धये ॥ ३५ ॥
तेषां तु देव्युपस्थानात् प्रत्यादिष्टाशिषां भवन् । प्रादुर्बभूव सिद्धार्थः सदारो हर्षयन् हरिः ॥ ३६ ॥
उपलक्ष्य हृषीकेशं मृतं पुनरिहागतम् । सह पत्न्या मणिग्रीवं सर्वे जातमहोत्सवाः ॥ ३७ ॥
सत्राजितं समाहूय सभायां राजसंन्निधौ । प्राप्तिं चाख्याय भगवान् मणिं तस्मै न्यवेदयत् ॥३८॥
सचातिव्रीडितो रत्नं गृहीत्वाऽवाङ्मुखस्ततः । अनुतप्यन् स्वभवनमगमत् स्वेन पाप्मना ॥३९॥
सोऽनुध्यायंस्तदेवाघं बलवद्विग्रहाकुलः । कथं मृजाम्यात्मरजः प्रसीदेद् वाऽच्युतः कथम् ॥४०॥
किं कृत्वा साधु मह्यं स्यान्न शपेद् वा जनो यथा । अदीर्घदर्शनं धिङ्मां मूढं द्रविणलोलुपम् ॥४१॥
दास्ये दुहितरं तस्मै स्त्रीरत्नं रत्नमेव च । उपायोऽयं समीचीनस्तस्य शान्तिर्न चान्यथा ॥ ४२ ॥
एवं व्यवसितो बुद्ध्या सत्राजित् स्वसुतां शुभाम् । मणिं च स्वयमुद्यम्य कृष्णायोपजहार ताम् ॥
तां सत्यभामां भगवानुपयेमे यथाविधि । बहुभिर्याचितां शीलरुपौदार्यगुणान्विताम् ॥ ४४ ॥
भगवानाह न मणिं प्रतीच्छामो वयं नृप । तवास्तु देवभक्तस्य वयं हि फलभागिनः ॥ ४५ ॥

॥ इति षष्टितमोऽध्यायः ॥

---

शङ्करेण सुखकरेण ॥ ३०-३४ ॥ उपतस्थुः अभजन् ॥ ३५ ॥ ततः किमभूदत्राह– तेषामिति । हरिस्तेषां प्रादुर्बभूवेत्यन्वयः । देव्या उपस्थानान्निषेवणात् प्रत्यादिष्टाशिषाम् अभ्यागताभ्युदयानां भवन् पूज्यः सिद्धार्थः नित्यलब्धप्रयोजनः । 'प्रत्यादिष्टाशिषः' इति पाठे ये प्रथमं नष्टकृष्णाख्याशिषोऽभवन् तेषाम् । तुशब्दो हेत्वर्थः । देव्युपस्थानाद्धेतोरित्यर्थः । अनेनापदि प्राप्तायां देवताशरणं कर्तव्यमित्युक्तं भवति ॥३६,३७॥ आख्यायोक्त्वा ॥३८॥ स्वेन पाप्मनाऽनुतप्यन् पश्चात्तापं कुर्वन् ॥३९,४०॥ मह्यं मम अदीर्घदर्शनं भविष्यज्ज्ञानहीनम् ॥ ४१ ॥ तस्य पापस्य ॥ ४२-४४ ॥ फलभागिनः प्रयोजनांशमेव स्वीकुर्मः ॥ ४५ ॥

॥ इति श्रीमद्भागवतटीकायां श्रीविजयध्वजतीर्थकृतायां पदरत्नावल्यां दशमस्कन्धे उत्तरार्धे षष्टितमोऽध्यायः ॥

## ।। अथ एकषष्टितमोऽध्यायः ।।

**श्रीशुक उवाच**

**विज्ञातार्थोऽपि गोविन्दो दग्धानाकर्ण्य पाण्डवान् । कुन्तीं च कुल्यकरणे सहरामो ययौ कुरून् ।।**
**भीष्मं नृपं स विदुरं गान्धारीं द्रोणमेव च । समुदुःखौ समागम्य हा कष्टमिति होचतुः ।। २ ।।**
**लब्ध्वैतदन्तरं राजन् शतधन्वानमूचतुः । अक्रूरकृतवर्माणौ मणिः कस्मान्न गृह्यते ।। ३ ।।**
**योऽस्मभ्यं संप्रतिश्रुत्य कन्यारत्नं विगर्ह्य नः । कृष्णायादात् स सत्राजित् तस्माद् भ्रातरमन्वियात् ।।**
**एवं भिन्नमतिस्ताभ्यां सत्राजितमसत्तमः । शयानमवधील्लोभात् स पापः क्षीणजीवितः ।। ५ ।।**
**स्त्रीणां विक्रोशमानानां क्रन्दन्तीनामनाथवत् । हत्वा पशून् सौनिकवन्मणिमादाय जग्मिवान् ।।**
**सत्यभामा च पितरं हतं वीक्ष्य शुचार्पिता । व्यलपत् तातताततेति हा हतास्मीति मुह्यती ।। ७ ।।**
**तैलद्रोण्यां मृतं प्रास्य जगाम गजसाह्वयम् । कृष्णाय विदितार्थाय तप्ताऽऽचख्यौ पितुर्वधम् ।।८।।**
**तदाकर्ण्येश्वरौ राजन्ननुसृत्य नृलोकताम् । अहो नः परमं कष्टमित्यस्राक्षौ विलेपतुः ।। ९ ।।**
**आगम्य भगवांस्तस्माद् भार्यया साग्रजः पुरम् । शतधन्वानमारेभे हन्तुं हर्तुं च तं मणिम् ।।१०।।**
**ततः पाञ्चालनगराद् याज्ञसेन्याः स्वयंवरम् । घुष्यता यज्ञसेनेन प्रेषितो दूत आगतः ।। ११ ।।**
**आहूतस्तेन गोविन्दो गत्वा पाञ्चालके पुरे । ददर्श साग्रजस्तत्र किशोरान् पाण्डुनन्दनान् ।।१२।।**
**अदृष्टपूर्वान् सुव्यक्तं ब्रह्मरूपधरान् नृपान् ।। तैर्विद्धलक्ष्यैः पौरुष्यप्रतिलब्धमनोरथैः ।। १३ ।।**

---

अज्ञानिनां तमःप्राप्तिसाधनं ज्ञानिनां भगवद्भक्त्युद्रेककारणं लोकविडम्बनार्थं भगवच्चरितविशेषं पूर्वाध्यायार्थबीजं निरूपयत्यस्मिन्नध्याये । अपिना सन्देहं निवारयति । कुल्यं शवदहनानन्तरं तद्दुःखजिहासया तद्गृहगमनम् । तस्य करणे तन्निमित्तीकृत्येत्यर्थः ।। १,२ ।।

अन्तरमवकाशम् ।। ३ ।। भ्रातरं प्रसेनमन्वियात् अनुगतः स्यात् मृतोऽस्तु । तं हन्मीत्यर्थः।।४,५।। क्रन्दन्तीनां वैक्लव्यस्वरं कुर्वतीनाम् । सौनिकवन्मारकवत् राक्षसवदित्यर्थः ।।६,७।। प्रास्य निक्षिप्य ।।८।। अस्राक्षौ अश्रुजलकलिलेक्षणौ ।।९,१०।। याज्ञसेन्याः द्रौपद्याः ।।११, १२ ।। ब्रह्मरूपधरान् ब्राह्मणवेषं बिभ्राणान् । पौरुषेण पराक्रमेण प्रतिलब्धो मनोरथो येषां ते तथा तैः ।। १३ ।।

कुम्भकारस्य शालायां समागम्याभिवन्द्य च । पितृष्वसामनुज्ञाप्य राजानं च युधिष्ठिरम् ।। १४ ।।
निहन्तुं शतधन्वानं तूर्णं द्वारावतीमियात् । सोऽपि कृष्णोद्यमं ज्ञात्वा भीतः प्राणपरीप्सया ।।१५।।
साहाय्ये कृतवर्माणमयाचत स चाब्रवीत् । नाहमीश्वरयोः कुर्यां हेलनं रामकृष्णयोः ।। १६ ।।
को नु क्षेमाय कल्पेत तयोर्वृजिनमाचरन् । कंसः सहानुगो वीरो यद्द्वेषात्त्याजितः श्रिया ।।१७।।
जरासन्धः सप्तदशसंयुगाद् विरथो गतः । प्रत्याख्यातः स चाक्रूरं पार्ष्णिग्राहमयाचत ।। १८ ।।
सोऽप्याह को विरुध्येत विद्वानीश्वरयोर्बलम् । यं कैलासाश्रयः शम्भुर्ननाम शिरसा हरिम् ।।१९।।
यो हंसडिबिकौ युद्धे जितवान् वरदुर्मदौ । आशीविषो महानागो येन निर्वासितो ह्रदात् ।। २० ।।
य इदं लीलया विश्वं सृजत्यवति हन्ति च । चेष्टां विश्वसृजो यस्य न विदुर्मोहिता यया ।। २१ ।।
यः सप्तहायनः शैलमुत्पाट्यैकेन पाणिना । दधार लीलया बाल उच्छिलीन्ध्रमिवार्भकः ।। २२ ।।
नमस्तस्मै भगवते कृष्णायाद्भुतकर्मणे । अनन्तायादिभूताय कूटस्थायात्मने नमः ।। २३ ।।
प्रत्याख्यातः स तेनापि शतधन्वा महामणिम् । तस्मिन् न्यस्याश्वमारुह्य शतयोजनगं ययौ ।।२४।।
गरुडध्वजमारुह्य रथं रामजनार्दनौ । अन्वयातां महावेगैरश्वै राजन् गुरुद्रुहम् ।। २५ ।।
मिथिलाया उपवने विसृज्य पतितं हयम् । पद्भ्यामधावत् सन्त्रस्तः कृष्णोऽन्वभ्यद्रवद् रुषा ।।२६।।
पदातेर्धावतस्तस्य पदातिस्तिग्मनेमिना । चक्रेण शिर उत्कृत्य वाससोर्व्यचिनोन्मणिम् ।। २७ ।।
अलब्धमणिरागत्य कृष्ण आहाग्रजान्तिकम् । वृथा हतः शतधनुर्मणिस्तत्र न विद्यते ।। २८ ।।
तत आह बलो नूनं स मणिः शतधन्वना । कस्मिंश्चित् पुरुषे न्यस्तस्तमन्वेषन् पुरं व्रज ।। २९ ।।
अहं वैदेहमिच्छामि द्रष्टुं प्रियतरं मम । इत्युक्त्वा मिथिलां राजन् विवेश यदुनन्दनः ।। ३० ।।
तं दृष्ट्वा सहसोत्थाय मैथिलः प्रीतमानसः । अर्हयामास विधिवदर्हण्यं वै समर्हणैः ।। ३१ ।।

---

पितृष्वसां पितृस्वसारं कुन्तीम् ।। १४-१६ ।। वृजिनमपराधम् । अपराधाकार्यत्वे निमित्तानि कथयति– **कंस इति** ।। १७ ।। प्रत्याख्यातो निराकृतः कृतवर्मणेति शेषः । पार्ष्णिग्राहं पृष्टबलम् ।। १८-२१ ।। उच्छिलीन्द्रं छत्राकारम् ।। २२-२३ ।। शतयोजनगं शतयोजनगमनसमर्थम् ।। २४ ।। गरुडो ध्वजो यस्य स तथा तं रथम् ।। २५ ।। मिथिला-नगर्याः ।। २६ ।।

पद्भ्यामातिः, सततं गमनं यस्य स तथा तस्य । तिग्मनेमिना चण्डधाराग्रेण । व्यचिनोत् अन्वेषणं कृतवान् ।। २७,२८ ।। अन्वेषन् मार्गणं कुर्वन् ।।२९,३०।। अर्हण्यं पूज्यम् ।।३१।।

उवास तस्यां कतिचिन्मिथिलायां समा विभुः । ततोऽशिक्षद् गदां काले धार्तराष्ट्रः सुयोधनः ।।
मानितः प्रीतियुक्तेन जनकेन महात्मना । केशवो द्वारकामेत्य निधनं शतधन्वनः ।।
अप्राप्तिं च मणेः प्राह प्रियायाः प्रियकृद् विभुः ।। ३३ ।।
ततः स कारयामास क्रियां बन्धोर्मृतस्य वै । साकं सुहृद्भिर्भगवान् या याः स्युः साम्परायिकाः ।।
अक्रूरकृतवर्माणौ श्रुत्वा शतधनोर्वधम् । व्यूषतुर्भयवित्रस्तौ द्वारकायाः प्रयोजकौ[1] ।। ३५ ।।
अक्रूरे प्रेषितेऽरिष्टान्यासन् वै द्वारकौकसाम् । शारीरमानसास्तापा मुहुर्दैविकभौतिकाः ।। ३६ ।।
ततोऽपृच्छद्धरिर्वृद्धानुग्रसेनपुरोगमान् । कस्मादिहारिष्टान्यासन् महता सुचिरेण नः[2] ।।३७।।
इत्यङ्गोपदिशन्त्येके विस्मिता वै गदाभृतः । निवासनिकटे किं वा घटेतारिष्टदर्शनम् ।। ३८ ।।
देवेऽवर्षति काशीशः श्वफल्कायागताय गाम् । स्वसुतां गान्दिनीं प्रादात् ततोऽवर्षत् स्म काशिषु ।।
तत्सुतस्तत्प्रभावोऽसावक्रूरो यत्र तत्र सः । देवोऽभिवर्षते तत्र नोपतापा न मारिकाः ।। ४० ।।

---

काले कृष्णवियोगसमये[3]।। ३२,३३ ।। बन्धोः सत्राजितः । साम्परायिकाः प्रेतविषयाः ।। ३४ ।। व्यूषतुः प्रवासं चक्रतुः ।। ३५-३७ ।।

इतिशब्दः प्रकारवचनः । अङ्गेति सम्बोधनम् । एके केचित् पूर्वपुरुषैरुक्तं पुराणवचनमुपदिशन्ति प्रवदन्ति । कथमिति तत्राह– **गदाभृत** इति । श्रीकृष्णस्य निवासनिकटे अरिष्टदर्शनमशुभदर्शनं घटेत किं वा ? न घटेत ।। ३८ ।।

स्वराष्ट्रे देवे पर्जन्येऽवर्षति काशीशः काशिराजः स्वराष्ट्रं प्रत्यागताय श्वफल्काय अक्रूरपित्रे गां स्वविषयभूमिं नाम्ना गान्दिनीं स्वसुतां च प्रादात् ।। ३९ ।।

किमनेनेति तत्राह– **तत्सुत** इति । तत्प्रभावः श्वफल्कप्रभावः । अतोऽक्रूरो यत्र देशे तत्र देवोऽभिवर्षति तस्मिन् देशे उपतापादयो न भवन्ति ।। ४० ।।

---

१. मणिः कस्मान्न गृह्यत इत्युक्त्वा मणिहरणप्रयोजकौ - स.
२. महतां सुचिरेण वः इति स पाठः । महतां वः सुचिरेण कालेन कस्मादिहारिष्टान्यासन्नित्यन्वयः ।
३. मिथिलायां यावत् पञ्चाब्दानवसद् बलस्तावत्कालं तस्य कृष्णवियोग आसीत् । तस्मिन् समये सुयोधनो गदाविद्यामुपादत्तेत्यर्थः ।

इति वृद्धवचः श्रुत्वा नैतावदिह कारणम् । इति दूतैः समानीय रामाक्रूरौ जनार्दनः ।। ४१ ।।
अक्रूरं मानयन् कृष्णः कथयित्वा प्रियाः कथाः । विज्ञाताखिलतत्त्वज्ञः स्मयमान उवाच ह ।।४२।।
ननु दानपते न्यस्तस्त्वय्यसौ शतधन्वना । स्यमन्तकमणिः श्रीमान् विदितः पूर्वमेव नः ।। ४३ ।।
सत्राजितोऽनपत्यत्वाद् गृह्णीयुर्दुहितुः सुताः । दायं निनीयापः पिण्डान् विमुच्यर्णमशेषतः ।।
तथापि दुर्धरो ह्यन्यैस्त्वय्यास्तां प्रापितो मणिः ।। ४४ ।।
किन्तु मामग्रजः सम्यङ् न प्रत्येति मणिं प्रति । दर्शयस्व महाभाग बन्धूनां शान्तिमावह ।।४५।।
अव्युच्छिन्ना मखास्तेऽद्य वर्तन्ते रुग्मवेदयः । एवं सामभिरारब्धः श्वफल्कतनयो मणिम् ।।४६।।
आदाय वाससा च्छन्नं ददौ सूर्यसमप्रभम् । स्यमन्तकं दर्शयित्वा ज्ञातिभ्यो रज आत्मनः ।।४७।।
मार्जयामास लोकेश अभिभाष्य हलायुधम् । दृष्ट्वा मणिं हलधरस्तदर्थं प्रोष्य आगतः ।। ४८ ।।
योग्योऽहमिति मन्वानश्चक्रमे कुरुपुङ्गव । सत्यभामा पितृधनं मन्वाना स्वात्मनोचितम् ।। ४९ ।।
ग्रहीतुमैच्छद् विस्रब्धं हरेश्चित्तमजानती[1] । जाम्बवत्यपि शुल्कार्थं पित्रा दत्तं ममेति ह ।।५०।।
स्पृहां चक्रे मणौ तस्मिन् सर्वं विज्ञाय माधवः । अक्रूरस्य करे भूयो मणिं प्रत्यर्पयद् विभुः ।।५१।।

यस्त्वेतद् भगवत ईश्वरस्य विष्णोर्वीर्याख्यं वृजिनहरं सुमङ्गलं च ।
आख्यानं पठति शृणोत्यनुस्मरेद् वा दुष्कीर्तिं चरितमपोह्य याति शान्तिम् ।। ५२ ।।

।। इति एकषष्टितमोऽध्यायः ।।

---

अवर्षणादिसम्भवेऽन्यच्च निमित्तमस्तीति भावेनोच्यते **नैतावदिति**[2] । इह अवर्षणादावेतावदक्रूरप्रवासनमेव कारणं न भवति । किन्तु स्यमन्तकरामगमनं[3] च कारणमिति च वृद्धवचः श्रुत्वा अक्रूरं च रामं च समानीयानयित्वा ।। ४१-४३ ।।

किं कृत्वा स्वीकुर्युरिति तत्राह– **निनीयेति** । अपः पिण्डांश्च निनीय दत्वा अशेषतः पित्रादिविषयमृणं च विमुच्य गृह्णीयुरिति पूर्वेणान्वयः ।। ४४ ।।

तर्हि तथास्त्विति नेत्याह– **किन्त्विति** । प्रत्येति विश्वासं करोति । ''प्रत्ययस्तु ख्यातिरन्ध्रविश्वासाधीनहेतुषु'' इति । शान्तिं मङ्गलम् । ''शान्तिः प्रशममङ्गले'' इति ।। ४५ ।।

वर्तन्ते तथेति शेषः । रुग्मवेदयः सुवर्णमेखलाः । आरब्धः उक्तः ।। ४६ ।। रजो मिथ्यावादलक्षणां धूलिम् ।।४७।। तदर्थं मणिनिमित्तम् ।।४८।। स्वात्मना इति तृतीया षष्ट्यर्थे ।।४९।। स्नेहाद् विस्रब्धं विश्वस्तम् ।। ५०,५१।। फलमाह– य इति । शान्तिं मुक्तिम् ।।५२।।

।। इति श्रीमद्भागवतटीकायां श्रीविजयध्वजतीर्थकृतायां पदरत्नावल्यां दशमस्कन्धे उत्तरार्धे एकषष्टितमोऽध्यायः ।।

---

१. अजानती अजानतीव तं मणिं ग्रहीतुमैच्छत् — स. २ . नैतावदेवारिष्टावाप्तौ कारणं किन्तु मणिगमनं मय्यवञ्चके वञ्चकतामतिरग्रजस्य चेत्यादिकं चेति-स. ३. स्यमन्तकगमनं रामप्रवासनं चेत्यर्थः।

## ।। अथ द्विषष्टितमोऽध्यायः ।।

श्रीशुक उवाच

एकदा पाण्डवान् द्रष्टुं प्रतीतान् पुरुषोत्तमः । इन्द्रप्रस्थं गतः श्रीमान् युयुधानादिभिर्वृतः ।। १ ।।
दृष्ट्वा तमागतं पार्था मुकुन्दमखिलेश्वरम् । उत्तस्थुर्युगपद् वीराः प्राणा मुख्यमिवागतम् ।। २ ।।
परिष्वज्याच्युतं वीरा अङ्गसङ्गहतैनसः । सानुरागस्मितं वक्त्रं वीक्ष्य तस्य मुदं ययुः ।। ३ ।।
युधिष्ठिरस्य भीमस्य कृत्वा पादाभिवन्दनम् । फाल्गुनं परिरभ्याथ यमाभ्यामभिवन्दितः ।। ४ ।।
परमासनमासीनं कृष्णा कृष्णमनिन्दिता । नवोढा व्रीडिता किञ्चिच्छनैरेत्याभ्यवन्दत ।। ५ ।।
तथैव सात्यकिः पार्थैः पूजितश्चाभिवन्दितः । निषसादासनेऽन्ये च पूजिताः पर्युपासत ।। ६ ।।

पृथां समागम्य कृताभिवन्दनस्तयाऽतिहार्दार्द्रदृशाऽभिरम्भितः ।
आपृष्टवांस्तत्कुशलं सहस्नुषां पितृष्वसारं परिपृष्टबान्धवः ।। ७ ।।

तमाह प्रेमवैक्लव्यरुद्धकण्ठाश्रुलोचना । स्मरन्ती तान् बहून् क्लेशान् क्लेशापायात्मदर्शनम् ।। ८ ।।
तदैव कुशलं नोऽभूत् यत् सनाथाः कृता वयम् । ज्ञातुं नः स्मरतां कृष्ण भ्राता मे प्रेषितस्त्वया ।।
पाञ्चालेषु स्थितानस्मान् स्वयंवरकृते यदा । अनुस्मृत्यागतो यस्त्वं तेन स्मासं सुखोषिता ।।१०।।

---

तत्तदधिकारिणां तत्तद्योग्यगुणोपसंहारार्थं भक्तवात्सल्यादिविशेषं कथयति कतिपयेष्वध्यायेषु । तत्रादौ हरेर्भक्तवात्सल्यं दर्शयितुमाह **एकदेति** । एकदा कस्मिंश्चिदवसरे । प्रतीतान् शौर्यादिगुणेन प्रख्यातान् कोविदान् वा । भगवद्भक्त्याभरणेन भूषितान् वा । ''प्रतीतो भूषितो ख्याते ज्ञाते प्रत्यर्थिते बुधे'' इति यादवः । ''प्रतीतः प्रथिते ख्याते वित्तविज्ञानकोविदे'' इत्यमरः ।। १ ।।

मुकुन्दं मुक्तिप्रदम् । शरीरं प्रत्यागतं प्रविष्टं मुख्यप्राणं दृष्ट्वा चक्षुरादीन्द्रियाणि यथोत्तिष्ठन्ति ।। २ ।। अच्युतस्याङ्गसङ्गेन ।। ३,४ ।। कृष्णा द्रौपदी ।। ५,६ ।। तस्यै कृताभिवन्दनः । अभिरम्भितः आलिङ्गितः परिपृष्टबान्धवः तयेति शेषः ।। ७ ।।

क्लेशापायात्मदर्शनं क्लेशनाशकरस्वरूपदर्शनम् । जतुगृहदाहादावनुभूतांस्तांश्च बहून् क्लेशान् स्मरन्ती तं कृष्णमाहेत्यन्वयः ।। ८ ।।

किम् ? अत्राह **तदैवेति** । हे कृष्ण । यद् यदा स्मरतां नो वृत्तं ज्ञातुं त्वया यदा मे भ्राताऽक्रूरः प्रेषितः तदैवास्माकं कुशलमभूदित्यन्वयः । कथमेतत् ? अत्राह– **यदिति** ।

इत्युक्तायां तदा कुन्त्यां प्राह योगेश्वरः स्वयम् । पाञ्चालेषु स्थितानेत्य सुतांस्ते छद्मरूपिणः ॥११॥
कुम्भकारस्य शालायामुषितान् सह भार्यया । दृष्ट्वा गतोऽहं दिवसे तस्मिन्नेवाविलम्बितः ॥१२॥
निहन्तुं शतधन्वानं सत्यभामापितुर्द्रुहम् । शतधन्वनि दुर्बुद्धौ हते सीरधरोऽग्रजः ॥ १३ ॥
कुपितो मामनादृत्य विदेहान् विमना ययौ । एतावन्तं महाकालं तदागमनकाङ्क्षया ॥ १४ ॥
पुर एवावसं क्वापि नागच्छं कार्ययन्त्रितः । इत्येवंवादिनं कुन्ती प्राह स्नेहपरिप्लुता ॥ १५ ॥
न तेऽस्ति स्वः पर इति विश्वस्य सुहृदात्मनः । तथापि स्मरतां सर्वान् क्लेशान् हंसि हृदि स्थितः॥
इति वै वार्षिकान् मासान् राज्ञा सोऽभ्यर्चितः सुखम् । जनयन् नयनानन्दमिन्द्रपस्थौकसां विभुः ॥
एकदा रथमारुह्य विजयो वानरध्वजम् । गाण्डीवं धनुरादाय तूणौ चाक्षयसायकौ ॥ १८ ॥
साकं कृष्णेन सन्नद्धो विहर्तुं विपिनं वनम् । बहुव्यालमृगाकीर्णं प्राविशत् परवीरहा ॥ १९ ॥
तत्राविध्यच्छरैर्व्याघ्रान् सूकरान् महिषान् रुरून् । शरभान् गवयान् खड्गान् हरिणाञ्छशशल्यकान् ॥

---

यदित्युत्तरत्रापि सम्बध्यते हेतुत्वेन । अस्मत्कुशलं स्मरता [1]त्वया सनाथाः स्वामिवन्तः कृता इति यत् पाण्डवानामुपद्रवो न कर्तव्यः यतस्ते कृष्णनाथा अस्मान् घ्नन्तीति ॥ ९ ॥

किञ्च यदा स्वयंवरकृते पाञ्चालेषु स्थितानस्माननुस्मृत्य यस्त्वमागतः तदा तेन त्वया त्वद्गुणानुसंस्मृत्या अहं सुखोषिता आसमित्यन्वयः ॥ १० ॥

इदानीमागमनविलम्बः किमिति कृतः इति कुन्त्या हार्दशङ्कां परिहरन्नाह– **इतीति** ॥ ११, १२ ॥ सीरधरो हलधरः बलभद्र इत्यर्थः ॥ १३,१४ ॥

कार्ययन्त्रितः कार्यवशः । ईश्वरस्य तवेदं वचनं लोकचेष्टानुसारि न तु तथ्यमिति भावेन प्रतिवक्ति– **इतीति** ॥ १५ ॥

स्वः स्वकीयः परः परकीयः शत्रुपक्षभवः । शत्रुमित्रविभागाभावे जनार्दनो मुरारिर्मधुसूदनः पार्थसारथिरित्यादीनि नामानि विक्रमनिमित्तानि कथम् ? अत्राह– **तथापीति** ॥१६॥

इति सँल्लापे । वार्षिकान् वर्षाकालसम्बन्धिनः । राज्ञा अभ्यर्चितः, उवासेति शेषः ॥ १७, १८ ॥ विपिनं गम्भीरम् ॥ १९ ॥

---

१. स्मरतेति पाठोऽपि टीकासम्मतः स्यात् ।

तान् निन्युः किङ्करा राज्ञे मेध्यान् पर्वण्युपागते। तृट्परीतः परिश्रान्तो बीभत्सुर्यमुनामगात् ॥२१॥
तत्रोपस्पृश्य विशदं पीत्वा मृष्टमणिप्रभम्। कृष्णौ ददर्शतुः कन्यां चरन्तीं चारुदर्शनाम् ॥ २२ ॥
तामासाद्य वरारोहां सुदतीं रुचिराननाम्। पप्रच्छ प्रेषितः सख्या फाल्गुनः प्रमदोत्तमाम् ॥२३॥
का त्वं कस्यासि सुश्रोणि कुतो वा किं चिकीर्षसि। मन्ये त्वां पतिमिच्छन्तीं कन्यां कथय शोभने ॥

कालिन्द्युवाच

अहं देवस्य सवितुर्दुहिता पतिमिच्छती। विष्णुं वरेण्यं वरदं तपः परममास्थिता ॥ २५ ॥
नान्यं पतिं वृणे वीर तमृते श्रीनिकेतनम्। तुष्यतां मे स भगवान् मुकुन्दोऽनाथवत्सलः ॥ २६ ॥
कालिन्दीति समाख्याता वसामि यमुनाजले। निर्मिते भवने पित्रा यावदच्युतदर्शनम् ॥ २७ ॥
तथावदद् गुडाकेशो वासुदेवाय सोऽपि ताम्। रथमारोप्य तद् विद्वान् धर्मराजमुपागमत् ॥ २८ ॥
वसंस्तत्र हृषीकेशः शक्रप्रस्थे यथासुखम्। विश्वकर्माणमाहूय शिल्पविद्याविशारदम् ॥ २९ ॥
अद्भुतं कारयामास नगरं धर्मसूनवे। सप्रासादपुरद्वारगोपुराट्टालतोरणम् ॥ ३० ॥
पुरन्दरपुरप्रख्यं स्वानां प्रियचिकीर्षया। अथ पार्थैरनुज्ञातः सुहृद्भिः स्वजनान्वितः ॥ ३१ ॥
आययौ द्वारकां भूयः सात्यकिप्रमुखैर्वृतः। अथोपयेमे कालिन्दीं पुण्ये नक्षत्र ऊर्जिते ॥ ३२ ॥
रूपयौवनसम्पन्नां मनोनयननन्दिनीम्। वितन्वन् परमानन्दं स्वानां परममङ्गलम् ॥ ३३ ॥
विन्दानुविन्दावावन्त्यौ दुर्योधनवशानुगौ। स्वयंवरे स्वभगिनीं कृष्णकामां न्यषेधताम् ॥ ३४ ॥
राजाधिदेव्यास्तनयां मित्रविन्दां पितृष्वसुः। प्रसह्य हृतवान् कृष्णो राजन् राज्ञां प्रपश्यताम् ॥

---

महिषान् वनमहिषान्, रुरून् कृष्णमृगान् शरभानष्टपदान्। खड्गान् मृगविशेषान्। हरिणान् सामान्यमृगान्। शल्यकान् शललान् ॥ २० ॥ राज्ञे युधिष्ठिराय। पर्वणि श्राद्धोचिते यजनकाले वा ॥ २१ ॥ कृष्णौ यादवेन्द्रार्जुनौ ॥ २२ ॥ सख्या कृष्णेन ॥ २३ ॥

कन्यां दीप्तामुत्पन्नरजसम् अत एव पतिं कामयमानाम्। कन दीप्ताविति धातुः। "अनवाप्तपतिः कन्या जातवीर्या वरार्थिनी" इत्युत्पलमाला ॥२४॥ वरेण्यं प्रार्थनीयम् ॥२५॥

अनाथवत्सलः ॥ २६,१७ ॥ गुडाकेशः घनकेशः, जितनिद्रो वा। यथा कालिन्दी ऊचे तथा सोऽपि वासुदेवाय ॥ २८-३४ ॥ राजाधिदेव्याः राजाधिदेवीतिनामधेयायाः ॥ ३५ ॥

नग्नजिन्नाम कौशल्य आसीद् राजाऽतिधार्मिकः। तस्य [१]सत्याऽभवत् कन्या राजन् नीलेति आह्वया[२] ॥
तां न शेकुर्नृपा वोढुमजित्वा सप्तगोवृषान्। तीक्ष्णभृङ्गान् सुदुर्द्धर्षान् वीरगन्धान् महाघनान् ॥
तां श्रुत्वा वृषजिल्लभ्यां भगवान् सात्वतां पतिः। जगाम कौशलपुरं सैन्येन महता वृतः ॥ ३८ ॥
स कौशलपतिः प्रीतः प्रत्युत्थानासनादिभिः। अर्हणेनापि गुरूणा पूजयन् प्रत्यनन्दत ॥ ३९ ॥

वरं त्रिलोक्याभिमतं समागतं नरेन्द्रकन्या चकमे रमापतिम्।
भूयादयं मे पतिराशिषां पतिः करोतु सत्यो यदि मे धृतो व्रतः ॥ ४० ॥

---

नीलेति आह्वयो नाम यस्याः सा नीलेत्याह्वया "आ प्रगृह्यः स्मृतौ वाक्येप्यास्तु सन्तापकोपयोः" इति यादवः ॥ ३६ ॥

वीरान् शूरान् गन्धयन्तीति वीरगन्धास्तान्। "गन्धो लेशे च हिंसायां घ्राणग्राहे प्रकीर्तितः" इति। वीरस्य राहोर्गन्ध इव गन्धो येषां ते तथा तान्, 'वीरो राहौ हरौ शक्रे' इति वा। महान्तो धना मेघा यथा नीलास्ते तथा तान्। यद्वा महाकठिनान् महामुद्गरानिव स्थितान् वा। "घनाः खलीनसम्पातमेघकाठिन्यमुद्गराः" इति ॥ ३७ ॥

वृषजिल्लभ्यां लब्धुं योग्याम्। सैन्येन सेनासमूहेन ॥ ३८ ॥ गुरूणा बहुमानेन महिष्ठेन[३] ॥ ३९ ॥

अभिमतमभीष्टं वरं वरणयोग्यरूपम्। "वरो ना रूपजामात्रोर्देवादेरीप्सितवृतौ" इति। आशिषां भार्याभिलाषाणां पतिः साधकः। "आशीरुरगदंष्ट्रायां शुभवाक्याभिलाषयोः"। यदि मे मया व्रतः व्रतसमूहो धृतः अनुपयुक्तत्वेन विधिवत्[४] भवत्कृतस्तर्हि स सत्यः सच्चिदानन्दात्मा श्रीकृष्णः करोतु मम पाणिग्रहणं करोत्विति शेषः[५]। व्रतानां समूह इत्यस्मिन्नर्थे अच् प्रत्ययः। यदि सत्यो धृतो व्रतोऽस्ति तर्हि स व्रतः स्वफलत्वेन कृष्णं नः पतिं करोत्विति वा ॥ ४० ॥

---

१. नीलाया एव सत्येत्यपरं नाम। अत्रैव यद्वक्ष्यति द्वारकामेत्य सत्ययेति।

२. विवक्षाभावान्न सन्धिः। नीलेति विश्रुतेति पाठो ललितः। — स.

३. गुरूणा महता अर्हणेन पूजासाधनेन। गुरूणा पुरोधसा सहेति वा — स.

४. भवन् कृत इति ग. पाठः। भवेत् कृत इत्याशयः स्यात्।

५. मम पाणिग्रहणमिति शेषः इति पेशलम्।

अर्चितं पुनरित्याह नारायण जगत्पते । आत्मना देव पूर्णस्य करवाणि किमल्पकः ॥ ४१ ॥

यत्पादपङ्कजरजः शिरसा बिभर्ति श्रीरब्जजः सगिरिशः सहलोकपालैः ।

लीलातनुः स्वकृतसेतुपरीप्सया यः काले दधत् स भगवान् स्वकृतेन तुष्येत् ॥ ४२ ॥

श्रीशुक उवाच

तमाह भगवान् कृष्णः कृतासनपरिग्रहः । मेघगम्भीरया वाचा सस्मितं कुरुनन्दन ॥ ४३ ॥

श्री भगवानुवाच

अन्यत्र काले विदुषः स्वयंवराद्ध्याचितारं वरमाहुरुत्तमम् ।

स हि प्रभूणां पुरुषार्थभागिनां वेलां विनाऽह्वाययति क्षितीश्वर ॥ ४४ ॥

नरेन्द्र याञ्चा कविभिर्विगर्हिता राजन्यबन्धोर्निजधर्मवर्तिनः ।

तथापि याचे तव सौहृदेच्छया कन्यां त्वदीयां न हि शुल्कदा वयम् ॥ ४५ ॥

राजोवाच

कोऽन्यस्तेऽभ्यधिको नाथ कन्यावर इहेप्सितः । गुणैकधाम्नो यस्याङ्गे श्रीर्वसत्यनपयिनी ॥ ४६ ॥

किन्त्वस्माभिः कृतः पूर्वं समयः सात्वतर्षभ । पुंसां वीर्यपरीक्षार्थं कन्यावरपरीप्सया ॥ ४७ ॥

सप्तैते गोवृषा वीर दुर्दान्ता दुरवग्रहाः । एतैर्भग्नाः सुबहुशो भिन्नगात्रा नृपात्मजाः ॥ ४८ ॥

यदीमे निगृहीताः स्युस्त्वयैव यदुनन्दन । वरो भवानभिमतो दुहितुर्मे श्रियः पते ॥ ४९ ॥

श्रीशुक उवाच

एवं समयमाकर्ण्य बद्ध्वा परिकरं प्रभुः । आत्मानं सप्तधा कृत्वा न्यगृह्णाल्लीलयैव तान् ॥ ५० ॥

---

आत्मना स्वलाभेन ॥ ४१ ॥ स्वकृतसेतुपरीप्सया स्वकल्पितवर्णाश्रमलक्षणसेतुपालनेच्छया मयि स्थितः स्वेनैव कृतेन कर्मणा ॥ ४२,४३ ॥

विदुषो विद्वांसः स्वयंवरादन्यत्र काले अयाचितारं वरमुत्तममाहुः । पुरुषार्थभागिनां प्रयोजनांशभाजां प्रभूणां मध्ये स अर्थार्थी तां वेलां कालं विनाऽह्वाययति आत्मानमिति शेषः । आह्वानमिति पाठे सोऽयाचिता स्वयंवरकालं विनापि स्वहूतिं प्रभूणामाह्वानमर्हतीति शेषः । वेलेति पाठे प्रभूणामाह्वानं विनापि स एव वेला कालः स्वयंवराख्य इत्याहुरित्यर्थः ॥ ४४ ॥

सामान्यमुक्त्वा विशिनष्टि– **नरेन्द्रेति** । राजन्यबन्धोः राज्ञां वंशे जातस्य निजधर्मवर्तिनः क्षात्रधर्ममनुवर्तमानस्य । शुल्कदा वेतनप्रदाः ॥४५,४६॥ कन्यायाः वरपरीप्सया वरेच्छया ॥४७॥ दुर्दान्ताः अशक्यशिक्षाः । दुरवग्रहा ग्रहीतुमशक्याः ॥ ४८,४९ ॥

बद्ध्वा तान् दामभिः शौरिर्भग्नवीर्यान् हतौजसः । व्यकर्षल्लीलया बद्धान् बालो दारुमयान् यथा ॥
ततः प्रीतः सुतां राजन् ददौ कृष्णाय विस्मितः। तां प्रत्यगृह्णात् भगवान् विधिवत् सदृर्शी प्रभुः॥
राजपत्न्यः स्वदुहितुः कृष्णं लब्ध्वा प्रियं पतिम् । लेभिरे परमानन्दं जातश्च परमोत्सवः ॥ ५३ ॥
शङ्खभेर्यानका नेदुर्गीतवाद्यद्विजाशिषः । नरा नार्यः प्रमुदिताः सुवासःस्रगलङ्कृताः ॥ ५४ ॥
दशधेनुसहस्राणि पारिबर्हमदाद् विभुः । युवतीनां त्रिसाहस्रं निष्कग्रीवसुवाससाम् ॥ ५५ ॥
नवनागसहस्राणि नागाच्छतगुणान् रथान् । रथाच्छतगुणानश्वानश्वाच्छतगुणान् नरान् ॥ ५६ ॥
दम्पती रथमारोप्य महत्या सेनया वृतौ । स्नेहप्रक्लिन्नहृदयो यापयामास कौशलः ॥ ५७ ॥
पारिबर्हं च सङ्गृह्य द्वारकामेत्य सत्यया । रेमे यदूनामृषभो भगवान् देवकीसुतः ॥ ५८ ॥
श्रुतकीर्तेः सुतां भद्रामुपयेमे पितृष्वसुः । कैकेयीं भ्रातृभिर्दत्तां कृष्णः सन्तर्दनादिभिः ॥ ५९ ॥
सुतां च मद्राधिपतेर्लक्षणां लक्षणैर्युताम् । स्वयंवरे जहारैकः स सुपर्णः सुधामिव ॥ ६० ॥
अन्याश्चैवंविधा भार्याः कृष्णस्यासन् सहस्रशः । भौमं हत्वा तन्निरोधादाहृताश्चारुदर्शनाः ॥६१॥

॥ इति द्विषष्टितमोऽध्यायः ॥

---

## ॥ अथ त्रिषट्षितमोऽध्यायः ॥

### राजोवाच

**यथा हतो भगवता भौमो नीता यथा स्त्रियः । निरुद्धा यास्तदाचक्ष्व विक्रमं शार्ङ्गधन्वनः ॥ १ ॥**

---

परिकरं चैलोष्णीषादिलक्षणम् ॥ ५०-५३ ॥ गीतवाद्यानि द्विजाशिषश्च तथा । प्रमुदिताः, अभवन्निति शेषः ॥ ५४ ॥ पारिबर्हं स्त्रीधननिकायम् ॥ ५५-६० ॥ भौमं हत्वा, तस्य भौमस्य निरोधात् तत्कारागृहादाहृताः आनीताः ॥ ६१ ॥

॥ इति श्रीमद्भागवतटीकायां श्रीविजयध्वजतीर्थकृतायां पदरत्नावल्यां दशमस्कन्धे उत्तरार्धे द्विषष्टितमोऽध्यायः ॥

---

यथा कथम् । पृष्टं तत् सर्वम्[१] ॥ १, २ ॥

---

१. कस्य मूलस्थपदस्य व्याख्यानमिदमिति न ज्ञायते ।

श्रीशुक उवाच

द्वारवत्यां महाभागे निवसत्यच्युते नृप । दीनेनोद्विग्नचित्तेन समागम्य त्रिविष्टपात् ॥ २ ॥
हृतच्छत्रेण शक्रेण हृतकुण्डलबन्धुना । हृतामराद्रिस्थानेन ज्ञापितो भौमचेष्टितम् ॥ ३ ॥
इन्द्रमाश्वास्य गोविन्दः सुसम्पूज्य विसृज्य च । सभार्यो गरुडारूढः प्राग्ज्योतिषपुरं ययौ ॥ ४ ॥
हिमाद्रौ तुङ्गशिखरे जलाग्न्यनिलदुर्गमम् । गिरिदुर्गैः शस्त्रदुर्गैर्मुरपाशायुतैर्वृतम् ॥ ५ ॥
स सम्प्राप्य भटैर्गुप्तं दानवेन्द्रपुरं महत् । गदया निर्बिभेदाद्रिं प्राकाराकारसंस्थितम् ॥ ६ ॥
तन्निर्भिद्य प्रविश्यान्तः शस्त्रदुर्गाणि सायकैः । चकर्त मौरवं पाशं चक्रेणामन्दमच्छिनत् ॥ ७ ॥
क्षुरमालां तथा घोरां निचकर्तासिना हरिः । वायव्यास्त्रेण सलिलं वारुणास्त्रेण पावकम् ॥ ८ ॥
हरिर्निमिषमात्रेण नाशयामास भारत । शङ्खनादेन तीव्रेण मनांसि च मनस्विनाम् ॥ ९ ॥
पाञ्चजन्यध्वनिं श्रुत्वा युगान्ताशनिभीषणम् । मुरः शयान उत्तस्थौ दैत्यः पञ्चशिरा जलात् ॥१०॥

त्रिशूलमुद्यम्य सुदुर्निरीक्ष्यो युगान्तसूर्यानलरोचिरुज्ज्वलः ।
ग्रसंस्त्रिलोकानिव पञ्चभिर्मुखैरभ्यद्रवत् तार्क्ष्यसुतं यथोरगः ॥ ११ ॥
आविध्य शूलं तरसा गरुत्मते निरस्य वक्त्रैर्व्यनदन् स पञ्चभिः ।
खं रोदसी सर्वदिशोन्तरं [१]महानापूरयन्नण्डकटाहमावृणोत् ॥ १२ ॥
तमापतन्तं त्रिशिखं गरुत्मते चकर्त बाणद्वितयेन केशवः ।
मुखेषु तस्यापि शरान् समर्पयन् पुनर्गदां सोप्यमुञ्चन्मधुद्विषे ॥ १३ ॥
तामापतन्तीं गदया गदाग्रजो गदां मृधे निर्बिभिदे सहस्रधा ।
उद्यम्य बाहूनाभिधावतो दिशः शिरांसि चक्रेण जहार लीलया ॥ १४ ॥

---

हृते कुण्डले यस्य स हृतकुण्डलो बन्धुर्माता यस्य स तथा तेन नरकेण । हृतम् अमराद्रौ मेरौ स्थानं यस्य स तथा ॥ ३ ॥ प्राग्ज्योतिषपुरं नरकस्य नगरम् ॥ ४ ॥

कुत्र तन्नगरम् ? अत्राह– **हिमाद्राविति** । जलेनाग्निनानिलेन वायुना दुर्गमं गन्तुमशक्यम् । मुरपाशानामयुतैः अनेकैः षट्सहस्रैरित्यर्थः । यद्वा मुरपाशैरयुतैरसम्बद्धैः पृथक् कृतैः शस्त्रदुर्गैः दुर्गमपि[२] । गिर्यादिक्रमेण[३] ॥ ५, ६ ॥ अमन्दमनलम्[४] ॥ ७-११ ॥ निरस्य मुक्त्वा । आपूरयन् नादेनेति शेषः ॥ १२-१४ ॥

---

१. सर्वदिशो खैरापूरयन्निति ग.पाठः ।  २. दुर्गमोऽपि इति ग. पाठः ।

३. गिर्यादिक्रमेण निर्बिभेदेत्यन्वयः स्यात् । अत्र कोपि लेखकप्रमादः ।

४. अमन्दं मौरवं पाशं चक्रेणाच्छिनत् —– स.

व्यसुः पपाताम्भसि कृत्तकन्धरो निकृत्तपक्षोऽद्रिरिवेन्द्रतेजसा ।
पपात विष्णोः शिरसि प्रमोदिनी प्रसूनवृष्टिर्निहते मुरेऽसुरे ॥ १५ ॥
तस्यात्मजाः सप्त पितुर्वधातुराश्चिकीर्षवस्तस्य रणे प्रतिक्रियाम् ।
ध्रुवश्च विष्णुः[1] श्रवणो विभावसुर्नभो वसुश्चानरणश्च सप्तमः ॥ १६ ॥
रथान् समारुह्य वृषप्रयुक्तान् भौमप्रयुक्ता भवनान्निराक्रमन् ।
अयुञ्जतासज्य शरासनान् भटाः शक्त्यर्ष्टिशूलानजिते रुषोल्बणान् ॥ १७ ॥
तच्छत्रुकूटं भगवान् स मार्गणैरमोघवीर्यस्तिलशश्चकर्त ।
तान् योद्धुमिच्छूननयद् यमक्षयं निकृत्तशीर्षोरुभुजाङ्घ्रिकार्मुकान् ॥ १८ ॥
ततो द्रुततरं गत्वा भटा राजपुरं महत् । हतान् मुरसुतान् सर्वान् नरकाय न्यवेदयन् ॥ १९ ॥
स्वानीकपानच्युतचक्रसायकैर्हतान् निशम्याशु चुकोप भूमिजः ।
निरीक्ष्य दुर्मर्षणमास्रवन्मदैर्गजैः पयोब्धिप्रभवैर्निराक्रमत् ॥ २० ॥
रथैरनेकसाहस्रैर्गजैश्च बहुभिर्वृतः । महत्या सेनया युक्तश्चायादायोधनं बली ॥ २१ ॥
दृष्ट्वा सभार्यं गरुडोपरिस्थितं सूर्योपरिष्टात् सतडिद्घनं यथा ।
गृहीतकोदण्डमुदारशङ्खकौमोदकीचक्रधरं चतुर्भुजम् ॥ २२ ॥
नीलजीमूतसङ्काशं दृष्ट्वा तं गजवाहनम् । शङ्खमाध्माय गोविन्दः सिंहनादं व्यनीनदत् ॥ २३ ॥
वरुथिनी दैत्यपतेः सुघोरान् शरान् ववर्षाच्युतमूर्ध्नि दुर्जया ।
कृष्णे स भौमो व्यसृजच्छतघ्नीं लोहायसीं तेन भृशं स विव्यथे ॥ २४ ॥
अनेकबाणान् निर्मुक्तान् नरकेण स्मयन्निव । चकर्त बाणैर्युगपत् तदद्भुतमिवाभवत् ॥ २५ ॥
ततोनु सैन्यं भगवान् गदाग्रजो विचित्रपत्रैर्निशितैः शरौघैः ।
निकृत्तबाहूरुशिरोङ्घ्रिविग्रहं चकार तूर्णं नृप साश्वकुञ्जरम् ॥ २६ ॥

॥ इति त्रिषष्टितमोऽध्यायः ॥

---

प्रमोदिनी सन्तोषजननी ॥ १५,१६ ॥ भौमेन प्रयुक्ताः प्रेरिताः । निराक्रमन् निर्गताः । आसज्य ज्यामारोप्य ॥१७॥ कूटं समूहम् ॥१८-२०॥ आयोधनं युद्धस्थानम् ॥२१॥ सूर्योपरिष्टात् स्थितं तडिता सहितं घनं मेघम् ॥२२,२३॥ लोहेनायसा निर्मितां तेन शतघ्नीप्रयोगेण विव्यथे । "व्यथ ताडने" इति धातोः । ताडितोऽभूत्[2] ॥२४,२५॥ ततोनु तदनन्तरम् ॥२६॥

॥ इति श्रीमद्भागवतटीकायां श्रीविजयध्वजतीर्थकृतायां पदरत्नावल्यां दशमस्कन्धे उत्तरार्धे त्रिषष्टितमोऽध्यायः ॥

---

१. ध्रुवश्चरिष्णुरिति स. पाठः । ध्रुवश्चरिष्णुरित्यत्र चरिष्णुरिति वा रिष्णुरिति नाम वेति दैत्यगुरुर्विचार्यः । ताम्रोन्तरिक्ष इति च पठन्ति — स.    २. ताडितोऽभूत् व्यथित इवाभवदित्यर्थः — स.

## ॥ अथ चतुःषष्टितमोऽध्यायः ॥

श्रीशुक उवाच

यानि योधैः प्रयुक्तानि शस्त्रास्त्राणि कुरूद्वह । अच्छिनत् केशवस्तीक्ष्णैः शरैरेकैकशस्त्रिभिः ॥
उह्यमानः सुपर्णेन पक्षाभ्यां निघ्नतान् गजान्[१] ॥ १ ॥
गरुत्मता हन्यमानास्तुण्डपक्षनखैर्गजाः । तुरङ्गमाश्च दुर्द्धर्षाः पेतुरुर्व्यां गतासवः ॥ २ ॥
दृष्ट्वा विद्रावितं सैन्यं गरुडेनार्दितं स्वकम् । तं भौमः प्राहरच्छक्त्या वज्रेणेव हरिर्गिरिम् ॥ ३ ॥
तयाऽतिविद्धो गरुडो मालाविद्ध इव द्विपः । न किञ्चिदपि राजेन्द्र चचाल नरकाहवे ॥ ४ ॥
ततः कार्मुकमादाय नरकः शरसञ्चयान् । मुमोच कृष्णे तान् सर्वानच्छिनत् केशवः शरैः ॥ ५ ॥
ततोऽर्धचन्द्रं नरकं सुसंधाय शरासने । आक्रष्टुकामं विज्ञाय तच्चापं केशवोऽच्छिनत् ॥ ६ ॥
ततः कालायसमयीं गदां गुर्वीं धरासुतः । आददे तां क्षुरप्रेण चकर्त मधुसूदनः ॥ ७ ॥
ततो निशातं परशुं भौमः परबलार्दनः । प्राहिणोद् विष्णवे तं च चिच्छेद श्रीधरोऽसिना ॥ ८ ॥
ततः कृष्णाय चिक्षेप तोमरान् पञ्चसप्तति । चकार सिंहनादं च नरकः परवीरहा ॥ ९ ॥
तांस्तोमरान् कुरुश्रेष्ठ शरेणैकेन केशवः । चिच्छेद यौगपद्येन तदद्भुतमिवाभवत् ॥ १० ॥
शूलं भौमोच्युतं हन्तुमाददे वितथोद्यमः । तद्विसर्गात् पूर्वमेव नरकस्य शिरो हरिः ॥
अपाहरद् गजस्थस्य चक्रेण क्षुरनेमिना ॥ ११ ॥

सकुण्डलं चारुकिरीटभूषितं बभौ पृथिव्यां पतितं समुज्ज्वलत् ।
हाहेति साध्वित्यृषयः सुरेश्वरा माल्यैर्मुकुन्दं विकिरन्त ईडिरे ॥ १२ ॥
हत्वा हरिर्नरकं दैत्यवर्यं मरुद्गणैः सहितो लोकपालैः ।
समाहूतः पौरमुख्यैः सभार्यः प्राग्ज्योतिषं प्राविशद् द्रष्टुकामः ॥ १३ ॥

तत्रापश्यद् यदुश्रेष्ठो विचित्रं मणिपर्वतम् । छत्रं च वारुणं हृद्यं सलिलस्रावि भारत ॥ १४ ॥
शक्राय प्राहिणोद् भूयः केशवो मणिपर्वतम् । वरुणाय तथा च्छत्रं प्राहिणोद् दैत्यकिङ्करैः ॥१५॥
तान् विसृज्य हरिर्देवान् स्वयमेव जगत्पतिः । प्राविशद् भौमसदनं पुरन्दरपुरोपमम् ॥ १६ ॥

---

गरुडस्य पक्षाभ्यां निघ्नतान् निहतान् गजानच्छिनत् ॥ १,२ ॥ हरिरिन्द्रः ॥ ३-५ ॥ आक्रष्टुकामम् आकर्णपूर्णमाकर्षणेच्छुम् ॥ ६ ॥ नाम्ना क्षुरप्रेण शरेण ॥ ७-१० ॥ क्षुरनेमिना निशितनेमिना ॥ ११-१७ ॥

---

१. निघ्नतान् गजानिति टीकसम्मतः पाठः स्यात् । निहतानित्यर्थे निघ्नतानित्यार्षप्रयोगः । निघ्नता गजानित्येव स पाठः ।

ततो धरा कृष्णमुपेत्य कुण्डले प्रतप्तजाम्बूनदरत्नभास्वरे ।
पौत्रं च वीरं भगदत्तसञ्ज्ञितं निवेद्य मालामपि वैजयन्तीम् ॥ १७ ॥
अस्तौषीदथ विश्वेशं देवी देववरार्चितम् । प्राञ्जलिः प्रणता राजन् भक्तिप्रवणया धिया ॥ १८ ॥

पृथिव्युवाच

नमस्ते देवदेवेश शङ्खचक्रगदाधर । भक्तेच्छोपात्तरूपाय परमात्मन् नमोऽस्तु ते ॥ १९ ॥
नमः पङ्कजनाभाय नमः पङ्कजमालिने । नमः पङ्कजनेत्राय नमस्ते पङ्कजाङ्घ्रये ॥ २० ॥
नमो भगवते तुभ्यं वासुदेवाय विष्णवे । पुरुषायादिबीजाय पूर्णबोधाय ते नमः ॥ २१ ॥
अजाय जनयित्रेऽस्य ब्रह्मणेऽनन्तशक्तये । चराचरात्मन् लोकेश परमात्मन् नमोऽस्तु ते ॥ २२ ॥
त्वं वै सिसृक्षू रज उत्कटः प्रभो[१] तमो निरोधाय बिभर्षि संवृतम् ।
स्थानाय सत्वं जगतो जगत्प्रभो कालः प्रधानः पुरुषोऽस्यपारः ॥ २३ ॥

---

भक्त्या प्रणवया सन्नतया धिया बुद्ध्या ॥ १८ ॥ भक्तेच्छया उपात्तं स्वीकृतं रूपम् ॥ १९,२० ॥

वासुदेवाय सर्वत्र स्थित्वा द्योतमानाय । विष्णवे सच्चिदानन्दरूपाय । पुरुषाय पूर्णषड्गुणाय । आदेर्ब्रह्मणो बीजाय व्यञ्जकाय ॥ २१ ॥

अस्य प्रपञ्चस्य जनयित्रे उत्पादकाय । ब्रह्मणे वेदादिशब्दराशिवेद्याय । सर्वशब्दवाच्यत्वे हेतुमाह– **अनन्तेति** । 'अनन्ता वै वेदाः' इति श्रुतेः[२]। चराचरात्मन् चराचरमात्मा देहः प्रतिमास्थानीयो यस्य स तथा । परमात्मन् प्रत्यक्स्वरूप ॥ २२ ॥

सिसृक्षुः स्रष्टुकामः । उत्कटस्त्वं रजोगुणं बिभर्षि उपादत्से । निरोधाय संहाराय । संवृतं ज्ञानसंवरणं तमोगुणम् । स्थानाय जगत्स्थित्यै सत्वगुणम् । कालः प्राणिनामदृष्टपाचकः । एवंविधः क इति तत्राह– **प्रधान इति** । प्रधानशब्दवाच्यः प्रधानपुरुषोऽसि, पुरुषोत्तमोऽसीत्यर्थः । 'उत्तमः पुरुषस्त्वन्यः' इति स्मृतेः । पुरुषत्वेऽपि परिच्छिन्नत्वं नास्तीत्याह– **अपार इति** । यद्वा जगत्कारणं प्रधानपुरुष[३] इति केचित् सङ्गिरन्ते । तदाशङ्कां निवारयति–**प्रधान इति** । प्रधानशब्दवाच्यः पुरुषशब्दवाच्यश्च त्वमेव । तर्हि परिशिष्यमाणः क इत्यत्राह– **अस्येति** । अस्य प्रपञ्चस्य पारः परिशिष्यमाणः संसारनदीपारः तीरान्तरशब्दवाच्यस्त्वमित्यर्थः ॥ २३ ॥

---

१. उत्कटमिति स पाठः । उत्कटं कार्याभिमुखम् — स. २. अस्पष्टमिदं वाक्यम् ।
३. प्रधानमिति पाठः स्यात् ।

अहं पयो ज्योतिरथोऽनिलो नभो मात्राणि देवा मन इन्द्रियाणि ।
कर्ता महानित्यखिलं तु कारणं त्वय्यद्वितीये भगवन्नयं भ्रमः ॥ २४ ॥
तस्यात्मजोऽयं तव पादपङ्कजं भीतः प्रपन्नार्तिहरं प्रसादितुम् ।
तत्पालयैनं कुरु हस्तपङ्कजं शिरस्यमुष्याखिलकल्मषापहम् ॥ २५ ॥

श्रीशुक उवाच

इति भूम्याऽर्चितो वाग्भिर्भगवान् भक्तिनम्रया । प्रसन्नः प्रददौ तस्मै भगदत्ताय चाभयम् ॥ २६ ॥
राज्ये नियोज्य तं वंश्ये तदमात्यांश्च तत्पदे । भौमावरोधकान्तानां श्रेणीं संप्राविशद्धरिः[१] ॥२७॥
तत्र राजन्यकन्यानां षट्सहस्राधिकायुतम् । भौमाहृतानां विक्रम्य राजभ्यो ददृशे हरिः ॥ २८ ॥
तं प्रविष्टं स्त्रियो वीक्ष्य ताः सर्वा नवयौवनाः । स्वलङ्कृता विचित्राङ्ग्यो नरवर्यविमोहिताः ॥२९॥
मनसा वव्रिरेऽभीष्टं पतिं दैवोपपादितम् । भूयात् पतिरयं मह्यं धाता तमनुमोदताम् ॥ ३० ॥

---

सृष्ट्यादिकर्ता त्वमित्युक्तत्वेवाखण्डकर्तृत्वप्रतीतावपि धात्रादिशब्देभ्यो विरिञ्चादेरपि कर्तृत्वशङ्कामिदानीं निवारयति- **अहमिति** । अहं नाम्ना पृथिवी । मीयन्त इति मात्राणि शब्दादिविषयाः । मानं स्वविषयज्ञानं स्वसत्वेन त्रायन्त इति वा । देवा इन्द्रियाभिमानिनः । कर्ता अहङ्काराभिमानी । महान् महत्तत्वाभिमानी विरिञ्चः । तुशब्द एवार्थे । इतिशब्दः समाप्तिवचनः । महदाद्यभिमान्यन्तमखिलकारणम् अद्वितीये च त्वय्येव । त्वमेव धारयसीत्यर्थः। आतिथ्यवत् कदाचिन्नेत्याह- **भगवन्निति** । हे ऐश्वर्यादिगुणार्णव अयं जगद्भ्रमः चक्रभ्रमणवद् विश्वस्य परिवर्तनं त्वन्नियतमित्यर्थः । भ्रमशब्दस्यारोपार्थत्वाङ्गीकारे अर्थक्रियानुपपत्तिरिति ॥ २४ ॥

साम्प्रतं तव किं विधेयमित्यत्राह- **तस्येति** । अयं पुरोवर्ती, तस्य नरकस्यात्मजः औरसः पुत्र इति जानीहीति शेषः । तर्हि किमिति मत्प्रणामं न करोतीत्यत्राह- **तवेति** । तव प्रपन्नार्तिहरं पादपङ्कजं प्राप्य त्वां प्रसादयितुं भीतस्त्रस्त इत्यन्वयः । ततः किम्? अत्राह- **तदिति** । यतो भीतस्तत्तस्मात् पालनं चैतदेवेत्याह- **कुर्विति** । अनेन किं फलं स्यादित्याशङ्क्य पापनिमित्तं सर्वमनर्थजातं, तन्नाशे सर्वसुखं स्यादिति भावेनाह- **अखिलेति** । यद्वा प्रपन्नार्तिहरं भगवन्तं[२] प्रसादयितुं तव पादपङ्कजं भीतः सञ्चलितः प्राप्त इत्यर्थः । ''भी भयसञ्चलनयोः'' इति धातुः । अतो रक्षेत्याह- **तदिति** ॥ २५-३० ॥

---

१. स प्राविशद् हरिरिति -स. पाठः । २. भवन्तमिति स्यात् ।

इति सर्वेश्वरे कृष्णे ता नार्यो हृदयं दधुः । ताः प्राहिणोद् द्वारवतीं सुमृष्टरुचिराम्बराः ॥ ३१ ॥
खरैरुष्ट्रैर्महाकोशान् रथांश्च द्रविणं महत् । ऐरावतकुलेभांश्च चतुर्दन्तान् मदोत्कटान् ॥ ३२ ॥
भगदत्ताय दत्वैकं सुप्रतीकं ततोऽपरान् । पाण्डुरांश्च चतुःषष्टिं प्रेषयामास केशवः ॥ ३३ ॥

॥ इति चतुःषष्टितमोऽध्यायः ॥

---

## ॥ अथ पञ्चषष्टितमोऽध्यायः ॥

### श्रीशुक उवाच

हत्वा नरकमत्युग्रं दानवं दानवान्तकः । आरुह्य गरुडं प्रायात् प्राग्ज्योतिषपुरान्नृप ॥ १ ॥
स गच्छन् गगने विष्णुर्वन्दितुं देवमातरम् । जगाम त्रिदशावासं सहितः सत्यभामया ॥ २ ॥
स्वर्गद्वारं गतो विष्णुर्दध्मौ शङ्खं महास्वनम् । उपाजग्मुस्तदाकर्ण्य सार्घ्यपाद्या दिवौकसः ॥ ३ ॥
पूजितस्तैः सुरैः कृष्णो भक्तिनम्रैर्गतज्वरैः । सुरेन्द्रभवनं दिव्यं प्रविवेश मनोरमम् ॥ ४ ॥
तत्र शक्रः समं शच्या पूजयामास केशवम् । रत्नैराभरणैर्दिव्यैर्गन्धमाल्यैश्च शोभनैः ॥ ५ ॥
ततः प्रायात् पुरीं मातुरदित्याः सह भार्यया । दृष्ट्वोपतस्थे तं देवी पुत्रमायान्तमच्युतम् ॥ ६ ॥
ववन्दे तां हरिस्तं सा पूजयामास भामिनी । आशीर्भिः परमप्रीता चिरं दृष्टं यदूत्तमम् ॥ ७ ॥
सत्यभामाऽपि कौरव्य श्वश्र्वाः कृष्णेन चोदिता । पादयोः कुण्डले तस्या निधाय प्रणनाम वै ॥८॥
स्नुषामाश्लिष्य सन्तुष्टा सा पुनर्लब्धकुण्डला । आनन्दबाष्पप्रचुरा प्राहेदं कश्यपप्रिया ॥ ९ ॥
न ते जरा न वैरूप्यं कान्तेन सह विप्रियम् । भूयात् कल्याणि सुव्यक्तं मत्प्रसादात् कदाचन ॥

---

वंश्ये वंशप्राप्ते । तत्पदे अमात्यपदे । श्रेणीं पङ्क्तिं शालां वा ॥ ३१ ॥ ऐरावतकुले जातानिभान् ॥ ३२ ॥ पाण्डुरान् श्वेतदेहान् ॥ ३३ ॥

॥ इति श्रीमद्भागवतटीकायां श्रीविजयध्वजतीर्थकृतायां पदरत्नावल्यां दशमस्कन्धे उत्तरार्धे चतुःषष्टितमोऽध्यायः ॥

---

गतज्वरैः नष्टसन्तापैः ॥ १-५ ॥ उपतस्थे समीपे तस्थौ ॥ ६ ॥ भाम तेजः अस्या अस्तीति भामिनी । चिरकालदृष्टम् ॥ ७ ॥ श्वश्र्वाः भर्तुर्मातुः ॥ ८,९ ॥

सत्यभामामाशिषा योजयति– न ते जरेति । वैरूप्यं सौन्दर्याभावः । विप्रियं कलहः । ॥ १०,११ ॥

ततोऽनुज्ञाप्य तां देवीं त्रिदशानपि केशवः । आरुह्य प्रययौ तार्क्ष्यं सहितः सत्यभामया ॥ ११ ॥

महात्मना गगने देवदेव्यौ गरुत्मता नीयमानौ विचित्रम् ।
अपश्यतां नन्दनं चारु गुप्तं शचीभर्तुर्दयितं हृद्यगन्धम् ॥ १२ ॥
वनं दृष्ट्वा दिव्यगन्धं सुपुष्पं कृष्णं सत्या प्राह पाणौ गृहीत्वा ।
प्रविश्यास्मिन् साधुचित्तं विहर्तुं मुहूर्तं मे काम्यते केशवेति ॥ १३ ॥

अथावरुह्य गरुडात् तस्या वचनगौरवात् । प्रविवेश वनं कृष्णः पालितं शक्रकिङ्करैः ॥ १४ ॥
तत्रापश्यत् तरून् दिव्यान् मत्तसारङ्गनादितान् । फलभारनतान् भूरिप्रसूनरजसावृतान् ॥ १५ ॥
चलत्किसलयोपेतान् विहङ्गध्वनिशोभितान् । विचरन्ती तथा तत्र पारिजातं महाद्रुमम् ॥ १६ ॥
दृष्ट्वा पप्रच्छ गोविन्दं विस्मयाकुललोचना । को नामायं तरुर्देव विचित्रो भुवनत्रये ॥ १७ ॥
सत्यमेतस्य वृक्षस्य कृतार्थाः फलभागिनः । प्रवालमूलो विपुलो जातरूपमहातनुः ॥ १८ ॥
इन्द्रनीलच्छदच्छन्नो लसद्वैदूर्यवेदिकः । माणिक्यपुष्पो विविधमुक्ताफलफलान्वितः ॥ १९ ॥
गोमेदपक्वप्रकरो वज्रकिञ्जल्करञ्जितः । स्फुरन्मरकतस्थूलशाखाशतविराजितः ॥ २० ॥

---

हृद्यगन्धम् । हृदयप्रियगन्धम् ॥१२॥ काम्यते, वनसम्पदिति शेषः । काम्यतो इति वा[1] । ॥ १३, १४ ॥

सारङ्गनादितान् भृङ्गनादितान् ॥ १५,१६ ॥ विविधं चित्रं मुख्यं मिश्रफलं यस्मिन् स विचित्रः । ''चित्रमालेख्यमिश्रयोः'' इति । ''मिश्रमाविलमुख्ययोः'' इति च ॥ १७ ॥

एतस्य वृक्षस्य फलभागिनः कृतार्थाः इति सत्यमित्यन्वयः । वैचित्र्यं कथयति **प्रवालेति** । प्रवालो रत्नविशेष एव मूलं शिफा यस्य स तथा । विपुलो विस्तृतः । जातरूपं सुवर्णमेव महातनुर्यस्य स तथा ॥ १८ ॥

इन्द्रनीलमेव च्छदः पत्रम् इन्द्रनीलच्छदः, तेन छन्नः संवृतः । लसद् वैदूर्यरत्नमेव वेदिः परिष्कृता भूमिर्यस्य स लसद्वैदूर्यवेदिकः । माणिक्यरत्नान्येव पुष्पाणि यस्य स माणिक्यपुष्पः । विविधानि तारतम्योपेतानि मुक्ताफलान्येव फलानि विविधमुक्ताफलफलानि तैरन्वितः ॥ १९ ॥

गोमेदरत्नान्येव पक्वानि तेषां प्रकरा यस्य सः तथा । वज्ररत्नान्येव किञ्जल्कानि वज्रकिञ्जल्कानि तै रञ्जितोऽरुणीकृतः । स्थूलाः शाखाः । स्फुरन्ति मरकतरत्नान्येव स्थूलशाखाः स्फुरन्मरकतस्थूलशाखाः, तासां शतेन विराजितः ॥ २०,२१ ॥

---

१. मे चित्तं विहर्तुं कामयते । कामय इति पाठे चित्रमिति — स.

तरुरेष जगन्नाथ मनो मे हरते भृशम्। नेतव्योऽयं पुरीं वृक्षो यद्यहं ते प्रिया प्रभो ॥ २१ ॥
छायायामुपविष्टां मामन्यपत्न्यस्तवानघ। दृष्ट्वा मंस्यन्ति दयितां सर्वाभ्यो मां तवाच्युत ॥ २२ ॥
इत्युक्तो देवकीपुत्रः सत्यया प्रियकान्तया। प्राह नायं तरुर्भद्रे नेतव्यो नन्दनाद् वनात् ॥ २३ ॥
पुरा क्षीराम्बुधेर्जातो मथ्यमानात् सुरासुरैः। शक्राय दत्तः सकलैः सदा तत्फलभोक्तृभिः ॥२४॥
तन्नाहार्यमनादृत्य मया मित्रं शतक्रतुम्। तरुरत्नं सरोजाक्षि धर्ममेवानुतिष्ठता ॥ २५ ॥
नीयमाने च वृक्षेऽस्मिन् पारिजाते शुचिस्मिते। सङ्ग्रामो जायते घोरस्त्रिदशैर्जयकाङ्क्षिभिः ॥२६॥
इत्युक्तो देवदेवेन सत्यभामा पुनर्हरिम्। प्राह भीषयसे किं मां व्यलीकैः कंसमर्दन ॥ २७ ॥
नाभ्यनन्दद् दुराचारा शची मां गृहमागताम्। हेतुर्हि वृक्षस्तस्यायं भर्तृपौरुषगर्विता ॥ २८ ॥
नेतव्यः सर्वथा वृक्षः पारिजातोऽयमच्युत। प्रियाहं तव चेन्नाथ नोचेद् विरम साम्प्रतम् ॥ २९ ॥
इत्युक्तः सत्यया कृष्णस्ताननादृत्य रक्षकान्। उत्पाट्यारोपयामास पारिजातं गरुत्मति ॥ ३० ॥
ततो निवारयामासुर्गोविन्दं वनपालकाः। केचिद् द्रुततरं जग्मुर्देवेन्द्राय निवेदितुम् ॥ ३१ ॥
कृष्णकृष्ण न हर्त्तव्यस्तरुरेषोऽमरार्चितः। हरसे यदि तस्य त्वं फलं सद्योऽनुभोक्ष्यसि ॥ ३२ ॥
प्राप्नोषि न पुरीं कृष्ण सहानेन महीरुहा। सद्यः पश्यसि देवेन्द्रं पृष्ठतोऽभ्युद्यतायुधम् ॥ ३३ ॥
सुरेन्द्रान्तिकमासाद्य द्रुतं ते वनरक्षकाः। उपविष्टं समं शच्या शक्रं दृष्ट्वाऽब्रुवन् नृप ॥ ३४ ॥

वनरक्षका ऊचुः

अवज्ञायाखिलान् देवानिन्द्राणीं च त्वया सह। जहार कृष्णदयिता पारिजातं महाद्रुमम् ॥ ३५ ॥
उक्ताऽस्माभिर्भृशं देव वारयद्भिर्हरिप्रिया। उपालभ्याहरद् वृक्षं भर्तृपौरुषगर्विता ॥ ३६ ॥

श्रीशुक उवाच

इत्याकर्ण्याप्रियं शक्रो दण्डाहत इवोरगः। शचीं विलोक्य पार्श्वस्थां नामृष्यत् तत्पराभवम् ॥३७॥
सन्नाहोद्योगमाघोष्य सन्निपात्य च सैनिकान्। लोकपालान् समाहूय निश्चक्राम सुरेश्वरः ॥ ३८ ॥
ऐरावतं चतुर्दन्तमारुह्य वरवारणम्। गृहीतवज्रं गच्छन्तमनुजग्मुर्दिवौकसः ॥ ३९ ॥

---

मंस्यन्ति निरूपयन्ति ॥ २२-२४ ॥ तस्मात् समुद्राज्जातानां फलानां भोक्तृभिः ॥ २५ ॥ जयकाङ्क्षिभिः जयेच्छुभिः। जितयुद्धैर्वा ॥ २६ ॥ व्यलीकैः कपटवचनैः ॥ २७ ॥ तरून्नयने निमित्तमाह– **नेति** ॥ २८ ॥ विरम प्रियभाषणादिति शेषः ॥ २९-३५ ॥ उपालभ्य भर्त्सयित्वा ॥ ३६,३७ ॥ सन्नाहो युद्धोद्योगार्थं विद्यमानं गोमुखम्। सन्निपात्य सम्मेलयित्वा सैनिकान् सेनानायकान् ॥ ३८, ३९ ॥

वैश्वानरस्तु[1] तुरगमारुह्य दृढदंशितः । घोरां शतघ्नीमादाय स्रुवपुच्छां ययौ रणम् ॥ ४० ॥
यमस्त्वारुह्य महिषं दण्डमादाय वीर्यवान् । मृत्युकालादिभिर्युक्तो युद्धार्थी शक्रमन्वगात् ॥ ४१ ॥
निर्ऋतिश्च महातेजा घोरमारुह्य पौरुषम् । असिहस्तो महाबाहुर्युद्धाय प्रययौ नृप ॥ ४२ ॥
मकरं भीषणाकारमारुह्य वरुणस्त्वरन् । पाशोद्यतकरः प्रायाद् युद्धायानुशचीपतिम् ॥ ४३ ॥
वायुः कृष्णमृगारूढो दंशितस्तोमरायुधः । सुरेश्वरमनुप्रायाद् योद्धुं चक्रभृता सह ॥ ४४ ॥
ऊढां चतुर्भिः पुरुषैः शिबिकां नरवाहनः । योद्धुकामस्त्वरन् प्रायाद् विष्णुना मुद्गरायुधः ॥४५॥
ईशानो वृषभं तुङ्गमारुह्य शितशूलभृत् । वासवेन समं प्रायात् भूतकोटिसमन्वितः ॥ ४६ ॥
भेरीशङ्खमृदङ्गैश्च पणवानकगोमुखैः । सुवर्णसुषिरैर्दिव्यैः कांस्यतालैश्च भूरिभिः ॥ ४७ ॥
रथनेमिनिनादैश्च हयानां खरनिःस्वनैः । क्ष्वेलितास्फोटितैर्घोरैः सङ्ग्रामाह्वानगर्जनैः ॥ ४८ ॥
तिष्ठतिष्ठेति मा याहि क्व यासीति पुनःपुनः । प्रवदद्भिः सुरगणैः शतशोऽथ सहस्रशः ॥ ४९ ॥
कम्पयद्भिश्च शस्त्रौघैः प्रेषयद्भिश्च वाहनम् । पुरोऽहमिति गच्छद्भिः शतशोऽथ सहस्रशः ॥ ५० ॥
घोरैर्ज्याघातनिर्घोषैः सिंहनादैश्च भूरिभिः । अभिदुद्रुवुरुद्धृत्ताः सिंहं गोमायवो यथा ॥ ५१ ॥

॥ इति पञ्चषष्टितमोऽध्यायः ॥

## ॥ अथ षट्षष्टितमोऽध्यायः ॥

### श्रीशुक उवाच

सुरानभिद्रुतान् दृष्ट्वा सत्यामाह जगत्पतिः । इमे प्राहुणिकाः प्राप्तास्तव वृन्दारका इति ॥ १ ॥
तथा ब्रुवाणे देवेशे प्रेषिता देवसैनिकाः । नर्दन्तो मुमुचुः कृष्णे शरवृष्टिं कुरूद्वह ॥ २ ॥
ततः शार्ङ्गं समादाय सत्या व्यसनविक्लवा । मुक्तांश्चिच्छेद बाणौघैस्तान्छरान् देवसैनिकैः ॥ ३ ॥

---

स्रुवं पुच्छे यस्याः सा ताम् ॥ ४० ॥ मृत्युकालादिभिः प्रभृतिभिः ॥ ४१-४३ ॥ चक्रभृता कृष्णेन ॥ ४४ ॥ नरवाहनो वैश्रवणः ॥ ४५,४६ ॥ सुवर्णसुषिरैः काहलैः ॥ ४७ ॥ क्ष्वेलितैः सिंहनादैः आस्फोटितैः भुजास्फालैः ॥ ४८-५१ ॥

॥ इति श्रीमद्भागवतटीकायां श्रीविजयध्वजतीर्थकृतायां पदरत्नावल्यां दशमस्कन्धे उत्तरार्धे पञ्चषष्टितमोऽध्यायः ॥

प्राहुणिकाः सम्भावनया भोजयितव्याः[2] । वृन्दारका देवाः ॥ १-३ ॥

---

१. तुरगो वाहनमात्रेऽपीत्युक्तेर्वाहनमुरणम् । वैश्वानरस्तूरणमिति च सरलः पाठः — स.

२. प्राहुणिका आमन्त्र्य भोजयितव्याः - स.

ततो वैश्रवणः श्रीमान् बहुभिर्गुह्यकैर्वृतः । विस्फारयंस्तालमात्रं कार्मुकं कनकाटवि ॥ ४ ॥
स्वर्णपुङ्खान् शरान् मुञ्चन् सिंहवद् व्यनदन् मुहुः । अभिदुद्राव समरे तिष्ठ तिष्ठेति चाब्रवीत् ॥५॥
तैः[१] पञ्चभिः शरैः सत्या निशितैर्मर्मभेदिभिः । अर्पयामास वेगेन विशाले जठरे नृप ॥ ६ ॥
सोऽतिविद्धो रणे बाणैस्त्रिभिर्भल्लैर्हरिप्रियाम् । अयोधयद् धनपतिः सिंहनादं व्यनीनदत् ॥ ७ ॥
तानप्राप्तानर्धचन्द्रैस्त्रिभिश्चिच्छेद सा शरैः । भूयोऽष्टभिः शरैर्देवी वत्सदन्तैर्मनोजवैः ॥ ८ ॥
विव्याध गुह्यकपतेर्ललाटे कुरुपुङ्गव । पीडितस्तैर्भृशं बाणैः पौलस्त्यः क्रोधविह्वलः ॥ ९ ॥
सन्दधे निशितान् बाणानेकविंशति संयुगे । तानन्तरे सत्यभामा सायकैः सप्तभिर्नृप ॥ १० ॥
चिच्छेद निमिषार्धेन त्रिधैकैकं हरिप्रिया । सत्यभामा ततः क्रुद्धा पौलस्त्यस्य महद् धनुः ॥ ११ ॥
अर्धचन्द्रेण चिच्छेद मुष्टिदेशे द्विधा नृप । ततोऽन्यच्चापमादाय सज्जं[२] कृत्वा धनेश्वरः ॥१२॥
ववर्ष शरजालानि क्रोधात् सर्प इव श्वसन् । सर्वांस्तान् सायकान् सञ्चे शरैः सन्नतपर्वभिः॥१३॥
चिच्छेद लीलया देवी तदद्भुतमिवाभवत् । ततः क्रुद्धो वैश्रवणः सत्यभामां विलोक्य च ॥ १४ ॥
प्राह पश्य हनिष्यामि त्वामद्य मम पौरुषम् । इत्युक्त्वा तालमात्रे तु चापे गुह्यकसत्तमः ॥ १५ ॥
पश्यतां सर्वदेवानां मार्ष्टुकामः पराभवम् । सन्दधे सूदितुं देवीमर्धचन्द्रं शरोत्तमम् ॥ १६ ॥
तदवेत्य मनस्तस्य क्षुरप्रेण हरिप्रिया । चिच्छेद कार्मुकं तस्य मुष्टिदेशे कुरूद्वह ॥ १७ ॥
ततो मुद्गरमादाय घोरं दानवभीषणम् । भ्रामयित्वा शतगुणं देव्यै चिक्षेप वित्तपः ॥ १८ ॥
तं मुद्गरं महाघोरमायान्तं कुरुपुङ्गव । वामेन पाणिना कृष्णो जग्राहोच्चैर्जहास च ॥ १९ ॥
ततो निवृत्तसङ्ग्रामो विदुद्राव धनेश्वरः । शशंस देवीं कृष्णश्च समाश्लिष्याभिपूजयन् ॥ २० ॥
पलायिते धनपतौ सङ्ग्रामे कंसवैरिणा । वरुणोऽभ्यद्रवत् कृष्णं पाशमुद्यम्य संयुगे ॥ २१ ॥
तमायान्तमभिप्रेक्ष्य तार्क्ष्यो मकरवाहनम् । अभ्यद्रवन्महासत्वः शार्दूल इव गोवृषम् ॥ २२ ॥
तयोः समभवद् युद्धं घोरं तार्क्ष्यजलेशयोः । यथा देवासुरे युद्धे बलिवासवयोरिव ॥ २३ ॥
तत्र कश्यपपुत्रस्य कण्ठे पाशं जलेश्वरः । क्रुद्धश्चकर्ष विन्यस्य सिंहः सिंहमिवौजसा ॥ २४ ॥
तं पक्षकोट्या गरुडः समुद्धृत्य जलेश्वरम् । पद्भ्यां गृहीत्वा मकरं चिक्षेप वरुणालये ॥ २५ ॥
कृच्छ्राद् गृहीतपाशस्तु वरुणो गतवाहनः । पदातिरेव सङ्ग्रामाद् विदुद्राव यथागतम् ॥ २६ ॥

---

कनकाविद्धाऽटविः कोटिर्यस्य तत्तथा ॥ ४,५ ॥ विशाले जठरे विस्तृतोन्नतोदरे, ओदनमिवेति शेषः ॥ ६, ७ ॥ वत्सदन्तैः शरविशेषैः ॥ ८,९ ॥ अन्तरे मध्ये ॥ १०-१९ ॥ निवृत्तसङ्ग्रामः निवृत्तयुद्धः ॥ २०-२३ ॥ कश्यपपुत्रस्य गरुडस्य ॥ २४-२६ ॥

---

१. तमिति स्यात् । कोशेषु तैरित्येव वर्तते ।      २. सज्यमिति स्यात् ।

तथा गते वार्धिपतौ सङ्ग्रामे वायुपावकौ । सममेवाभ्यवर्तेतां गोविन्दं कुरुसत्तम ॥ २७ ॥
पावकः पञ्चभिर्बाणैर्मारुतश्च तथा त्रिभिः । अयोधयद् हृषीकेशं तदद्भुतमिवाभवत् ॥ २८ ॥
ततः प्रहस्य गोविन्दो बाणेनैकेन पावकम् । विव्याध सप्तभिश्चैव समीरणमरिन्दमः ॥ २९ ॥
एकेनाग्निः क्षुरप्रेण गाढं वक्षसि ताडितः । तमसाधारणं मत्वा विदुद्राव रणाद् द्रुतम् ॥ ३० ॥
दृष्ट्वा समीरणो युद्धादपयातं हुताशनम् । सायकाचितसर्वाङ्गमात्मानं चातिविह्वलः ॥ ३१ ॥
विदित्वा पुण्डरीकाक्षं सङ्ग्रामे प्रत्युपस्थितम् । न्यवर्तत कुरुश्रेष्ठ प्राणत्राणपरायणः ॥ ३२ ॥
ततो महिषमारुह्य दण्डमुद्यम्य भास्वरम् । कृष्णमभ्यद्रवद् युद्धे यमः क्रोधारुणेक्षणः ॥ ३३ ॥
तमुद्यतमहादण्डं दृष्ट्वा कमललोचनः । गदां विसृज्य तद्धस्तात् पातयामास भूतले ॥ ३४ ॥
गदया ताडिते दण्डे त्रस्तहस्तः परेतराट् । विदुद्राव परावृत्य महिषेण कुरूद्वह ॥ ३५ ॥
वैवस्वतं गतं दृष्ट्वा निर्ऋतिर्भयविह्वलः । नाभ्यवर्तत गोविन्दं योद्धुं विदिततद्बलः ॥ ३६ ॥
शङ्करस्तु महातेजास्त्रिशूली वृषवाहनः । अनेकभूतसङ्घातैः कृष्णमभ्यद्रवद् रणे ॥ ३७ ॥
तावुभौ लोकविख्यातौ बलिनौ वीर्यशालिनौ । चक्राते कदनं घोरं परस्परजयैषिणौ ॥ ३८ ॥
ईशानो दशभिर्बाणैः कृष्णं तार्क्ष्यं च पञ्चभिः । विव्याध समरे राजन् तिष्ठतिष्ठेति चावदत् ॥३९॥
ततः शार्ङ्गं समादाय कृष्णः परपुरञ्जयः । त्रिंशद्भिर्युगपद् बाणैर्विव्याध वृषवाहनम् ॥ ४० ॥
गरुडः पन्नगरिपुः पद्भ्यां द्वाभ्यां च संयुगे । पक्षाभ्यां चञ्चुकोट्या च मर्दयामास तं वृषम् ॥४१॥
भूयोऽपि कृष्णो नाराचैः पञ्चाशत्प्रमितैर्नृप । योधयामास समरे शङ्करं लोकशङ्करम् ॥ ४२ ॥
ततः त्रिशूलमाविध्य निशितं घोरदर्शनम् । प्राहिणोद् वासुदेवाय कुपितो धूर्जटिर्नृप ॥ ४३ ॥
दृष्ट्वा त्रिशूलमायान्तं केशवस्तं निवारितुम् । गदां कौमोदकीं गुर्वीं प्राहिणोद् दैत्यमर्दनीम् ॥४४॥
ते वै कौमोदकीशूले कृत्वा नभसि सङ्गरम् । ज्वलमाने महाघोरे पेततुः सममम्बुधौ ॥ ४५ ॥
निपात्याब्धौ त्रिशूलं तद्गदा कौमोदकी पुनः । आससाद करं विष्णोस्त्रिशूलमपि शूलिनः ॥ ४६ ॥
तत उद्यम्य निशितं खड्गं पन्नगभूषणः । कृष्णमभ्यद्रवत् सङ्ख्ये पार्ष्णिभ्यां चोदयन् वृषम् ॥४७॥
तूर्णं गृहीत्वा बाहुभ्यां विषाणे तस्य नन्दिनः । सशूलपाणिं चिक्षेप वैनतेयो धनुश्शतम् ॥ ४८ ॥

---

वार्धिपतौ वरुणे ॥ २७-२९ ॥ असाधारणं लोकोत्तरम् ॥ ३०-३३ ॥ सायकाचितसर्वाङ्गं शरसञ्चितसर्वावयवम् ॥ ३४ ॥ परेतराट् यमः ॥ ३५-३७ ॥ कदनं युद्धम् ॥ ३८-४० ॥ चञ्चुकोट्या तुण्डकोट्या ॥ ४१,४२ ॥ धूर्जटिः शङ्करः ॥ ४३-४६ ॥ पन्नगभूषणः सर्पालङ्कारः शिवः । पार्ष्णिभ्यामास्फालनेन चोदयन् प्रेरयन् ॥ ४७ ॥ शूलपाणिना सहितं नन्दिनम् ॥ ४८ ॥

ततो विसृज्य सङ्ग्रामं त्रिशूली वृषवाहनः । प्रमथैः सहितः प्रायात् कुरुश्रेष्ठ यथागतम् ॥ ४९ ॥

॥ इति षट्षष्टितमोऽध्यायः ॥

---

## ॥ अथ सप्तषष्टितमोऽध्यायः ॥

### श्रीशुक उवाच

ततः स्वयं देवपतिस्तुङ्गमारुह्य वारणम् । किरीटी बद्धतूणीरः प्रगृहीतशरासनः ॥ १ ॥
अभ्यद्रवद् रणे कृष्णं गजः केसरिणं यथा । पारिजातकृते राजन् पौलोम्या वचनं स्मरन् ॥ २ ॥
तमायान्तमभिप्रेक्ष्य हरिः परपुरञ्जयः । शङ्खं दध्मौ महानादं दिशः समभिपूरयन् ॥ ३ ॥
तमभिद्रुत्य देवेन्द्रो महद् विस्फारयन् धनुः । क्षुरप्रेण सुतीक्ष्णेन कृष्णं विव्याध सङ्गरे ॥ ४ ॥
हरिर्विद्धः क्षुरप्रेण देवराजेन वक्षसि । प्रहस्य साधु शक्रोऽसि युक्तं त इति चाब्रवीत् ॥ ५ ॥

भूयोऽपि बाणान् दश देवराजः सन्धाय चापे भुजगेन्द्रकल्पे ।
आकर्णपूर्णं विनिकृष्य कृष्णे मुमोच चक्रे स ह सिंहनादम् ॥ ६ ॥
तानन्तरे कंसरिपुर्महात्मा छित्वा त्रिधैकेन शरेण बाणान् ।
विव्याध बाणैर्दशभिः सुधौतैः पुरन्दरं भारत लीलयैव ॥ ७ ॥

ते शरा देवराजस्य गात्रं निर्भिद्य सावृति । शोणिताक्ताः प्रदृश्यन्ते भूयो वेगेन निर्गताः ॥ ८ ॥
पुनश्च शक्रः कोदण्डे शरान् सन्धाय षोडश । मुमोचाकृष्य गोविन्दस्तांश्चकर्त शरैस्त्रिभिः ॥ ९ ॥
भूयोऽपि बाणैस्त्रिंशद्भिः सुरराजानमाहवे । अयोधयद्धरिस्ते च ममज्जुः शक्रवक्षसि ॥ १० ॥
ततश्चुकोप देवेन्द्रो दण्डाहत इवोरगः । प्रेषयामास तोत्रेण तार्क्ष्यं प्रति महागजम् ॥ ११ ॥
स गजः प्राप्य गरुडं पाकशासनचोदितः । चतुर्भिर्घटयामास दन्तैर्बाहुयुगान्तरे ॥ १२ ॥
ततस्तुण्डेन गरुडः पक्षाभ्यां च तथा नखैः । अर्दयामास कौरव्य गजमैरावतालयम् ॥ १३ ॥

---

त्रिशूलित्वं गणस्यापि सम्भवतीति वृषवाहन इति ॥ ४९ ॥

॥ इति श्रीमद्भागवतटीकायां श्रीविजयध्वजतीर्थकृतायां पदरत्नावल्यां दशमस्कन्धे उत्तरार्धे षट्षष्टितमोऽध्यायः ॥

---

ते तव युक्तं न्याय्यम्, स्त्रीजितस्येति शेषः। "न्याय्यसंयुक्तयोर्युक्तम्" इति यादवः ॥१-५॥ सः ह इति पदच्छेदः । स शक्रः ह युद्धमारभे ॥ ६,७ ॥ गात्रं गात्राण्यवयवान् । सावृतीति क्रियाविशेषणम् । सकवचं निर्भिद्य ॥ ८, ९ ॥ आहवे युद्धे ॥ १० ॥ तोत्रेण गजताडनचर्मणा ॥ ११ ॥ बाहुयुगान्तरे वक्षसि ॥ १२-१४ ॥

शक्रस्तु वज्रमुद्यम्य घोरं दानवभीषणम् । पश्यतां सर्वभूतानां प्रजहार वृषाकपिम् ।। १४ ।।

तमागतं मधुरिपुर्वज्रं दुश्च्यवनायुधम् । वामेन पाणिना विष्णुर्जग्राह प्रजहास च ।। १५ ।।

निरायुधः सुरपतिर्गरुडार्दितवाहनः । व्यावर्तत रणाद् राजन् व्रीडावनतकन्धरः ।। १६ ।।

तं दृष्ट्वा भ्रष्टसङ्कल्पं पलायनपरायणम् । सत्यभामा सुरपतिं प्रहसन्तीदमब्रवीत् ।। १७ ।।

सत्यभामोवाच

एहि शक्र निवर्तस्व मा याहि कुलिशायुध । पलायनमयुक्तं हि पौलोम्या वल्लभस्य ते ।। १८ ।।

ऐश्वर्यमत्ता पौलोमी भर्तृपौरुषगर्विता । अवमंस्यति सद्यस्त्वां भार्या रणपराजितम् ।। १९ ।।

इत्थं देव्या गिरं शक्रः सोपालम्भमुदीरिताम् । निशम्याभिमुखो भूत्वा प्राह देवीं शुचिस्मिताम् ।।

इन्द्र उवाच

येनामरासुरमहोरगयक्षसिद्धगन्धर्वकिन्नरपिशाचनिशाचराद्याः ।
सृष्टास्त्रिलोकगुरुणा रणमूर्ध्नि तेन को वा न याति परिभूतिमलं विरुद्धय ।। २१ ।।

वत्सो यथा तनुबलः सकृदेत्य मातर्यूधस्यपानसमये कुरुते विरोधम् ।
तद्वद्वयं च निजशैशवमप्रमेये नाथे विरुध्य पिशिताशनि दर्शयामः ।। २२ ।।

इति सत्राजितः पुत्रीमुक्त्वा भारतसत्तम । कृताञ्जलिः प्रणम्याह वासुदेवं पुरन्दरः ।। २३ ।।

इन्द्र उवाच

नमस्ते देवदेवेश पुण्डरीकाक्ष माधव । क्षमस्व मत्कृतं विश्वमपराधं जगत्पते ।। २४ ।।

न मां त्वदेकशरणं शरणागतवत्सलः । भूरिबालिशमक्षान्तं परित्यक्तुं त्वमर्हसि ।। २५ ।।

ऐरावतश्च कुलिशं पारिजातश्च पादपः । देवराज्यं च भगवन्निदं चाप्यमरावती ।। २६ ।।

---

दुश्च्यवनायुधम् इन्द्रायुधम् । अजेयप्रहारार्थमायुधं सम्प्राप्तमिति दर्शयितुं पुनर्वचनमिति ज्ञातव्यम्[1] ।। १५-१७ ।।

निवर्तस्व पुनरागच्छ । मा याहि मा गच्छ प्रहसन्तीत्यस्य तात्पर्यं दर्शयति– **पौलोम्येति** ।।१८।। अवमंस्यति अवज्ञास्यति ।।१९,२०।। गतासुरावेश इन्द्रः प्रतिवक्ति– **येनेति** ।।२१।।

तनुबलः अल्पबलः । मातर्यूधस्येति पाठः ऊधस्यमूधसि जातं क्षीरम् ।। मातरि विरोधम् । हे पिशिताशनि । "याज्ञियान्ने च मांसे च पिशितं देवभोजनम्" इति ।। २२-२४ ।। भूरिबालिशम् अधिकमूर्खम् ।। २५-२७ ।।

---

१. अस्पष्टमिदम् ।

त्वदधीनमिदं विश्वमहमाज्ञाकरस्तव । अत्र यद् रोचते नेतुं नीयतां तद् यथेच्छया ॥ २७ ॥
किन्तु वक्ष्यामि गोविन्द मूलं त्वयि विरुध्यतः । रमसे मानुषे लोके भगवंस्त्वमनन्यधीः ॥ २८ ॥
तत्र नीते पारिजाते भवता कल्पपादपे । तेन सा जायते स्वर्गान्निर्विशेषा वसुन्धरा ॥ २९ ॥
तेनाहं यदुशार्दूल विरोधं कृतवांस्त्वयि । तत् क्षन्तव्यं त्वया देव कार्याकार्यं विजानता ॥ ३० ॥

श्रीशुक उवाच

इत्युक्तो देवराजेन देवदेवो जनार्दनः । पुरन्दरं कुरुश्रेष्ठ प्राह प्रहसिताननः ॥ ३१ ॥

श्री भगवानुवाच

अपराधस्त्वया शक्र न कश्चिदपि चेष्टितः । यत् कृतं तत् ममैवागस्त्वभेदादावयोः परम् ॥ ३२ ॥
यत् त्वयाऽद्य सहस्राक्ष चेष्टितं साध्वसाधु वा । मयैव तत् कृतं सर्वं नात्र कार्या विचारणा ॥३३॥
पारिजातस्तरुश्रेष्ठो मय्यारूढे तरुर्दिवम् । मन्निर्देशात् सहस्राक्ष स्वयमेष्यति नन्दनम् ॥ ३४ ॥
इत्युक्त्वा वासुदेवेन देवराजः कुरूद्वह । गोविन्दं सत्यभामां च प्रसाद्य गरुडं तथा ॥ ३५ ॥
पुत्रो मे रक्षितव्यस्ते श्यालो बीभत्सुरित्यपि । भूयोभूयः प्रार्थयित्वा कृतानुज्ञः पुरन्दरः ॥ ३६ ॥
सार्धं सकलदिक्पालैर्लब्धवज्रः पुरं ययौ । पुरन्दरं सदिक्पालं विसृज्य यदुनन्दनः ॥ ३७ ॥
गरुडं प्राह कौरव्य यास्यामो द्वारकामिति । गोविन्दं सत्यभामां च पारिजातं च पादपम् ॥ ३८ ॥
गरुडः पन्नगरिपुर्लीलयैव वहन् ययौ । सम्प्रविश्य पुरीं रम्यां द्वारतोरणभूषिताम् ॥ ३९ ॥
पताकामालिनीं दिव्यां सिक्तसंमृष्टभूतलाम् । ऊढोपायनताम्बूलस्रग्गन्धकलशाक्षतैः ॥ ४० ॥
उपस्थितैर्यदुश्रेष्ठैः पूजितश्चाभिवन्दितः । तूर्यमङ्गलनिर्घोषैर्वेदस्वाध्यायनिःस्वनैः ॥ ४१ ॥
प्रविवेश सभां दिव्यां सुधर्मां वृद्धसेविताम् । आहुकं वसुदेवं च बलभद्रं तथाऽग्रजम् ॥ ४२ ॥
अभिवाद्य यथान्यायं पूजितस्तैर्यथोचितम् । उपविष्टः सभामध्ये काञ्चने परमासने ॥ ४३ ॥
रराज राजशार्दूल बृहस्पतिपुरोगमैः । लोकपालैरुपासीनैर्दिवि वज्रधरो यथा ॥ ४४ ॥
प्राङ्गणे सत्यभामायाः पारिजातं महाद्रुमम् । स्थापयामास गोविन्दः सर्वतो मणिकुट्टिमे ॥ ४५ ॥
आयान्तं देवकीपुत्रं योषित्सार्थेन भूरिणा । श्रुत्वा द्रष्टुमुपाजग्मुः सकला यादवस्त्रियः ॥ ४६ ॥
वसुदेवस्तु कौरव्य रोहिण्याद्याः स्त्रियोऽखिलाः । आजग्मुः केशवं द्रष्टुं जितशत्रुमनामयम् ॥४७॥
स दृष्ट्वा मातरो विष्णुर्देवक्या सह सङ्गताः । चक्रे प्रणाममाशीर्भिस्ताश्च तं प्रत्यपूजयन् ॥ ४८ ॥

---

मूलं निमित्तम् । अनन्यधीः तत्रैव निरतबुद्धिः ॥ २८-३१ ॥ त्वया यत्कृतं तदागः मयैव कृतं विद्धि । आवयोः परं मत्यभेदात् त्वयि स्थित्वा त्वयैवापराधं कारयित्वा परिहरामीत्यर्थः ॥ ३२ ॥ एतदेव निवृणोति– **यत् त्वयेति** ॥ ३३-४४ ॥ मणिकुट्टिमे मणिबद्धस्थाने ॥ ४५ ॥ योषित्सार्थेन, निरन्तरपत्न्या सहेति शेषः ॥ ४६-४९ ॥

रुग्मिण्याद्यास्तथा सप्त महिष्यः कृष्णवल्लभाः । प्रणेमुर्देवमभ्येत्य दिव्यरूपाः स्वलङ्कृताः ॥४९॥
रेवती रामदयिता त्रिवक्रा च यशस्विनी । एकानङ्गा च तन्वङ्गी चित्रा च वरवर्णिनी ॥ ५० ॥
अन्याश्च कुरुशार्दूल भोजवृष्ण्यन्धकस्त्रियः । आनीतप्रमादासार्थं जितशत्रुमनामयम् ॥ ५१ ॥
गोविन्दं सत्यभामां चाप्यानीतममरद्रुमम् । प्रीत्युत्फुल्लमुखाः सर्वे कौतुकाद् द्रष्टुमाययुः ॥ ५२ ॥
तं समेता यथाजोषं लाजप्रसवतन्दुलैः । स्पृष्ट्वा मूर्ध्नि मुकुन्दस्य जग्मुः स्वं स्वं निवेशनम् ॥५३॥

॥ इति सप्तषष्टितमोऽध्यायः ॥

---

## ॥ अथ अष्टषष्टितमोऽध्यायः ॥

श्रीशुक उवाच

आराध्य देवदेवेशं शङ्करं लोकशङ्करम् । तपसा तोषयित्वा तं कैलासगिरिवासिनम् ॥ १ ॥
रुग्मिण्यां तनयं लेभे दग्धं कामं पुनर्हरिः । वीरं प्रद्युम्ननामानं रुपौदार्यगुणान्वितम् ॥ २ ॥

राजोवाच

पुत्रार्थमीश्वरं दृष्ट्वा स्वयं लब्धवरो हरिः । अवाप कीदृशं पुत्रं किन्नामानं वदस्व मे[१] ॥ ३ ॥

श्रीशुक उवाच

कामस्तु वासुदेवांशो दग्धः प्राग् रुद्रमन्युना । देहोपपत्तये भूयस्तमेव प्रत्यपद्यत ॥ ४ ॥

---

एकानङ्गा दुर्गा । सुभद्रा चित्रा तारेति च । 'अनुत्पन्नरजा श्यामा तद्दृष्टा वरवर्णिनी । अप्रसूता भवेद् गौरी' इति च ॥५०॥ आनीतः प्रमदानां सार्थो येन स तथा तम् ॥५१-५३॥

॥ इति श्रीमद्भागवतटीकायां श्रीविजयध्वजतीर्थकृतायां पदरत्नावल्यां दशमस्कन्धे उत्तरार्धे सप्तषष्टितमोऽध्यायः ॥

---

"सोऽयं मनुष्यलोकः पुत्रेण जय्यः" इति श्रुतिविहितसदाचारो भुव्यवतीर्णैर्देवादिभिरनुष्ठेय इति दर्शयितुं श्रीकृष्णस्य तदनुष्ठानप्रकारं शम्बरासुरवधलक्षणं विक्रमं च कथयत्यस्मिन्नध्याये । लोकस्य जनस्य शं सुखं करोतीति लोकशङ्करस्तम् । देवदेवो नारायणः ईशः स्वामी यस्य स तथा तम् आराध्य, लोकदृष्ट्या इति शेषः ॥ १-३ ॥

---

१. यद्यपि सामान्यतो रूपौदार्यगुणान्वित इति प्रकार उक्तस्तथापि विविच्य ज्ञातुमयं प्रश्न इति । नाम्नः पूर्वं प्रद्युम्ननामानमित्युक्तेः पुनः किन्नामानमिति परीक्षिदपरीक्षक इव कथमप्राक्षीदिति चेत् । सत्यम् । किन्निमित्तं नाम प्रद्युम्नेति यस्य तं किन्नामानमित्यर्थपरत्वोपपत्तेः -स ।

अनीह एतद् बहुधैक आत्मना सृजत्यवत्यत्ति न बध्यते यथा ।
भौमैर्हि भूमिर्बहुनामरूपिणी अहो विभूम्नश्चरितं विडम्बनम् ॥ १७ ॥
अथापि काले स्वजनाभिगुप्त्यै बिभर्षि स त्वं खलनिग्रहाय ।
स्वलीलया वेदपथं सनातनं वर्णाश्रमात्मा पुरुषः परो भवान् ॥ १८ ॥

ब्रह्म ते हृदयं शुक्लं तपः स्वाध्यायसंयमैः । यत्रोपलब्धं सुव्यक्तमव्यक्तं च ततः परम् ॥ १९ ॥
तस्माद् ब्रह्मकुलं ब्रह्मन् शास्त्रयोनेस्तवात्मनः । सभाजयसि सद्धाम तद्ब्रह्मण्यगुणो भवान् ॥२०॥
अद्य नो जन्मसाफल्यं विद्यायास्तपसो दृशः । त्वया सङ्गम्य सङ्गत्या यत् त्वं नः श्रेयसां परः॥२१॥
नमस्तस्मै भगवते कृष्णायाकुण्ठमेधसे । स्वयोगमायया छन्नमहिम्ने परमात्मने ॥ २२ ॥
न यं विदन्त्यमी भूपा एकारामाश्च वृष्णयः । मायाजवनिकाच्छन्नमात्मानं कालमीश्वरम् ॥ २३ ॥

---

चेष्टायामतर्क्यत्वमुपपादयन्ति **अनीह इति** । आत्मना परप्रेरणामन्तरेण । यथा भूमिः भौमैः स्वविकृतैः पदार्थैर्बहुनामरूपिणी कार्यरूपेण बध्यते यथा[1] । तथा भवान् न बध्यत इत्यन्वयः । यो भवाननीहः कूटस्थ एतज्जगद् बहुधा सृजत्यवत्यत्तीति तस्मादहो विभूम्नः चरितं, कीदृशम् ? विडम्बयतीति विडम्बनम् ॥ १७ ॥

यद्यपि लोकविडम्बनशक्त्या मोहयसि तथापि काले सज्जनोपप्लवसमये वेदपथं च बिभर्षि । वर्णाश्रमात्मा वर्णाश्रमस्थापनाचार्यः ॥ १८ ॥

यतो वेदमार्गप्रणेता ततस्ते तव ब्राह्मणकुलम्[2]। शुक्लत्वं च कस्मादित्यत्राह **यत्रेति** । [3]यत्र ब्राह्मणकुले अव्यक्तं परं ब्रह्म सुव्यक्तं व्यवधानमन्तरेण उपलब्धं दृष्टं यत् तस्मात् शास्त्रयोनेः वेदप्रतिपाद्यस्यात्मनस्तव सद्धाम प्रशस्तं स्थानम् । यतः सम्भावयति तत् तस्माद् भवान् ब्रह्मण्यगुणः ब्राह्मणप्रियत्वलक्षणगुणशिखामणिः ॥ १९, २० ॥

न केवलं जन्मन एव साफल्यमासीत् किन्तु विद्यादेरपीति । तत्र निमित्तं त्वया सङ्गम्येति । त्वं नः त्वत्सङ्गत्या श्रेयसां सकाशात् परः पुरुषार्थ इति यत्[4] ॥ २१ ॥ एकस्त्वमेवारामः क्रीडावनं येषां ते तथा ॥ २३ ॥

---

१. यथेत्यधिकमिति भाति । २. हृदयं प्रियमिति शेषः । 'हृदयं प्रियम् । हृद्ययनात्' इति तात्पर्यम् ।
३. यत्र ब्राह्मणकुले अव्यक्तं ब्रह्म सुव्यक्तं ततस्तस्मात् परं शुक्लं चेति सत्यधर्मीया योजना ।
४. अस्पष्टेयं योजना ।

तस्याद्य ते ददृशिमाङ्घ्रिमघौघमर्षतीर्थास्पदं हृदिधृतं सुविपक्वयोगैः ।
उत्सिक्तभक्त्युपहृताशयजीवकोशा आपुर्भवद्गतिमथानुगृहाण भक्तान् ॥ २४ ॥

श्रीशुक उवाच

इत्यनुज्ञाप्य दाशार्हं धृतराष्ट्रं युधिष्ठिरम् । राजर्षिवर्यांस्तान् गन्तुं मुनयो दधिरे मनः ॥ २५ ॥
तद् वीक्ष्यताननुव्रज्य वसुदेवो महायशाः । प्रणम्य चोपसङ्गृह्य बभाषेदं सुयन्त्रितम् ॥ २६ ॥

वसुदेव उवाच

नमो वः सर्वदेवेभ्यो ऋषयः श्रोतुमर्हथ । कर्मणा कर्मनिर्हारो यथा स्यान्नस्तदुच्यताम् ॥ २७ ॥

नारद उवाच

नातिचित्रमिदं विप्रा वसुदेवो बुभुत्सया । कृष्णं मत्वाऽर्भकं यन्नः पृच्छति श्रेय आत्मनः ॥२८॥
सन्निकर्षो हि मर्त्यानामनादरणकारणम् । गाङ्गं हित्वा यथाऽन्योऽम्भस्तत्रत्यो याति शुद्धये ॥२९॥

---

अघौघं मर्षयति नाशयतीत्यघौघमर्षम् । तादृशस्य तीर्थस्य गङ्गाशब्दवाच्यस्यास्पदं स्थिराश्रयम् । सुष्ठु विपक्वाः परिपाकं प्राप्ताः योगा ध्यानलक्षणाः तैः उत्सिक्तया उद्रिक्तया भक्त्या उपहृतः सम्यगुन्मूलित आशयः स्थानं यस्य स तथा । सः जीवकोशः जीवाख्य-सन्निधानस्थानीयं लिङ्गशरीरं येषां ते तदुत्सिक्तभक्त्युन्मूलितस्थानलिङ्गशरीराः । भवतो गतिं स्थानं वैकुण्ठलक्षणम् ॥ २४,२५ ॥

उपसङ्गृह्य, अनुज्ञामिति शेषः । बभाष इदम् । व्यत्ययो बहुलमिति सूत्रात् । बभाषे इदंमिति छान्दसः[१] ॥ २६ ॥

सर्वे देवा येषु सन्निहितास्ते सर्वेदेवास्तेभ्यः । सर्वत्र देवो देवनं प्रकाशनं येषां ते तथा ते तेभ्य इति वा । निर्हारो मूलच्छेदः ॥ २७ ॥

आत्मनः स्वस्य श्रेयः शिवं नः पृच्छतीति यत् तदिदं नातिचित्रम्, मर्त्यस्वभावादिति शेषः ॥ २८ ॥

कोऽयं मर्त्यस्वभाव इति तत्राह– **सन्निकर्ष इति** । तत्र गङ्गातीरे स्थितोऽन्यः पृथग्जनः बालिशः शुद्धं यद् गाङ्गं गङ्गासम्बन्धिजलं हित्वाऽन्याम्भः तटाकादिस्थं जलं यथा याति तथाऽयं विचार इत्यर्थः ॥ २९ ॥

---

१. बभाषे इदमिति स्थिते छान्दसो वा सन्धिरित्याशयः स्यात् । कचित् कोशेषु बभाषेदमिति छान्दस इति दृश्यते ।

**यस्यानुभूतिः कालेन लयोत्पत्त्यादिनाऽस्य वै । स्वतोऽन्यस्माच्च गुणतो न कुतश्चन रिष्यति ॥३०॥**

**तं क्लेशकर्मपरिपाकगुणप्रवाहैरव्याहतानुभवमीश्वरमद्वितीयम् ।**

**प्राणादिभिः स्वविषयैरुपगूढमज्ञो मेने स सूर्यमिव मेघहिमोपरागैः ॥ ३१ ॥**

**अथोचुर्मुनयो राजन्नाभाष्यानकदुन्दुभिम् । सर्वेषां शृण्वतां राज्ञां तथैवाच्युतरामयोः ॥ ३२ ॥**

**कर्मणा कर्मनिर्हार एष साधुनिरूपितः । यच्छ्रद्धया यजेद् विष्णुं सर्वयज्ञेश्वरं मखैः ॥ ३३ ॥**

**चित्तस्योपशमो यो वै कविभिः शास्त्रचक्षुषा । दर्शितः सुगमो योगो धर्मश्चात्ममुदावहः ॥ ३४ ॥**

**अयं स्वस्त्ययनः पन्था द्विजातेर्गृहमेधिनः । यच्छ्रद्धयाऽऽप्तवित्तेन शुक्लेनेज्येत पूरुषः ॥ ३५ ॥**

---

यस्यानुभूतिः स्वरूपचैतन्यं कालेनास्य जगतो लयोत्पत्यादिना । तदन्तःपातित्वेन स्वतः स्वनिमित्तेनान्यस्मात् सत्वादिगुणाच्च कुतश्चनान्यतोऽधर्मतो न रिष्यति न हिंसितं न नष्टं स्यात् । रिष हिंसायामिति धातुः ॥ ३० ॥

अज्ञः अज्ञानिवद् वसुदेवः स्वविषयैः स्वेन गृह्यमाणैः प्राणादिभिः प्राकृतैर्गूढं मेन इत्यन्वयः । क्लेशैरविद्यास्मितारागद्वेषाभिनिवेशैः कर्मपरिपाकैः पुण्यापुण्यफलैस्त्याज्यानुभोगैः, परितापेति पाठे अध्यात्मिकाभिधेयैर्विकारैः, भौतिकैर्गुणप्रवाहैः सृष्ट्यादिभिरव्याहतोऽनभिभूतोऽनुभवः अनुभावो माहात्म्यं यस्य स तथा तम् । अत्र हेतुगर्भविशेषणद्वयमाह– **ईश्वरमद्वितीयमिति** । उपरागो(?) राहुणा मेघादिभिराच्छन्नप्रकाशरूपं सूर्यमप्रकाशं मन्यते यथा तथेति ॥ ३१ ॥

प्रश्नप्रतिवचनमकृत्वा यत्किञ्चित् कथनं किं केन सङ्गतमिति मन्दाशङ्कां परिहर्तुमाह– **अथेति** ॥ ३२ ॥ साधुभिः विद्वद्भिर्निरूपितः ॥ ३३ ॥

कर्मणा कर्मनिर्वापणं पङ्काम्भसा पङ्कप्रक्षालनमिवानुपपन्नमित्याशङ्क्य ब्रह्मार्पणबुद्ध्याऽनुष्ठितं तत् समर्थं भवति चिकित्सितद्रव्यमिवेत्याशयेनाह– **चित्तस्येति** । कविभिः, ''शमो मन्निष्ठता बुद्धेः'' इति शास्त्रचक्षुषा यश्चित्तस्योपशमो भगवदेकनिष्ठालक्षणो दर्शितः । सुगमो योग उपायश्चिकित्सालक्षणः आत्मनः परमात्मनः मुदावहः सन्तोषजनको धर्मश्चाहिंसालक्षणः कर्मनिर्वापणसाधनम् ॥ ३४ ॥

उक्तं निगमयति– **अयमिति** । अयं ब्रह्मार्पणबुद्ध्याऽनुष्ठितः । स्वस्ति मङ्गलस्य निष्पापस्य मोक्षस्य वा अयनमाश्रयः । द्विजातेस्त्रैवर्णिकस्य गृहमेधिनः गृहस्थस्य । आप्तवित्तेन न्यायार्जितधनेन । शुक्लेन निर्मलेन ॥ ३५ ॥

वित्तैषणां यज्ञदानैर्गृहैर्दारसुतैषणाम् । आत्मलोकैषणामेवं कालेन विसृजेद् बुधः ॥
ग्रामे त्यक्तैषणाः सर्वे ययुर्धीरास्तपोवनम् ॥ ३६ ॥
ऋणैस्त्रिभिर्द्विजो जातो देवर्षिपितृणां प्रभो । यज्ञाध्ययनपुत्रैस्ताननिस्तीर्य त्यजन् पतेत् ॥ ३७ ॥
ब्रह्मचर्यसुताभ्यां वै ऋषिपित्रोर्महामुने । यज्ञैर्देवर्णमुन्मुच्य निर्ऋणोऽशरणो भवेत् ॥ ३८ ॥
वसुदेव भवान् नूनं भक्त्या परमया हरिम् ॥ जगतामीश्वरं भेजे स यद् वां पुत्रतां गतः ॥ ३९ ॥
॥ इति द्विसप्ततितमोऽध्यायः ॥

---

इदानीं शुद्धान्तःकरणस्य सन्न्यासप्रकारं निरूपयति– **वित्तैषणामिति** । बुधः संसारस्यासारतां विद्वान् यज्ञदानैरनुष्ठितैर्वित्तैषणां वित्तेच्छां विसृजेदिति सर्वत्र योज्यम् । गृहैः गृहस्थाश्रमैः सह दारसुतैषणाम् । आत्मन इहामुत्रलोके[१] । धीरास्त्यागशक्तिमन्तः । ग्रामे ग्राम्यविषये त्यक्तैषणा इत्यनेन ब्रह्मचारिणामपि सन्न्यासं सूचयति । ''यदहरेव विरजेत् तदहरेव प्रव्रजेत्'' इति विधिः ॥ ३६ ॥

तत्रातिशयितवैराग्याभावे एवंविधस्य सन्न्यासानधिकार इति स्मार्तपक्षमाहुः– **ऋणैरिति** । त्रिभिर्ऋणैर्युक्तो जातः तान् ऋणविशेषान् अनिस्तीर्य गृहादि त्यजन् अधः पतेत् । ऋणबीजभर्जनवैराग्याग्र्यभावादिति शेषः ॥ ३७ ॥

तत्र ऋणनिवारणप्रकारमाह– **ब्रह्मचर्येति** । अनेन वेदाध्ययनं सूचयति । अशरणः गृहरहितः ॥ ३८ ॥

कर्मनिर्हारणप्रश्नस्य प्रतिवचनमुक्त्वा जनसङ्ग्रहणायेदं त्वया पृष्टमस्माभिरिति[२] तदनुस्मृत्य[३] प्रोक्तं भवतस्त[४]ज्जन्मान्तरानुष्ठानशुद्धस्य[५] नेदानीं कर्तव्यमस्तीति ममत्वं[६] ध्वनयन्तः सम्बोधयन्ति– **वसुदेवेति** । नूनं निश्चयः । यद् यस्मात् भेज इत्यनेन लिटाऽनद्यतनेन परोक्षवाचिना बहूनि पुरातनानि हरिभक्तिनिमित्तानि जन्मानि सूचितानि । ''बहूनां जन्मनामन्ते ज्ञानवान् मां प्रपद्यते'' इति स्वोक्तेः ॥ ३९ ॥

॥ इति श्रीमद्भागवतटीकायां श्रीविजयध्वजतीर्थकृतायां पदरत्नावल्यां दशमस्कन्धे उत्तरार्धे द्विसप्ततितमोऽध्यायः ॥

---

१. आत्मनः स्वस्य लोकैषणां वैकुण्ठादिलोकेच्छां विसृजेत् । एकान्तिकत्वात् । स्वत एवागमिष्यति न याचनोचितेति भावः -स.

२. इतीत्यधिकमिति भाति । ३. तदनुसृत्येति पेशलम् । ४. तदित्यधिकमिति भाति ।

५. जन्मान्तरानुष्ठानसिद्धस्येति ग पाठः । ६. नेदानीं कर्तव्यमस्तीतीममर्थमिति पाठ आशास्यते ।

## ॥ अथ त्रिसप्ततितमोऽध्यायः ॥

श्रीशुक उवाच

इति तद्वचनं श्रुत्वा वसुदेवो महामनाः । तानृषीन् ऋत्विजो वव्रे मूर्ध्ना नम्योपसृत्य च ॥ १ ॥
त एवमृषयो राजन् वृता धर्मेण धार्मिकम् । तस्मिन्नयाजयन् क्षेत्रे मखैरुत्तमकल्पकैः ॥ २ ॥
तद्दीक्षायां प्रवृत्तायां वृष्णयः पुष्करस्रजः । स्नाताः सुवाससो राजन् राजानः सुष्ठ्वलङ्कृताः ॥ ३ ॥
तन्महिष्यश्च मुदिता निष्ककण्ठ्यः सुवाससः । दीक्षाशालामुपाजग्मुरालिप्ता वस्तुपाणयः ॥ ४ ॥
नेदुर्मृदङ्गपटहशङ्खभेर्यानकादयः । ननृतुर्नटनर्तक्यस्तुष्टुवुस्तत्र मागधाः ॥ ५ ॥
जगुः सुकण्ठ्यो गन्धर्वाः सुगीतं सहभर्तृकाः । तमभ्यषिञ्चन् विधिवद् भक्तमव्यग्रमृत्विजः ॥६॥
पत्नीभिरष्टादशभिः सोमराजमिवोडुभिः । ताभिर्दुकूलवलयहारनूपुरकुण्डलैः ।
स्वलङ्कृताभिर्विभवैर्दीक्षितो जनसंवृतः[१] ॥ ७ ॥
तस्यर्त्विजो महाराज नूत्नकौशेयवाससः । सप्तदश विरेजुस्ते यथा वृत्रहणोऽध्वरे ॥ ८ ॥
तदा रामश्च कृष्णश्च स्वैःस्वैर्बन्धुभिरन्वितौ । रेजतुः स्वसुतैर्दारैर्जीवेशौ स्वविभूतिभिः ॥ ९ ॥

---

धर्मेण कल्पोक्तेन विधिना । उत्तमकल्पकैः राजसूयसमैः । ''ईषदसमाप्तौ कल्पब्देश्यदेशीयर'' इति सूत्रात् ॥ १,२ ॥

''दीक्षा स्यात् व्रतसङ्ग्रहे'' इति । पुष्करस्रजः कमलबीजमालाबलम्बिकण्ठाः ॥ ३,४ ॥ आलिप्ताः, चन्दनेनेति शेषः । हिरण्यादिवस्तुपाणयः । ''हिरण्यं रजतं वापि गृहीत्वा क्रमुकं फलम् । शालां विशेद् यज्ञपत्नी शपेयुस्त्वन्यथा सुराः'' इति वचनात् ॥ ५ ॥

अव्यग्रमव्याकुलम् ॥ ६-७ ॥ होता पोता नेष्टा प्रशास्ता अध्वर्युराग्नीध्रो मैत्रावरुण इत्येवमादयो ऋत्विजः षोडश दीक्षितस्त्वेक इति सप्तदश[२] । सदस्येन वा सह । वृत्रहणः इन्द्रस्य यज्ञे ॥ ८ ॥

जीवानामीशौ । स्वरूपभूताभिर्विभूतिभिः मूर्तिमतीभिः । ''अणिमा महिमा गरिमा लघिमा प्राप्तिरेव च । ईशित्वं च वशित्वं च तथा प्राकाम्यमेव च'' इति समाख्या । ताभिः नानाविधचेतनराशिसमुदायेन तत्तद्योग्यतानुसारेण सभाजनसमयेऽपेक्षिताभिः[३] ॥ ९ ॥

---

१. जनसंवृत इति पाठो नासंवृतः । अजिनसंवृत इति निरञ्जनः पाठः -स.

२. अध्वर्युः प्रतिप्रस्थाता नेष्टा उन्नेष्टा इत्यध्वर्य्वादिचतुष्कम् । ब्रह्मा ब्राह्मणाच्छंसी आग्नीध्रः पोता इति ब्रह्मचतुष्कम् । होता मैत्रावरुणः अच्छावाकः ग्रावस्तोता इति होतृचतुष्कम् । उद्गाता प्रस्तोता प्रतिहर्ता सुब्रह्मण्य इत्युद्गातृचतुष्कम् । सदस्य एक इति सप्तदशर्त्विजः -स.

३. अत्र कापि न्यूनता वर्तत इति भाति ।

ईजेऽनुयज्ञविधिना अग्निहोत्रादिलक्षणैः । प्राकृतैर्वैकृतैर्यज्ञैर्द्रव्यज्ञानक्रियेश्वरम् ।। १० ।।
अथर्त्विग्भ्योऽददात् काले यथाम्नातं सुदक्षिणाः । स्वलङ्कृतेभ्योऽलङ्कृत्य गोभूकन्या महाधनाः।।११।।
पत्नीसंयाजावभृथ्यैश्चरित्वाऽथ महर्षयः । सस्नू रामह्रदे विप्रा यजमानपुरस्सराः ।। १२ ।।
स्नातोऽलङ्कार वासांसि बन्दिभ्योऽदात् तथा स्त्रियः । ततः स्वलङ्कृतान् वर्णान्नाश्वभ्योऽन्नेन पूजयत् ।।
बन्धून् सदारान् ससुतान् पारिबर्हेण भूयसा । विदर्भकोशलकुरून् काशिकैकेयसृञ्जयान् ।। १४ ।।
सदस्यर्त्विक्सुरगणा नृभूतपितृचारणाः । श्रीनिकेतमनुज्ञाप्य शंसन्तः प्रययुः क्रतुम् ।। १५ ।।
धृतराष्ट्रोऽनुजो द्रोण भीष्मो द्रौणिः कृपस्तथा । नारदो भगवान् व्यासः सुहृत्सम्बन्धिबान्धवाः ।।
बन्धून् परिष्वज्य यदून् सौहृदक्लिन्नचेतसः । ययुर्विरहकृच्छ्रेण स्वदेशांश्चापरे जनाः ।। १७ ।।
नन्दस्तु सह गोपालैर्महत्या पूजयाऽर्चितः । कृष्णरामोग्रसेनाद्यैर्न्यवसद् बन्धुवत्सलः ।। १८ ।।
वसुदेवोञ्जसोत्तीर्य मनोरथमहार्णवम् । सुहृद्धृतः प्रीतमना इदमाह करे स्पृशन् ।। १९ ।।

वसुदेव उवाच

भ्रातरीशकृतः पाशो नृणां यः स्नेहसञ्ज्ञितः । तं दुस्त्यजमहं मन्ये सुराणामपि योगिनाम् ।।२०।।

---

द्रव्यज्ञानोपपदयोः क्रिययोर्यज्ञलक्षणयोः ईश्वरं द्रव्ययज्ञज्ञानयज्ञयोः स्वामिनमित्यर्थः। कथमीज इति तत्राह– **अनुयज्ञेति** । अनुशब्दो वीप्सावचनः तं तं यज्ञं प्रति विधिना कल्पोक्तप्रकारेण[1] । अग्निहोत्रादिलक्षणैः अग्निहोत्रेष्ट्यादिचिह्नैः । प्राकृतैर्यज्ञैः सप्तक्रतुभिः वैकृतैर्यज्ञैः सौत्रामण्यादिभिरुत्तरक्रतुभिः ।। १० ।। यथाम्नातं यथाकथितम् । महान्ति धनानि यासां तास्तथा[2] ।। ११ ।।

पत्नीसंयाजः पत्नीभिः क्रियमाणः काश्चन देवता उद्दिश्य यजनम् । अवभृथः समाप्तिः । कर्मस्थानम्[3] । उभयत्रेष्टिविशेषाश्च भवन्ति[4] । तैश्चरित्वा तांश्च कृत्वेत्यर्थः ।। १२ ।।

पूजयदपूजयत् । स्त्रियः स्त्रीभ्यः ।।१३।। पारिबर्हेण पूजाद्रव्येण । विदर्भादींश्च, अपूजयदिति शेषः ।। १४ ।। सदस्यर्त्विगादयः प्रययुरित्यन्वयः ।। १५ ।। अनुजो विदुरः ।। १६-२० ।।

---

१. अनुयज्ञं प्रति प्रतिक्रतुं यो विधिः कल्पोक्तः प्रकारस्तेन -स.

२. गोभूकन्या इत्यस्य विशेषणं महाधना इति ।

३.४. अस्पष्टमिदम् ।

अस्मास्वप्रतिकल्पोऽयं यत् कृतं ज्ञानसत्तमैः । मैत्र्यर्पिताफला वापि न निवर्तेत कर्हिचित् ॥२१॥
प्रागकल्पास्तु कुशलं भ्रातर्वो नाचरेमहि । अधुना श्रीमदान्धाक्षा न पश्याम पुरः सतः ॥ २२ ॥
मा राज्यश्रीरभूत् पुंसः श्रेयस्कामस्य मानद । स्वजनान् भृत्यबन्धून् वा न पश्यति ययान्धदृक् ॥
एवं सौहृदशैथिल्यचित्त आनकदुन्दुभिः । रुरोद तत्कृतां मैत्रीं स्मरन्नश्रुविलोचनः ॥ २४ ॥
नन्दस्तु सख्युः प्रियकृत् प्रेम्णा गोविन्दरामयोः। अद्य श्व इति मासांस्त्रीन् यदुभिर्मानितोऽवसत् ॥
ततः कामैः पूर्यमाण सव्रजः सहबान्धवः । परार्ध्याभरणक्षौमनानानर्घ्यपरिच्छदैः ॥ २६ ॥
वसुदेवोग्रसेनाभ्यां कृष्णार्जुनबलादिभिः । आदाय पारिबर्हं तं यापितो यदुभिर्ययौ ॥ २७ ॥
तदा गोप्यश्च गोपाश्च गोविन्दचरणाम्बुजे । मनः क्षिप्तं पुनर्हर्तुमनीशा मधुरां ययुः ॥ २८ ॥
द्रोणो भीष्मोऽङ्गराजश्च बाह्लीकविदुरादयः । सपुत्रो धृतराष्ट्रश्च जग्मुः स्वं स्वं निकेतनम् ॥२९॥
अन्ये च सर्वराजानो देवयात्रार्थमागताः । गते मासत्रये भूयः स्वानेव विषयान् ययुः ॥ ३० ॥
पाण्डवाश्च महात्मानः पृथा च नृपसत्तम । अनुज्ञाताः केशवेन बाष्पगद्गदभाषिणः ॥ ३१ ॥
शक्रप्रस्थं ययुः सर्वे स्वजनैः परिवारिताः । बन्धुषु प्रतियातेषु वृष्णयः कृष्णदेवताः ॥
परिवार्य हृषीकेशं ययुर्द्वारवतीं पुरीम् ॥ ३२ ॥

॥ इति त्रिसप्ततितमोऽध्यायः ॥

---

युष्माभिर्ज्ञानिन सत्तमैरस्मासु यत् कृतं सोऽयं स्नेहपाशोऽप्रतिकल्पः असदृशः । या चास्माभिर्युष्मास्वर्पिता मैत्री अफला वापि निष्फला वापि कर्हिचिदपि न निवर्तेत, निवृत्यास्मत्त इति शेषः[1] ॥ २१ ॥

एतदेव विवृणोति– **प्रागिति** । हे भ्रातः प्राग् वः कुशलं नाचरेम हि[2] कुतः? अकल्पा असमर्थाः कंसेनोपद्रुतत्वात् । अधुना श्रीमदान्धाक्षाः वयं पुरः सतः पुरःस्थितान् न पश्यामः, इति यदत इति शेषः ॥ २२ ॥ यया राज्यश्रिया ॥ २३ ॥

सौहृदेन स्नेहेन शैथिल्यं शिथिलस्वभावं प्राप्तं चित्तं यस्य स तथा ॥ २४-३२ ॥

॥ इति श्रीमद्भागवतटीकायां श्रीविजयध्वजतीर्थकृतायां पदरत्नावल्यां दशमस्कन्धे उत्तरार्धे त्रिसप्ततमोऽध्यायः ॥

---

१. अस्मत्त इति शेष इत्येव पेशलम् । निवृत्त्येति लेखकायत्तं स्यात् ।

२. हि प्रसिद्धम् -स.

## ॥ अथ चतुःसप्ततितमोऽध्यायः ॥

श्रीशुक उवाच

अथैकदात्मजौ प्राप्तौ कृतपादाभिवन्दनौ । वसुदेवोऽभिनन्द्याह प्रीत्या सङ्कर्षणाच्युतौ ॥ १ ॥
मुनीनां वदतां श्रुत्वा पुत्रयोर्धामसूचकम् । तद्वीर्यजातविश्रम्भः परिष्वज्याभ्यभाषत ॥ २ ॥
कृष्णकृष्ण महायोगिन् सङ्कर्षण सनातन । जाने वामस्य यत्साक्षात् प्रधानपुरुषौ परौ ॥ ३ ॥
यत्र येन यतो यस्य यस्मै यद्यद्यथा यदा । स्यादिदं भगवान् साक्षात् प्रधानपुरुषेश्वरः ॥ ४ ॥
एतन्नानाविधं विश्वमात्मसृष्टमधोक्षज । आत्मनाऽनुप्रविश्यात्मन् प्राणान् जीवो बिभर्ष्यजः ॥५॥

---

सुखं गुणोपसंहारार्थं सम्यक् तत्त्वविज्ञाने हरौ भक्तिविधानं सुशकमिति पुनरपि हरेर्माहात्म्यं निगद्यतेऽस्मिन्नध्याये । तदर्थं वसुदेवः कृष्णरामौ सम्बोध्य वक्ति (इत्याह) **अथेति** ॥ १ ॥

पुत्रयोः कृष्णरामयोः धाम्नस्तेजसः माहात्म्यलक्षणस्य सूचकं वदतां मुनीनां वचः श्रुत्वा तयोर्वीर्ये माहात्म्ये जातविश्रम्भः पुनरङ्कुरितविश्वासः ॥ २ ॥

अहं वां प्रधानपुरुषौ जाने वां यथाऽस्य विश्वस्य सकाशात् परौ विलक्षणत्वेनोत्तमौ भवतस्तथेति । यद्वाऽस्य जगतस्तत्वं जाने ॥ ३ ॥

तत्कथमिति तत्राह– **यत्रेति** । यत्र यस्मिंस्तिष्ठति ''यस्मिन्निदम्'' इति श्रुतिः ''येन जातानि जीवन्ति'' इति श्रुतिः । ''यतो वा इमानि भूतानि'' इति । 'यस्य ब्रह्म च क्षत्रं च उभे भवत ओदनः । मृत्युर्यस्योपसेचनम्' इति काठकाः । यस्मा इदं क्रियत इति । सच्च त्यच्चाभवत् इति । यथास्थितम् । यदा काले इदं स्यात् तथा तदा स्यात् । ब्रह्मैवेदं विश्वमिति श्रुतिः । इदं जगत् । साक्षात् स्पष्टं निर्विचारं प्रधानपुरुषेश्वरशब्दवाच्यो भगवानेव स्यात् । तत्सत्ताया अपि तदधीनत्वात् । यद्वा यत्र यस्मिन् अधिष्ठाने येन साधनेन यतोमृदः यस्य सम्बन्धेन यस्मै देवदत्ताय यद्वस्तु यथा प्रकारेण यदा यस्मिन् काले[1] ॥ ४ ॥

---

१. तदेव प्रधानपुरुषेश्वरत्वादिकं घटयन्नाह– यत्रेति । यत्रेदं तिष्ठति । यस्मिन्निदं सञ्च विचैधि सर्वमित्यादेः। येन, येन जातानि जीवन्तीति । यतः, यतो वा इमानि भूतानीति । यस्य, यस्य, ब्रह्म च क्षत्रं चोभे भवत ओदनः, यस्य प्रसादादित्यादेः । यस्मा इदं क्रियत इति यस्मै । यत्, सच्च त्यच्चेति । यथा, धाता यथापूर्वमकल्पयदिति । येन प्रकारेण स्थितं यदा काले इदं विश्वं स्यात् तथा साक्षात् तत् कुर्वन् भगवानेव त्वमिति प्रधानपुरुषेश्वरः । यदधीना यस्य सत्तेत्यादेः । ब्रह्मैवेदं सर्वमिति श्रुतेः -स.

**प्राणादीनां विश्वसृजां शक्तयो याः परस्य ताः। पारतन्त्र्याद् वैसादृश्याद् द्वयोः श्रेष्ठे च चेष्टितम् ।।**
**कान्तिस्तेजः प्रभा सत्ता चन्द्राग्न्यर्कसविद्युताम् । यत् स्थैर्यं भूभृतां भूमेर्वृत्तिर्गन्धोऽर्थतो भवान् ।।**
**तर्पणं प्राणनं चापां द्रवत्वं ताश्च तद्रसः । ओजः सहो बलं चेष्टा गतिर्वायोस्त्वेश्वर ।। ८ ।।**
**दिशां त्वमवकाशोऽसि शब्दस्त्वं स्फोट आश्रयः । नादो वर्णस्त्वमोङ्कार आकृतीनां पृथक्कृतीः ।।९।।**
**इन्द्रियं त्विन्द्रियाणां त्वं देवाश्च तदनुग्रहाः । अवबोधो भवान् बुद्धेर्जीवस्यानुस्मृतिः सती ।।१०।।**

---

तदिदं कथितमेव स्पष्टत्वाय कथयति– **एतदिति** । आत्मना त्वया सृष्टम् । आत्मना अनुपहतस्वरूपेण । आत्मन्नात्मनि । प्राणानिन्द्रियाणि । जीवो जीवनप्रदः ।। ५ ।।

प्राणादीनां मुख्यप्राणादीनां याः शक्तयस्ताः परस्य हरेर्विद्यमानाः। तत्र हेतुः **पारतन्त्र्येति** । वैसादृश्याद् वैलक्षण्यात् । तदुपपादयति **द्वयोरिति** । द्वयोर्जीवेशयोः श्रेष्ठे अतिशयेनोत्तमे हरौ चेष्टितं यस्मात् तस्मादित्यर्थः । यथा वायोः शक्त्या तृणपर्णादीनां चालनं यथा वा पुरुषस्य शक्त्या शरादीनां वेगवती गतिस्तथा प्रकृते इति भावः ।। ६ ।।

पदार्थगुणानां तदधीनत्वमाह– **कान्तिरित्यादिना** । चन्द्राग्न्यर्काणां सविद्युतां खद्योतादीनां मध्ये चन्द्रस्य या कान्तिः अग्नेर्यत् तेजः सूर्यस्य या प्रभा विद्युदादीनां या सत्ता भूभृतां यत् स्थैर्यं भूमेर्या वृत्तिः सस्यादीनां जीवनत्वं[1] यो गन्धो गुणस्तत्सर्वमर्थतोऽभिधेयत्वं यद्भवान् नान्यः[2] ।। ७ ।।

किञ्च अपां यत् तर्पणं तृप्तिः प्र[illegible]ं चेष्टा द्रवत्वं स्यन्दनं ता आपश्च तासां रसो गुणश्च, वायोर्ये ओजआदयस्ते सर्वे तवाधीनप्रवृत्तिनिमित्ताः । ओजोऽवष्टम्भः, सहो मर्षणं, बलं शक्तिः, चेष्टा स्पन्दनम् । गतिः सर्पणम् ।। ८ ।।

यो दिशामवकाशः स त्वं यश्च स्फोटो व्योमनि आश्रयः स त्वम् ''निर्दोषः शब्द आगमः'' इति वचनात् वर्णक्रमलक्षणोऽर्थव्यञ्जकः शब्दस्त्वम् । किञ्च स्फोटो वेणुदारणादौ जन्यध्वनिः । आश्रयः शङ्खादिजन्यस्त्वमित्यर्थः । ''अवस्वराति गर्गरः'' इति श्रुतेः ।

---

१. जीवनप्रदत्वमित्यर्थः ।

२. इत्यादिसर्वमर्थतो मुख्यतो भवान् नान्यः । पारतन्त्र्यमेव विवृतम् -स.

**भूतानामसि भूतादिरिन्द्रियाणां च तैजसम्। वैकारिकं विकल्पानां प्रधानमनुशायिनाम्॥ ११॥**
**नश्वरेष्विह भावेषु तदसि त्वमनश्वरः। यथा द्रव्यविकारेषु द्रव्यमात्रं निरूपितः॥ १२॥**

---

आकृतीनां ब्रह्मादिप्राणिनां देवानां याः पृथक् कृतीः पृथक्क्रियाः अनिमेषादिलक्षणास्ताश्च त्वदधीनाः[१] ॥ ९ ॥

इन्द्रियाणामिन्द्रियमिदंद्रवणं तदनुग्राहकाः देवाः सूर्यादयश्च त्वम् । बुद्धेरवबोधो ज्ञानजननशक्तिः। जीवस्य सत्यनुस्मृतिः स्मरणशक्तिश्च भवान्॥ १०॥

पञ्चभूतानां कारणं भूतादिस्तामसाहङ्कारः, चक्षुरादीन्द्रियाणां कारणं तैजसाहङ्कारः। विकल्पानां जरादिशून्यत्वेन परमात्मव्यपदेशानाम्, विविधाः कल्पा न्याया येषां तेषां वा, देवानां कारणं वैकारिकाहङ्कारः[२]। सङ्कल्पविकल्पानां मनोवृत्तीनां वा। अनुशायिनां जीवानां कारणं प्रधानं प्रकृतिस्त्वम्[३]। महदादीनां वा॥ ११॥

सर्वभावानामादिस्त्वमिति निरूप्याधुनाऽन्तकालावस्थायित्वं च तवेति समर्थयते– **नश्वरेष्विति**। इह नश्वरेषु नाशशीलेषु भावेषु पदार्थेषु योऽनश्वरः अविनाशी भावस्तद्द्रव्यमसि। सूक्ष्मार्थत्वान्निदर्शनेनावगमयति। तथाहि। द्रव्यं प्रधानम्। तद्विकारेषु पृथिव्यादिषु पदार्थेषु प्रलये नश्वरेषु द्रव्यमात्रं केवलं स्वरूपभूतं प्रधानमेव निरूपितम्, तत्वज्ञैरिति शेषः। यद्वा द्रव्यं परमाणु तत्संयुक्तेषु घटादिपदार्थेषु नश्वरं[४] द्रव्यमात्रं परमाणुमात्रं निरूपितम्, परमाणुत्ववेदिभिरिति शेषः[५]॥ १२॥

---

१. दिशां त्वमवकाशस्तदवकाशत्वदः। दिशस्त्वं भूताकाशस्त्वम्। तद्गुणः शब्दश्च त्वम्। शब्दो वेदादिः स्फोटो वेणुदारणादिजः । आश्रयः पक्ष्याद्याधारतारूपः । नादो नाम वर्णविशेषः । 'अकाराद्यतिशान्तान्तः सोयमष्टाक्षरो मतः इति तन्त्रसारे। कर्मनिर्णयटीकायां च नादो नाम वर्णविशेषो मन्त्रशास्त्रे प्रसिद्ध इत्यक्तेः। वर्णोऽकारादिः। ओङ्कारस्त्रिमात्रोऽनन्तमात्रश्च। आकृतीनां संस्थानविशेषाणां पृथक्कृतीः पृतक्करणानि। ते त्वदधीना मन्ये। आकृतीनां ब्रह्मादीनां पृथक्कृतीः पृथक्क्रियाश्च त्वदधीना इति वा -स.

२. विकल्पानां विविधत्वेनाध्यात्मिकादिभेदेन कल्प्यन्त इति विकल्पा देवास्तेषां वैकारिकाहङ्कारः। -स.

३. अनुशायिनां संसारिणां जीवानां प्रधानं प्रकतिः प्रधानकारणम्। कर्मानुशयनाच्चैव संसार्यनुशयी स्मृत इति तत्वनिर्णयोक्तेः -स.

४. अनश्वरमिति स्यात्।

५. परमाणुतत्ववेदिभिरिति शेष इति स्यात्।

**सत्वं रजस्तम इति गुणास्तद्वृत्तयश्च याः । त्वय्यद्धा ब्रह्मणि परे कल्पिता योगमायया ।। १३ ।।**
**तस्मान्न सन्त्यमी भावा यर्हि त्वय्यविकल्पिताः । त्वं चामीषु विकारेषु सन् सदा व्यावहारिकः ।।**
**गुणप्रवाह एतस्मिन्नबुद्ध्वा त्वखिलात्मनः । गतिं सूक्ष्मामबोधेन संसरन्तीह कर्मभिः ।। १५ ।।**
**यदृच्छया नृतां प्राप्य सुकल्पमिह दुर्लभम् । स्वार्थे प्रमत्तस्य वयो गतं त्वन्माययेश्वर ।। १६ ।।**

---

नन्वेवं तर्हि प्रधानादेर्नित्यत्वे न परमात्मनियतत्वमायातमिति तत्राह– **सत्वमिति** । इतिशब्दो हेत्वर्थः । जगदुत्पत्त्यादिहेतुः सत्वादयो गुणा ये याश्च तेषां गुणानां वृत्तयो व्यापाराः, ते ताश्च परे ब्रह्मणि तद्व्याप्ते तदव्याप्ते च देशे व्याप्ते त्वयि अद्धा अनिर्वचनीयत्वेन[1] कल्पिताः समर्थिताः ''एतस्मिन्नु खल्वक्षरे गार्ग्याकाश ओतश्च प्रोतश्च'' इत्यादि वेदान्तवाक्यैः । सत्वादिगुणानां प्रधानस्वरूपत्वेन तेषां तदाधारत्वकथने प्रधानस्य तदाश्रयत्वं किमु वक्तव्यमिति । परमाणुपक्षे शुक्लवर्णेन सत्वेनाप्याः रजसा पार्थिवाः स(?)तमसा आवरकेण वायवीयाः परमाणवो लक्ष्यन्ते । इतिशब्देनादित्ववाचिना तैजसा लक्षिता इति चतुर्विधा गुणास्तन्तुस्थानीयाः परमाणवो यास्तद्वृत्तयः संयोगलक्षणास्त्वयि कल्पिताः त्वत्प्रेरितत्वेन कार्यकारणक्षमत्वेन समर्थिता इत्यर्थः । किमनेन नियमेनेत्यत उक्तम्– **योगमायेति** । योगमायया स्वसमवेतेच्छया[2] ।। १३ ।।

व्यतिरेकं दर्शयति– **तस्मादिति** । यर्हि यदा अमी भावास्त्वय्यविकल्पिताः त्वदाधारत्वेन निरूपिताः[3] तदा तस्मादनाधारतया न सन्ति । स्वरूपत एव नश्यन्ति तस्मात् तत्सत्ताऽपि त्वदधीनेत्यर्थः । एतदेव विशदयति– **त्वं चेति** । अमीषु विकारेषु विविधप्रकारेषु पदार्थेषु त्वं च त्वमेव सन् सद्भावं कुर्वन् सदा व्यावहारिकः हानादिव्यवहारनिर्वाहकः, नान्य इत्यर्थः ।। १४ ।।

नन्वेवं तर्हि कस्मादेतस्य संसार इति तत्राह– **गुणेति** । एतस्मिन् गुणप्रवाहे संसारे अखिलात्मनः अखण्डस्वामिनः तव सूक्ष्मामतीन्द्रियां गतिं स्थितिं सर्वव्यापी सर्वनियामक इत्यादिलक्षणामबुद्ध्वाज्ञात्वा तेनाबोधेनाज्ञानेन इह कर्मभिः संसरन्तीत्यन्वयः । तत्वाज्ञानात् संसार इति भावः ।। १५ ।।

---

१. अनिर्वचनीयत्वेनेति पदं सम्पातायातमिति भाति । अद्धा सम्यक् वेदान्तवाक्यैः समर्थिता इत्यन्वयः स्वरसः ।  २. प्रायशोऽस्पष्टमिदं व्याख्यानम् ।  ३. न निरूपिता इति स्यात् ।

असावहं ममैवैते देहे वाऽस्यान्वयादिषु । स्नेहपाशैर्निबध्नाति भवान् सर्वमिदं जगत् ॥ १७ ॥
युवां न नः सुतौ साक्षात् प्रधानपुरुषेश्वरौ । भूभारदैत्यक्षपणे अवतीर्णौ तथा त्विह[1] ॥ १८ ॥
तत् ते गतोऽस्म्यरणमद्य पदारविन्दमापन्नसंसृतिभयापहमार्तबन्धो ।
एतावताऽलमलमिन्द्रियलालसेन मर्त्यात्मदृक् त्वयि परे यदपत्यबुद्धिः ॥ १९ ॥
सूतीगृहे ननु जगाद भवानजो नौ यद् यज्ञ इत्यनुयुगं निजधर्मगुप्त्यै ।
नानातनूर्गगनवद् विदधज्जहासि को वेद भूम्न उरुगाय विभूतिमायाम् ॥ २० ॥

---

ननु मनुष्यत्वलाभात् ज्ञानं सुलभं तस्मान्मोक्षोऽपि स्यादित्याशङ्क्य सर्वं च त्वत्प्रसाद-मन्तरेण दुर्लभमित्याह– **यदृच्छयेति** । यदृच्छया भगवदिच्छया तत्रोद्बुद्धयारब्धपुण्यकर्मणा नृतां मनुष्यत्वं प्राप्य इह मनुष्यशरीरे त्वन्मायया स्वार्थे प्रमत्तस्य मम वयो गतम्, वृथेति शेषः । अतः सुकल्पं क्लृप्तं फलप्रदं ज्ञानं दुर्लभम्, अभूदिति शेषः । नितराममृतत्वं त्वन्मायया[2] ॥१६॥

स्वार्थे प्रमादः कीदृश इति तत्राह– **असाविति** । असौ देहोऽहमस्य देहस्यान्वयादिषु इन्द्रियकलत्रादिषु ममैवैते सन्त इति सुदृढैर्ममत्वेन बध्नाति । न केवलं मामेव किन्तु सर्वमिति भावेनोक्तम्– **सर्वमिति** ॥ १७ ॥

त्वदनुग्रहात् मम किञ्चित् ज्ञानमुत्पन्नमिति भावेनाह– **युवामिति** । प्रधानपुरुषेश्वरौ प्रकृति-जीवेश्वरौ ॥ १८ ॥

अतः किम्? तत्राह– **तत् त इति** । इन्द्रियलालसेन इन्द्रियाणां शब्दविषयभोगेच्छया[3] । मर्त्ये मृत्युशिरस्के देहे आत्मदृक् अहमितिदर्शनम् । यत् परे परमात्मनि त्वयि अपत्यबुद्धिः पुत्रत्वज्ञानम् ॥ १९ ॥

तदेवाह– **सूतीगृह इति** । अजः शुक्रशोणितसम्पर्कजन्यशरीररहितः भवान् सूतीगृहे अरिष्टे अहं यज्ञो विष्णुरिति नौ जगाद ननु इति । यत् तस्मादनुयुगं निजक्लृप्तधर्मरक्षायै नानातनूः सुरनरादिनानाविधशरीराणि विदधत् कुर्वन् त्वं पुनः रक्षावसाने तास्तनूः जहासि तिरोदधासि । कथं दधातीत्यत उक्तम्– **गगनवदिति** । यथा युगं युग्मं कार्यकारणद्वयात्मकपदार्थजातम् अनु

---

१. तथा न्विहेति स.पाठः । तथानु तथापि -स. तथात्विति पाठेऽप्येवमेवार्थः ।

२. दुर्लभमिति शेषः ।

३. शब्दादिविषयभोगेच्छयेति स्यात् ।

**श्रीशुक उवाच**

**आकर्ण्येत्थं पितुर्वाक्यं भगवान् सात्वतर्षभः । प्रत्याह प्रश्रयानम्रः प्रहसन् श्लक्ष्णया गिरा ॥२१॥**
**वचो वः समवेतार्थं तातैतदुपमन्महे । यन्नः पुत्रान् समुद्दिश्य तत्वग्राम उदाहृतः ॥ २२ ॥**
**अहं यूयमसावार्य इमे च द्वारकौकसः । सर्वेप्येव यदुश्रेष्ठ विश्वं च सचराचरम् ॥ २३ ॥**
**आत्मा ह्येकः स्वयञ्ज्योतिर्नित्योऽन्यो निर्गुणो गुणैः । आत्मसृष्टैस्तत्कृतेषु भूतेषु बहुधेयते ॥२४॥**

---

अणुबृहदनुकूलत्वेन नाना भवति पुनस्तद् गगनं तत्पदार्थजातस्य कारणावशेषे[1] स्वयमेवैकमेव भवति तथेत्यर्थः । हे उरुगाय भूम्नः पूर्णानन्दस्य तव विभूतीनां मायां माहात्म्यं को वेद? वेद चेत् ब्रह्मैव वेत्ति वायुर्वा नान्यः । अनेन गगनादस्य विशेषो दर्शितः[2] ॥ २० ॥

ब्रह्माद्यन्यतममन्तरेण प्रत्यक्षं भगवता सल्लापः कस्य सुलभोऽतो वसुदेवस्य भाग्यमतिविचित्रमिति भावेन कृष्णस्य प्रतिवचनप्रकारं कथयति– **आकर्ण्येत्यादिना** ॥ २१ ॥

समवेतार्थं श्रुतिस्मृत्युपपन्नार्थं प्रसिद्धार्थं वा ॥ २२ ॥ युष्मदादिविश्वमहमेव मदधीनमेव नान्याधीनं सर्वं खल्विदं ब्रह्म इति श्रुतिसिद्धम् ॥ २३ ॥

मत्समो नास्तीत्याह– **एक इति** । केवलः द्वितीयवर्जितः । त्वं वा क इत्यत उक्तम् **आत्मेति** । आत्मशब्देन किं देह उच्यत इत्यतः स्वयञ्ज्योतिर्नित्य इति । अनेन विशेषणद्वयेन जीवोऽपि व्यावृत्तः । तस्य नित्यानभिभूतस्वयञ्ज्योतिष्ट्वाभावात् हरेस्तद्भावात् । ''ब्रह्मवेदाहं ब्रह्मास्मि'' इति श्रुतेः । बलमानन्द ओजश्चेति च । अहमेवेत्युक्त्याऽभेदः किं न स्यादित्यत

---

१. कारणवशे इति ग. पाठः । अस्पष्टमिदम् । यथा गगनं घटाद्यल्पपदार्थस्य मन्दरादिबृहत्पदार्थस्य चावकाशं प्रदाय, तेषां नाशे कारणात्मना स्थितौ स्वयं यथा महाकाशतया तिष्ठति तथेत्याशयः स्यात्? घटाद्याकाशानां महाकाशेनाभेदात् ।

२. पुत्रो नेत्यत्र त्वदुक्तिरपि मानमिति विज्ञापयति– सूतीगृह इति । अरिष्टे अजो यज्ञोऽहं तन्नामेति नौ जायापती प्रति भवान् जगाद । ननु निश्चितम् । निजेन क्लृप्तो यो धर्मस्तद्गुप्त्यै गोपनार्थमनुयुगं प्रतियुगं नानातनूः सुरनरतिर्यगादिशरीराणि विदधत् स्वीकुर्वन् तत्कार्यपर्याप्त्यनन्तरं ता जहासि मूले गमयसि । पूर्णमदः, स्वाप्ययादित्यादेः । हे उरुगाय ब्रह्मादिस्तुत्य तव विभूतिमायामैश्वर्यसामर्थ्यं को वेद? न कोऽपि । को ब्रह्मा वेद चेदपि न साकल्येन वेद, किञ्चिद् वेदेत्यर्थः । गगनवदिति निदर्शनमसङ्गत्व इति मन्तव्यम् । घटादिनाशे तदवच्छिन्नस्य तस्य मूलाकाशनिवेशवन्मूलनिवेशनं च । यज्ञो विष्णुर्देवतेत्यादेर्यज्ञो विष्णुः -स.

खं वायुर्ज्योतिरापो भूस्तत्कृतेषु यथाशयम् । आविस्तारोल्पभूर्येकनानात्वं यात्यसावपि ॥ २५ ॥
एवं भगवता राजन् वसुदेव उदाहृतम् । श्रुत्वा विनष्टनामाधिस्तूर्ष्णीं प्रीतमना अभूत् ॥ २६ ॥
अथ तत्र कुरुश्रेष्ठ देवकी सर्वदेवता । श्रुत्वाऽऽनीतं गुरोः पुत्रमात्मजाभ्यां शुचिस्मिता ॥ २७ ॥
कृष्णरामौ समाश्राव्य पुत्रान् कंसविहिंसितान् । स्मरन्ती कृपणा प्राह वैक्लव्यादश्रुलोचना ॥२८॥

देवक्युवाच

रामरामाप्रमेयात्मन् कृष्ण योगेश्वरेश्वर । वेदाहं वां विश्वसृजामीश्वरावादिपूरुषौ ॥ २९ ॥
कालविध्वस्तसेतूनां राज्ञामुच्छास्त्रवर्तिनाम् । भूमेर्भारायमाणानामवतीर्णौ क्षयाय मे ॥ ३० ॥
यस्यांशांशभागेन विश्वस्थित्युदयौ लयः । भवन्ति किल विश्वात्मंस्तं त्वाऽद्याहं गतिं गता ॥३१॥
चिरान्मृतसुतादाने गुरुणा किल चोदितौ । आनिन्यथुः पितृस्थानाद् गुरवे गुरुदक्षिणाम् ॥ ३२ ॥
तथा मे कुरुतां कामं युवां योगेश्वरेश्वरौ । भोजराजहतान् पुत्रान् कामये द्रष्टुमाहृतान् ॥ ३३ ॥

---

उक्तम्– **अन्य इति** । अहमस्मादन्योऽत्यन्तविलक्षणः । कुतः? निर्गुणः । सत्वादिगुणनिमित्तवैपरीत्याभावात्, अन्यस्य तद्भावात् । ''कार्यते ह्यवशः कर्म सर्वः प्रकृतिजैर्गुणैः'' इत्यादेः । ननु तर्ह्यप्राप्तनिषेधः कस्मादिति तत्राह– **आत्मसृष्टैरिति** । इन्दियपूर्णेषु भूतेषु प्राणिदेहेषु बहुधेयते यथारुचि ज्ञायते, जनेनेति शेषः । यथात्मनिमित्तैर्गुणैः पञ्चभूतैर्विरचितेषु । शेषं समम् ॥ २४ ॥

एतदेव दृढयति– **खं वायुरिति** । खादीनि तत्कृतेषु वस्तुषु यथाशयं यथास्थानं स्थितानि भवन्ति । तथा असौ हरिरपि अल्पेष्वल्पत्वेन भूरिषु महत्वेनाविस्तारः प्रकाशितविस्तार एकनानात्वं एकस्यानेकसङ्ख्याविषयत्वं यातीत्यन्वयः । अत्रायं भावः स्वसृष्टतत्तद्वस्तुनियमार्थं तत्तद्वस्तुपरिमाणभूतं रूपं गृह्णातीति तात्विकाः ॥ २५ ॥

विनष्टं नाम कुत्सितमाधिर्यस्य[1] स विनष्टनामाधिः । ''नाम कुत्सनसम्भाव्यप्रकाशेषु निगद्यत'' इति ॥ २६ ॥

अथ मङ्गलाचरितमारभ्यते । सर्वा देवता यस्यां सन्निहिताः सा तथा ॥ २७ ॥ समाश्राव्य सम्बोध्य ॥ २८,२९ ॥ मे मत्तः सकाशात् । कालेन विध्वस्तसेतूनाम् ॥ ३० ॥ भागो भजनं स्वीकारस्तेन । गतिं शरणं गतास्मि ॥ ३१ ॥

---

१. नाम कुत्सित आधिर्यस्य -स.

श्रीशुक उवाच

एवं सञ्चोदितौ मात्रा रामकृष्णौ कुरूद्वह । सुतलं संविविशतुर्योगमायामुपाश्रितौ ॥ ३४ ॥

तस्मिन् प्रविष्टावुपलभ्य दैत्यराड् विश्वात्मदैवं सुतरां तथाऽऽत्मनः ।
तद्दर्शनाह्लादपरिप्लुताशयः सद्यः समुत्थाय ननाम सान्वयः ॥ ३५ ॥
तयोः समानीय वरासनं मुदा निविष्टयोस्तत्र महात्मनोस्तयोः ।
दधार पादाववनिज्य तज्जलं सवृन्द आब्रह्म पुनद् यदम्बुभिः ॥ ३६ ॥
समर्हयामास महाविभूतिभिर्महार्हवस्त्राभरणानुलेपनैः ।
स्रग्धूपदीपामृतभक्षणादिभिः स्वगोत्रवित्तात्मसमर्पणेन च ॥ ३७ ॥
स इन्द्रसेनो भगवत्पदाम्बुजं भ्रमन् मुहुः प्रेमविभिन्नया धिया ।
बभाष हानन्दजलाकुलेक्षणः प्रहृष्टरोमा नृप गद्गदाक्षरम् ॥ ३८ ॥

बलिरुवाच

नमोऽनन्ताय महते नमः कृष्णाय वेधसे । साङ्ख्ययोगवितानाय ब्रह्मणे परमात्मने ॥ ३९ ॥
दर्शनं वां हि भूतानां दुष्प्रापमतिदुर्लभम् । रजस्तमःस्वभावानां यन्नः प्राप्तं यदृच्छया ॥ ४० ॥

---

पितृस्थानाद् यमलोकात् ॥ ३२-३४ ॥ तथाऽऽत्मनः स्वस्य सुतरामिष्टदैवम् ॥ ३५ ॥

तज्जलं पादावनिर्णिक्तजलम् । यस्य पादस्य जलैराब्रह्म चतुर्मुखपर्यन्तं जगत् पुनत् पुनाति शुद्ध्यति । छान्दसोऽयं प्रयोगः "आदित्यः सुपथा करत्" इत्यादिष्विव ॥ ३६ ॥

अमृतभक्षणं रसायनभोजनम् । "अमृतं व्योम्नि देवान्ने यज्ञशेषे रसायने । अयाचिते जले जग्धौ मोक्षणे हेम्नि गोरसे । क्लीबे ना त्वमरे[१] स्त्री तु गुडूच्यां मद्यभिक्षयोः" इति यादवप्रकाशः। इन्द्रसेनो बलिः । "गोत्रं नाम्नि कुलेऽचले" इति । 'आत्मा देहे धृतौ जीवे धैर्ये' इति च । प्रमविभिन्नया स्नेहप्रवृद्धया धिया भगवत्पदाम्बुजं भ्रमन् शरणं गच्छन्, प्रदक्षिणं कुर्वन् वा । हा शुभमिति स्मरन् । "हा विषादशुभार्तिषु" इति । बभाषेति सम्भ्रमाद् व्यत्ययः । बभारेति पाठे पादाम्बुजं बभार । गद्गदाक्षरं वचो जगादेति योज्यम् ॥ ३७ ॥

वेधसे अश्रमेण कर्त्रे । साङ्ख्ययोगयोर्ज्ञानकर्मणोर्वितानो विस्तारः येन स तथा तस्मै । साङ्ख्ययोगशास्त्रकाराय वा । दृष्टकपिलादिभ्यो व्यावर्तनायाह– **ब्रह्मण इति** । नन्वमुना व्यावृत्तिः कथम् ? अत्राह– **परमात्मन इति** ॥ ३९ ॥

---

१. ना त्वपरे इति ग.पाठः ।

दैत्यदानवगन्धर्वसिद्धविद्याधरादयः । यक्षरक्षःपिशाचाश्च[1] भूतप्रमथनायकाः ।। ४१ ।।
विशुद्धसत्वधाम्न्यद्धा त्वयि शास्त्रशरीरिणि । नित्यं निबद्धवैरास्ते[2] वयं चान्ये च तादृशाः ।।४२।।
केचनोद्बद्धवैरेण भक्ताः केचन कामतः । न तथा सत्वसंरब्धाः सन्निकृष्टाः सुरादयः ।। ४३ ।।
इदमित्थमिति प्रायस्तव योगेश्वरेश्वर । न विदन्त्यपि योगेशा योगमायां कुतो वयम् ।। ४४ ।।
तन्नः प्रसीद निरपेक्षविमृग्ययुष्मत्पादारविन्दधिषणः स्वगृहान्दकूपात् ।
निष्क्रम्य विश्वशरणाङ्घ्र्युपलब्धवृत्तिः शान्तो यथैक उत सत्वसखैश्चरामि ।। ४५ ।।

---

अव्यक्तस्वभावयोर्युवयोर्दर्शनमनुग्रहसाध्यं न तु प्रयत्नसाध्यमिति भावेनाह– **दर्शनमिति** । वां दर्शनं भूतानां दुष्प्रापं हि यस्मात् तस्माद् रजस्तमःस्वभावानां नोऽतिदुर्लभं यद् युष्मद्दर्शनं प्राप्तं तद् यदृच्छया देवयोर्युवयोरनुग्रहोन्मुखीभूतयेच्छया इति मन्य इति शेषः ।। ४० ।।

रजस्तमःस्वभावफलं प्रकटयन् तामसत्वं नाम चूडारत्नं निर्मलीकर्तुं दर्शनं कृतमित्याशयेनाह– **दैत्येति** । ये दैत्यदानवास्ते वयं च । शास्त्रं वेदादिग्रन्थ एव शरीरं प्रतिमालक्षणमस्यास्तीति शास्त्रशरीरी तस्मिन् । "शास्त्रं ग्रन्थनिदेशयोः" इति । विशुद्धसत्वधाम्नि केवलज्ञाननिधाने त्वयि नित्यं निबद्धवैराः । अन्ये राक्षसाश्च तादृशा निबद्धवैरा इत्यतो न कोऽप्यस्मद्गुणो युष्मद्दर्शन इति शेषः ।। ४१, ४२ ।।

ननु नित्यानुसन्धानलक्षणान्तःकरणगुणेनाविर्भूतज्ञानगुणोऽस्तीति मा शङ्कि यतः सुरादीनामपि नास्ति कुतोऽस्माकमिति भावेनाह– **केचनेति**[3] । केचन चैद्यादयः उद्बद्धवैरेण[4] क्वचिदुद्गतवैरेण भक्ताः । केचन गोपीजनाः कामतो भक्ताः । सन्निकृष्टाः सहवर्तमानाः सत्वसंरब्धाः उद्रिक्तसत्वगुणाः प्राणात्ययेप्यनुज्झितयुष्मद्भक्तिनिश्चयाः सुरगन्धर्वादयस्तथाऽनादिद्वेषसंरम्भादिना भक्ता न भवन्ति किन्तु निश्चलभक्तिसिन्धवः ।। ४३ ।।

अपि तथापि ते योगेशाः ज्ञानोपायश्रेष्ठाः प्रायो बहुलं तव योगमायां जगत्सृष्ट्याद्यनुसंहितस्वरूपमाहात्म्यं न विदन्ति । कथम्? इदमिदमित्थमेवंभूतमिति न जानन्ति। वयं कुतो हेतोर्बुध्यामह इति ।। ४४ ।।

---

१. यक्षःपिशाचाः क्रूराश्च इति ग.पाठः । २. नित्यं निबद्धवैराश्च इति ग.पाठः ।
३. भक्तान् विविक्तानुक्त्वा स्वयं नैतदन्यतम इति स्वं तुच्छीकृत्य वदति– केचनेति -स.
४. उद्बुद्धवैरेण इति ग.पाठः

**शाध्यस्मानीशितव्येश निष्कामान् कुरु नः प्रभो। पुमान् यच्छ्रद्धया तिष्ठंश्चोदनाया विमुच्यते ॥४६॥**

**श्री भगवानुवाच—**

**आसन् मरीचेः षट् पुत्रा ऊर्णायां प्रथमेऽन्तरे। देवलं जहसुर्वीक्ष्य सुताञ्छपितुमुद्यतम् ॥ ४७ ॥**

**तेनासुरीमगुर्योनिममुनाऽवद्यकर्मणा। हिरण्यकशिपोः शापात्[१] पुत्रास्ते योगमायया ॥४८॥**

**देवक्या जठरे जाता राजन् कंसविहिंसिताः। सा तान् शोचत्यात्मजान् स्वांस्त इमेऽध्यासतेऽन्तिके ॥४९॥**

---

अधुना स्वाशयं विज्ञापयति– **तन्न इति**। यतो युष्मद्भक्तिज्ञानाभ्यामनुग्रह एव प्रार्थनीयस्तस्मान्नस्तथा प्रसीद। कथम्? यथा एक उत्तमपुत्रादिस्नेहलक्षणसङ्गरहित एव सत्वं श्रीनारायण एव सखा येषां ते तथा तैर्युष्मद्भक्तैः सह चरामि वर्तमानो भवामि। किं कृत्वा? गृहान्धकूपान्निष्क्रम्य निर्गतो भूत्वा। कीदृशोऽहम्? शान्तः युष्मन्निष्ठायुक्तः। कथम्? अत्राह– निरपेक्षैः सन्यासिभिः विमृग्ययोरन्वेषणीययोर्युष्मत्पदारविन्दयोः धिषणा धीर्यस्य स तथा। धिषणं धिष्ण्यं गृहं वा। अस्तु निवासस्थानं किं जीवनम्? अत्राह– **विश्वेति**। विश्वस्य पक्षपातित्वेन शरणयो रक्षित्रोरङ्घ्र्योः सेवयोपलब्धा प्राप्ता वृत्तिर्जीविका यस्य स तथा ॥ ४५ ॥

सत्सेवनमपि युष्मच्छिक्षयैव भाव्यमिति भावेनाह– **शाधीति**। यस्मिंश्छासने श्रद्धया तिष्ठन् स्थिरः सन् चोदनाया विधिनिषेधलक्षणायाः संसृतेर्विमुच्यते ॥ ४६ ॥

शाधीति वाक्यं श्रुतवान् कृष्णस्त्वयाधुनेदं कर्तव्यमिति वक्तुमुपक्रमते– **आसन्नित्यादिना**। प्रथमे मनोरन्तरे ये पुत्रास्ते कस्मिंश्चित् काले सुतान् शपितुं शिक्षयितुमुद्यतं देवलं वीक्ष्य जहसुः ॥ ४७ ॥

अमुना अपहासलक्षणपापकर्मणा निमित्तेन देवलेनासुरीं योनिमगुः आपुः। कालनेमेः पुत्रत्वेन इति शेषः। ते कालनेमेर्जाताः पुत्रा हिरण्यकशिपोः शापेन योगमायया देवक्या उदरे नीताः ततो जाताः कंसेन विहिंसिता इत्यन्वयः। सा देवकी[२] अधुना कुत्र आसत इत्यत आह– **त इम इति**[३] ॥ ४८, ४९ ॥

---

१. हिरण्य कशिपोर्जाता इति वादिराजतीर्थसम्मतः पाठः।

२. ते पुत्रा अधुना कुत्र आसत इत्यत आहेति स्वरसम्।

३. तदेतदाचार्यैर्महाभारततात्पर्यनिर्णयेऽभ्यधायि–
मरीचिजाः षण् मुनयो बभूवुस्ते देवलं प्राहसन् काश्यहेतोः।
तच्छापतः कालनेमिप्रसूता अवध्यतार्थं तप एव चक्रुः ॥ - अनुवर्तते

**इत एतान् प्रणेष्यामो मातृशोकापनुत्तये । ततः शापविनिर्मुक्ता लोकं यास्यन्ति विज्वराः ॥५०॥**
**स्मरोद्गीथः परिष्वङ्गः पतङ्गः क्षुद्रभृत् घृणी । षडिमे मत्प्रसादेन पुनर्यास्यन्ति मद्गतिम् ॥ ५१ ॥**
**इत्युक्त्वा तान् समादाय इन्द्रसेनेन पूजितौ । पुनर्द्वारावतीमेत्य मातुः पुत्रानयच्छताम् ॥ ५२ ॥**
**तान् दृष्ट्वा बालकान् देवी पुत्रस्नेहस्नुतस्तनी । परिष्वज्याङ्कमारोप्य मूर्ध्न्यजिघ्रदभीक्ष्णशः ॥ ५३ ॥**

---

ततः किम्? अत्राह– **इत इति** ॥ ५० ॥ अभिज्ञानार्थं तन्नामानि निर्दिशति– **स्मर इत्यादिना** । मद्गतिं मत्स्थानम् ॥ ५१ ॥ अयच्छतां दत्तवन्तौ ॥ ५२ ॥ अजिघ्रदाघ्राणं कृतवती ॥ ५३ ॥

---

धाता प्रादाद् वरमेषां तथैव शशाप तान् क्ष्मातले सम्भवध्वम् ।
तत्र स्वतातो भवतां निहन्तेत्यात्मान्यतो वरलिप्सून् हिरण्यः ॥
दुर्गा तदा तान् भगवत्प्रचोदिता प्रस्वापयित्वा प्रचकर्ष कायात् ।
क्रमात् समावेशयदाशु देवकीगर्भाशये तान् न्यहनच्च कंसः ॥ इति । (१२-१२,१३,१४)

तत्र श्रीवादिराजतीर्थानां व्याख्या–

नन्वेवं सुतान् शपितुमुद्यतमिति भागवतवचनस्य विरोधः । "तत् शापतः कालनेमिसुताः" इत्यस्य (तात्पर्यनिर्णयस्य) हिरण्यकशिपोर्जाताः इति भागवतोक्तेश्च विराध इति चेन्न । हिरण्यकशिपोः पुत्रत्वे पुनर्देवक्यां जन्मनि कारणाभावात् शापोऽवश्यं वक्तव्यः । पित्रा तेनैव हिरण्यकशिपुना अहंकारवशात् आत्मान्यतो वरलिप्सून् प्रति कुपितेन शापः दत्तश्चेत् भूमौ जायन्तां; कंसेनैव हनने न किञ्चित् कारणम् । स्वस्यैव पुत्रत्वे तु 'स्वतातो भवतो हन्ता' इति स्वस्यापि जन्मघटकं शापं न दद्यादेव । कोपवशात् दद्याच्चेदपि भूमौ जातेन हिरण्यकशिपुनैव हन्तव्याः, न तु कंसेन । कालनेमिजातत्वे तु तत्र स्वतातो भवतां निहन्तेति हिरण्यकशिपोः शापोऽपि अहङ्कारवशात् आत्मान्यतो वरलिप्सया कारणेन घटेतैव । कंसेनैव हननमपि भागवतोक्तं सुतरां घटेत । अतस्तात्पर्योक्तमेव तत्त्वम् । तर्हि "तेनासुरीमगुर्योनिममुनाऽवद्यकर्मणा । हिरण्यकशिपोर्जाताः पुत्रास्ते योगमायया ॥ देवक्या जठरे जाता राजन् कंसविहिंसिताः । सा तान् शोचन्त्यात्मजान् स्वांस्त इमेऽद्यासतेऽन्तिके । इत एतान् प्रणेष्यामो मातृशोकापनुत्तये" इति भागवतोक्तेः का गतिरिति चेदित्थम्– अमुनाऽवद्यकर्मणा देवलपरिहासाख्यावद्यकर्मणा जातेन तेन कुपितदेवलशापेन आसुरीं कालनेम्याख्यासुरसम्बन्धिनीं योनिं तद्भार्यायोनिमगुः । एवं जातास्ते पुत्रा हिरण्यकशिपोर्निमित्तात्, शापात् इति यावत् योगमायया दुर्गया देवक्याः जठरे जाताः, कंसेन विहिंसिताः पुनर्ब्रह्मवरादेवावध्ये स्वस्वशरीरे तयैव दुर्गया, प्रवेशिताः सन्तः त इमे, हे बले! अद्य तेऽन्तिके आसत इति योजनया उभयो (=महाभारत तात्पर्यनिर्णयभागवतयोः) रप्यविरोधसम्भवादिति ।

अपाययत् स्तनं प्रीता सुतस्पर्शपरिस्नुतम् । मोहिता मायया विष्णोर्यया सृष्टिः प्रवर्तते ॥ ५४ ॥
पीत्वाऽमृतं पयस्तस्या पीतशेषं गदाभृतः । नारायणाङ्गसंस्पर्शप्रतिलब्धात्मदर्शनाः ॥ ५५ ॥
ते नमस्कृत्य गोविन्दं देवकीं पितरं बलम् । मिषतां सर्वभूतानां ययुर्धाम विहायसा ॥ ५६ ॥
तान् दृष्ट्वा देवकी देवी मृतागमननिर्गमन् । मेने सुविस्मिता मायां कृष्णसंसूचितां नृप ॥ ५७ ॥
एवंविधान्यद्भुतानि कृष्णस्य परमात्मनः । वीर्याण्यनन्तवीर्यस्य सन्त्यनन्तानि भारत ॥ ५८ ॥

सूत उवाच

य इदमनुशृणोति श्रावयेद्वा मुरारेश्चरितममृतकीर्तेर्वर्णितं व्यासपुत्रैः ।
जगदघभिदलं तद्भक्तसत्कर्णपूरं भगवति कृतचित्तो याति तत्क्षेमधाम ॥ ५९ ॥

॥ इति चतुस्सप्ततितमोऽध्यायः ॥

---

सुतानां स्पर्शेन परिस्नुतं क्षरितं सृतमित्यर्थः । मायया महिम्ना ॥ ५४ ॥

अमृतमिव सुधामिव स्वादु । लुप्तोपमम् । तस्याः देवक्याः स्नुतं पयः । गदाभृतः कृष्णस्य कृद्योगे षष्ठी । नारायणस्याङ्गस्पर्शेन प्रतिलब्धम् आत्मदर्शनम् आत्मज्ञानं येषां ते तथा ॥५५॥

कृष्णस्य सं समीचीनाम् अबाधितां सुष्ठूचितां नान्यस्येति कृष्णसंसूचितां मायां महिमानम् ॥ ५७ ॥

अनेनेन्द्रजालम्[१] । अतिदेशेनोपसंहरति– **एवमिति** । कृष्णेन संसूचितेयं माया अथापि बह्वचः सन्तीत्यतो वोपसंहरति– **एवमिति** ॥ ५८ ॥

फलमाह– **य इति** । अमृतवन्निर्मलकीर्तेः । जगतोऽघं पापं दुःखं वा भिनत्तीति जगदघभित् । भक्तानां सत् प्रशस्तं कर्णपूरं कर्णाभरणम् । तस्य हरेः क्षेमधाम मोक्षलक्षणं स्थानं याति ॥ ५९ ॥

॥ इति श्रीमद्भागवतटीकायां विजयध्वजतीर्थकृतायां पदरत्नावल्यां दशमस्कन्धे उत्तरार्धे चतुस्सप्ततितमोऽध्यायः ॥

---

१. अत्र किमपि त्रुटितं स्यात् । अनन्तवीर्यस्येत्यादिविशेषणेनेन्द्रजालं व्यवच्छिनत्तीति अस्य श्लोकस्य टीकाया अन्ते निवेश उचितः ।

## ॥ अथ पञ्चसप्ततितमोऽध्यायः ॥

**राजोवाच**

**सर्वासां महिषीणां तु गोविन्दासक्तचेतसाम् । मय्येव प्रेमवान् विष्णुरिति निश्चितचेतसाम् ॥१॥**
**समः सर्वासु वा कृष्ण एकस्यां प्रेमवानुत ॥ तन्मे त्वं शंस तच्छ्रोतुं रतिरस्ति मम प्रभो ॥ २ ॥**

**श्रीशुक उवाच**

**महिषीणां तु सर्वासां प्रथमं भीष्मनन्दना । प्रेमवानधिकं तस्यामिति प्रख्यातिरूर्जिता ॥ ३ ॥**
**कदाचित् प्रेमकलहः केशवेन तया समम् । कृतस्तच्छृणु कौरव्य कार्त्स्न्येन कथयामि ते ॥ ४ ॥**
**कर्हिचित् सुखमासीनं स्वतल्पस्थं जगद्गुरुम् । पतिं पर्यचरद्भैष्मी व्यजनेन सखीजनैः ॥ ५ ॥**
**य एतल्लीलया विश्वं सृजत्यत्त्यवतीश्वरः । स हि जातः स्वसेतूनां गोपीथाय यदुष्वजः ॥ ६ ॥**
**तस्मिन्नन्तर्गृहे भ्राजन्मुक्तादामविलम्बिना । विराजिते वितानेन दीपैर्मणिमयैरपि ॥ ७ ॥**
**मल्लिकादामभिर्दिव्यैर्द्विरेफकुलनादितैः ॥ जालरन्ध्रप्रविष्टैश्च गोभिश्चन्द्रमसोऽरुणैः[1] ॥ ८ ॥**
**पारिजातवनामोदवायुनोद्यानशालिना । धूपैरागरवै राजन् जालरन्ध्रविनिर्गतैः ॥ ९ ॥**

---

प्रेक्षावतां भगवत्तत्वविज्ञानेऽधिकार इति लक्षणवृत्त्या तन्माहात्म्यं कथयत्यस्मिन्नध्याये[2] । तत्र श्रुतभगवन्माहात्म्यो राजा विशेषविवित्सया शुकं पृच्छति– **सर्वासामिति** । किमत्र संशयबीजमित्यत उक्तम्– **गोविन्देति** ॥ १ ॥

अनेन सर्वासु प्रेमवान् मय्येव प्रेमवान् इत्युक्तममुना । एकस्यामिति प्रतीयत इति[3] ॥ २ ॥ प्रश्नावकाशो नास्तीति भावेन परिहरति– **महिषीणामिति** ॥ ३ ॥ कथं प्रख्यातिरिति तां वक्तुमुपक्रमते– **कदाचिदिति** । तच्चरितम् ॥४॥ स्वस्या रुग्मिण्यास्तल्पे तलिमे[4] स्थितम् ॥५॥ राजन् हरिचरितमतिविचित्रमिति भावेन तत्स्वरूपलक्षणमाह– **य इति** ॥ ६ ॥

यद् गृहं रुग्मिण्यै क्लृप्तं तस्मिन्नन्तर्गृहे पर्यङ्के दन्तविहितमञ्चे कशिपूत्तमे मृदुवस्त्रप्रावरणास्तरणे सुखासीनं पतिमुपतस्थ इत्यन्वयः । मुक्तादाम्नां विलम्बोऽस्यास्तीति मुक्तादामविलम्बि तेन उपरिबद्धचित्रपटेनेत्यर्थः ॥ ७ ॥ अरुणैरित्यनेन चन्द्रोदयकालभवा गावो लक्ष्यन्ते ॥ ८ ॥

---

१. अमलैरिति पाठो निर्मलः -स.
२. अस्पष्टमिदम् ।
३. इदमप्यस्पष्टम् ।
४. तलिमं शय्येति कोशः ।

पयःपेननिभे शुभ्रे पर्यङ्के कशिपूत्तमे । उपतस्थे सुखासीनं जगतामीश्वरं पतिम् ॥ १० ॥
वालव्यजनमादाय रत्नदण्डं सखीकरात् । तेन वीजयती देवी उपासाञ्चक्र ईश्वरम् ॥ ११ ॥
सोपाच्युतं क्वणयती मणिनूपुराभ्यां रेजेऽङ्गुलीयवलयव्यजनाग्रहस्ता ॥
वस्त्रान्तगूढकुचकुङ्कुमशोणहारभासा नितम्बधृतया च परार्ध्यकाञ्च्या ॥ १२ ॥
तां रुग्मिणीं श्रियमनन्यगतिं निरीक्ष्य या लीलया धृततनोरनुरूपरूपा ॥
प्रीतः स्मयन्नलककुण्डलनिष्ककण्ठवक्त्रोल्लसत्स्मितसुधां हरिराबभाषे ॥ १३ ॥

श्रीभगवानुवाच

राजपुत्रीप्सिता भूपैर्लोकपालविभूतिभिः । महानुभावैः श्रीमद्भी रूपौदार्यबलोर्जितैः ॥ १४ ॥
तान् प्राप्तानर्थिनो हित्वा चैद्यादीन् स्मरदुर्मदान् । दत्ता भ्रात्रा स्वपित्रा च कस्माद् देववृषोपमान् ॥

---

पारिजातानां मन्दाराणां वनस्य काननस्यामोदेन युक्तेन वायुना शोभिते । कीदृशेन? उद्यान इव शालिना मनोहरेण । पारिजात(स्य?) वनस्य सम्भजनीयस्य सेव्यस्यामोदस्य सम्बन्धिना वायुना वा । आगरवैरगरुसम्पृक्तैः ॥ ९ ॥

पय:फेननिभे जलबुद्बुदवन्मसृणे ॥१०॥ किंकर्मा इति तत्राह– **बालव्यजनमिति** ॥११॥

उपाच्युतम् अच्युतस्य समीपे । उन्नमदवनमतोः पादयोर्मणिनूपुराभ्यां क्वणयन्ती । अङ्गुलीयाख्यवलयेन व्यजनेन च युक्तं हस्ताग्रं यस्याः सा तथा । पृथक्कृते वलये हस्तमूलेति वक्तव्यं न तु हस्ताग्रेति[1] । वस्त्रान्तेन वस्त्राञ्चलेन गूढयोः कुचयोः लिप्तकुङ्कुमचूर्णसम्बन्धेन शोणस्य रक्तस्य हारस्य मुक्तादाम्नो भासा युक्ता । ''उपलक्षणे तृतीया'' । नितम्बधृतया कटिप्रदेशवेष्टितया परार्ध्यकाञ्च्या अनर्घ्यरशनया च युक्ता ॥ १२ ॥

हरिः नीलनीरदकान्तिः श्रीकृष्णः या लीलया धृततनोर्भगवतः अनुरूपरूपा अनुकूलसौन्दर्या अनुगुणवृत्ता वा तां रुग्मिणीमाबभाषे इत्यन्वयः । निष्कं ग्रैवेयकम् अलककुण्डलाभ्यां निष्कालङ्कृतकण्ठेन च युक्तवक्त्रे उल्लसत् स्मितमेव सुधा यस्याः सा तथा ताम् ॥ १३ ॥ ईप्सिता प्रार्थिता । श्रीमद्भिः श्रीकटाक्षविषयैः । हे राजपुत्रि ॥ १४ ॥

वरणे गुणानाह– **प्राप्तानिति** । वाचा दत्ता । देववृषोपमान् देवश्रेष्ठसमानान् ॥ १५ ॥

---

१. अस्पष्टमिदम् । अङ्गुलीयाख्यवलय इत्येवार्थो न तु अङ्गुलीयकं वलयानि कङ्कणानि चेति । तथात्वे व्यजनेन वीजने हस्तमूलस्थितानां कङ्कणानां पृथक्करणात् अग्रहस्तेत्ययुक्तं स्यादित्यभिप्रायः स्यात् ।

राजभ्यो बिभ्यतः सुभ्रु समुद्रं शरणं गतान् । बलवद्भिः कृतद्वेषान् प्रायस्त्यक्तनृपासनान् ।। १६ ।।
अस्पष्टवर्त्मनां पुंसामलोकपथमीयुषाम् । आस्थिताः पदवीं सुभ्रु प्रायः सीदन्ति योषितः ।। १७ ।।
निष्किञ्चना वयं शश्वन्निष्किञ्चनजनप्रियाः । तस्मात् प्रायेण नो ह्याढ्या न भजन्ति सुमध्यमे ।।१८।।
ययोरात्मसमं वित्तं जन्मैश्वर्याकृतिर्भवः । तयोर्विवाहो मैत्री च नोत्तमाधमयोः क्वचित् ।। १९ ।।
वैदर्भ्येतदविज्ञाय त्वयादीर्घसमीक्षया । वृता वयं गुणैर्हीना भिक्षुभिः श्लाघिता मुधा ।। २० ।।
अथात्मनोनुरूपं वै भजस्व क्षत्रियर्षभम् । येन त्वमाशिषः सत्या इहामुत्र च लप्स्यसे ।। २१ ।।
चैद्यसाल्वजरासन्धदन्तवक्त्रादयो नृपाः । द्विषन्ति मां वरारोहे रुग्मी चापि तवाग्रजः ।। २२ ।।
तेषां वीर्यमदान्धानां दृप्तानां स्मयनुत्तये । आनीताऽसि मया ह्यद्धा तेजोऽपहरताऽसताम् ।। २३ ।।
उदासीना वयं नूनं न स्त्र्यपत्यार्थकामुकाः । आत्मलब्ध्याऽऽस्महे पूर्णा नेहात्मसदृशाः क्रियाः।२४।
एतावदुक्त्वा भगवानात्मानं वल्लभामिव । मन्यमानामविश्लेषात् तद्दर्पघ्न उपारमत् ।। २५ ।।

---

स्ववरणाङ्गीकारे दोषानाह– **राजभ्य इति** । अर्थीत्यादिगुणोपेतान् नृपान् हित्वा राजभ्य इत्यादिदोषयुक्तानस्मान् कस्मात् प्राप्तेत्यन्वयः ।। १६ ।।

एवंविधपुरुषप्राप्तौ योषितां भयं भवतीत्याह– **पुंसामिति** । अलोकपथमीयुषां लोकविलक्षणमार्गवर्तिनां पुंसां पदवीमास्थिताः योषि[illegible] [illegible]ायः सीदन्तीत्यन्वयः ।। १७ ।।

अस्माद्दोषाच्च वयं न वरणीया इत्याह– **निष्किञ्चना इति** । आढ्या राजकुमार्यः[1] ।।१८।।

अयं चैको हेतुर्लोके विवाहे इत्याह– **ययोरिति** । ऐश्वर्याकृतिरैश्वर्ययुक्ताकारः । भवः सौन्दर्यम् ।। १९ ।।

एतद्गुणागुणसर्वस्वम् । अदीर्घसमीक्षया अल्पबुद्ध्या । मुधा वृथा ।। २०-२२ ।। स्मयनुत्तये अहङ्कारनिरासाय । असतां दुरात्मनाम् । तेजोऽपहरता अभिमानलक्षणप्रभावप्रणाशं कुर्वता मयाऽनीताऽसीत्यन्वयः ।। २३ ।।

स्वभावं सूचयति– **उदासीना इति** । उदासीना विषयव्यापारशून्याः खपुष्पादिवदप्रसिद्धा वा । न स्त्र्यपत्यार्थकामुकाः कलत्रपुत्रधनलोलुपा न । आत्मलब्ध्या स्वरूपलाभेन पूर्णा अलम्बुद्धयः आस्महे । इह क्रियाश्च आत्मसदृशाः कर्माणि जीवकर्मतुल्यानि न भवन्ति । अतिमानुषाणीत्यर्थः ।। २४ ।।

---

१. आढ्याः श्रीमन्तो नः प्रायेण न भजन्ति -स.

इति त्रिलोकेशपतेस्तदात्मनः प्रियस्य देव्यश्रुतपूर्वमप्रियम् ।
आश्रुत्य भीता हृदि जातवेपथुश्चिन्तां दुरन्तां रुदती जगाम ह ॥ २६ ॥
पदा सुजातेन नखारुणश्रिया भुवं लिखन्त्यश्रुभिरञ्जनासितैः ।
आसिञ्चती कुङ्कुमरूषितौ स्तनौ तस्थावधोमुख्यतिदुःखरुद्धवाक् ॥ २७ ॥
तस्याः सुदुःखभयशोकविनष्टबुद्धेर्हस्ताच्छ्लथद्वलयतो व्यजनं पपात ।
देहश्च विक्लवधियः सहसैव बिभ्यद् रम्भेव वातविहता प्रविकीर्य केशान् ॥ २८ ॥

श्रीशुक उवाच

तद् दृष्ट्वा भगवान् कृष्णः प्रियायाः प्रेमबन्धनम् । हास्यप्रौढिमजानन्त्याः करुणः सोऽन्वकम्पत ॥
पर्यङ्कादवरुह्याशु तामुत्थाप्य चतुर्भुजः । केशान् समूह्य तद्वक्त्रं प्रामृजत् पद्मपाणिना ॥ ३० ॥

---

अविश्लेषान्निरन्तरसाहित्येन स्थितेरात्मानं वल्लभामिव मन्वानां प्रियतमाम्[१] ॥ २५ ॥

यदा हरिणैतादृशं दुःखकरं वचनमुक्त्वोपरतं तदा देवी आत्मनः प्रियस्य त्रिलोकेशपतेरश्रुतपूर्वमप्रियं वचनमाश्रुत्य दुरन्तां चिन्तां जगाम । "प्रत्यारम्भे प्रतिवचनोपक्रमे द्वौ(?)" इति वचनात् इति वचनोपक्रमभीता अत एव हृदि जातवेपथुः उत्पन्नकम्पा । तल्लक्षणमाह– **रुदतीति** ॥ २६ ॥

एतदेव विवृणोति– **पदेति** । रक्तनखप्रभया अरुणा श्रीर्यस्य स तथा तेन सुजातेन कोमलेन पदा भुवं लिखन्ती अञ्जनासितैः कृष्णैः अश्रुभिः कुङ्कुमरूषितौ स्तनौ आसिञ्चती अधोमुखी भूत्वा तस्थावित्यन्वयः ॥ २७ ॥

सुदुःखादिभिर्विनष्टा इदं कर्तव्यमित्यपश्यन्ती बुद्धिर्यस्याः सा तथा । श्लथद् विगलद् वलयं यस्य स तथा तस्मात् । केशान् प्रविकीर्य देहश्च पपात । कीदृशः? बिभ्यत् सञ्चलन् कम्पमान इत्यर्थः । रम्भा कदली ॥ २८ ॥

हास्यं नाम शृङ्गारादिष्वेको रसः । तस्य प्रौढिं समुद्रेकम् । करुणः करुणारसं प्राप्तः । अस्य विवरणमन्वकम्पतेति ॥ २९ ॥

चतुर्भुजः कृष्णः द्वाभ्यां भुजाभ्याम् उत्थाप्य द्वाभ्यां केशान् समूह्य एकीकृत्य बद्ध्वा वक्त्रं प्रामृजत् इति द्योतनाय चतुर्भुज इति प्रत्युक्तम् ॥ ३० ॥

---

१. लोकापेक्षया तद्दर्पघ्न इव सन्नुपारमत् -स.

**प्रमृज्याश्रुकले नेत्रे स्तनौ चोपहतौ शुचा । आश्लिष्य बाहुना राजन्ननन्यविषयां सतीम् ॥ ३१ ॥**
**सान्त्वयामास सान्त्वज्ञः कृपया कृपणां प्रभुः । हास्यप्रौढेर्भ्रमच्चित्तामतदर्हां सतां गतिः ॥ ३२ ॥**

**श्रीभगवानुवाच**

**मा मा वैदर्भ्यसूयेथा जाने त्वां मत्परायणाम् । त्वद्वचः श्रोतुकामेन क्ष्वेलाचरितमङ्गने ॥ ३३ ॥**
**मुखं च प्रेमसंरम्भस्फुरिताधरमीक्षितुम् । कटाक्षेणारुणापाङ्गसुन्दरभ्रुकुटीतटम् ॥ ३४ ॥**
**अयं हि परमो लाभो गृहेषु गृहमेधिनाम् । यन्नर्मैर्नीयते यामः प्रियया भीरुभाषिणि ॥ ३५ ॥**
**सैवं भगवता राजन् वैदर्भी परिसान्त्विता । ज्ञात्वा तां परिहासोक्तिं प्रियत्यागभयं जहौ ॥ ३६ ॥**
**बभाषे ऋषभं पुंसामीक्षती भगवन्मुखम् ।सव्रीडहासरुचिरस्निग्धापाङ्गेन भारत ॥ ३७ ॥**

**रुग्मिण्युवाच**

**नन्वेतदेवमरविन्दविलोचनाह यद् वै भवान् न भवतः सदृशो विभूम्नः ।**
**क्व स्वे महिम्न्यभिरतो भगवांस्त्र्यधीशः क्वाहं गुणप्रकृतिरन्यगृहीतपादा ॥ ३८ ॥**

---

अश्रूणां कला ययोस्ते तथा । शुचोपहतौ कृशौ स्तनौ च । अनन्यविषयाम् अन्यस्पर्शनायोग्याम् ॥ ३१ ॥ अतदर्हां प्रेमगर्भविषादवचनायोग्याम् ॥ ३२ ॥

मा मां प्रति । माऽसूयेथाः गुणे दोषदर्शनं न कुरु । तस्याः तव वचः श्रोतुकामेन मया क्ष्वेलया नर्मलक्षणलीलयाऽऽचरितं कृतम् ॥ ३३ ॥

प्रेमसहितसंरम्भेण स्फुरिताधरं कम्पमानाधरोष्ठम् । कटाक्षेण तिर्यग्दर्शनेनारुणापाङ्गेन रक्तनेत्रप्रान्तेन सुन्दरभ्रुकुटीतटम् ॥ ३४ ॥

कामिवज्जनबिडम्बनं मयाऽकारीत्याशयेनाह– **अयमिति** । प्रियया सह नर्मैः स्नेहगर्भपरिहासवचनैर्यामः कालावयवो नीयत इति यदयमेव गृहस्थानां गृहेषु परमो लाभो हीत्यन्वयः ॥ ३५ ॥

द्विविधं वाक्यमिष्टसाधनावबोधकमेकमपरं दुःखपरिहारात्मकम्, तत्र पश्चादुक्तं दुःखविनाशकमिति भावेनाह– **सैवमिति** ॥ ३६ ॥

पूर्वोक्तमभीष्टसाधनावबोधकत्वेनोपादेयमिति सूचयितुमाह– **बभाष इति** ॥ ३७ ॥

देववृषोपमान् नृपान् हित्वास्मान् कस्माद् वृतवतीत्यत्राह– **नन्विति** । यद्वा इह जीवराशौ आत्मसदृशा न सन्ति अस्माकं क्रियाश्च नेति तत्राह– **नन्विति** । वा इत्ययं

**सत्यं भयादिव गुणेभ्य उरुक्रमान्तः शेते समुद्र उपलम्भनमात्र आत्मा।**
**योऽनित्यकेन्द्रियगणैः कृतविग्रहस्त्वं त्वत्सेवया नृपपदं विधुतं तमोऽन्धम्॥ ३९॥**

---

कृष्णोक्तवाक्यार्थारम्भे वर्तते। नन्वित्यनुमतार्थे। भवान् यदाह समो नास्तीति एतदेवं ननु अनुमतम्। कथम्? तत्राह– **नेति**। विभूम्नः देशतः कालतो गुणतश्चापरिच्छिन्नस्य व्याप्तस्य भवतः सदृशोऽन्यो नास्ति किन्तु भवानेव। रामरावणयोर्युद्धमितिवत्। मत्सदृशी त्वमसीति नेत्याह– **केति**। भगवानैश्वर्यादिगुणसामग्रीसमुद्रो भवान् क? राजादिवदन्याधीनत्वं किं न स्यादिति तत्राह– **स्व इति**। अनेन स्वार्था क्रिया नास्तीत्युक्तं भवति। सत्वादिगुणप्रवर्तकत्वेन प्रकृतिशब्दवाच्याऽहं क? तर्हि त्रिलोक्यां कश्चिन्मत्समः स्यादित्यतो नेति भावेनाह– **त्र्यधीश इति**। त्रयाणां लोकानां त्रयाणां वेदानां त्रयाणां गुणानां वा ईश इत्यनेन इन्द्रादिनिरासोऽभूदित्येतल्लोकपालविभूतिभिरित्यस्योत्तरम्[1]। ब्रह्माद्यन्यतमोऽपि नेतिभावेनाह– **अन्येति**। अन्यैर्ब्रह्मादिभिः। अनेन महानुभावैरित्यस्योत्तरं काहमित्यमुना श्रीमद्भिरित्यादेः[2]॥ ३८॥

"राजभ्यो बिभ्यतः सुभ्रु" इति यदुक्तं तदर्धाङ्गीकारेण परिहरति– **सत्यमिति**। हे उरुक्रम बल्याद्यभिमानिजनशिरोरत्नराजिराजितमहापादन्यास। समुद्रेन्तः शेत इति सत्यं किन्तु राजभ्यो बिभ्यत इत्यसत्यम्। तर्हि तद् व्यर्थमुक्तम्? नेत्याह– **भयादिति**। "राजृ दीप्तौ" इति धातोः कार्ये प्रकाशमानेभ्यः स्वशक्तिद्योतकेभ्यः सत्वादिगुणेभ्यो भयादिव। सज्जनशिक्षार्थम् इवशब्दः। संसारावृत्तिहेतुभ्यो गुणेभ्यो बिभ्यज्जनः समुद्रिक्तसुखार्थी समुद्रादिजलवासेन यथा तपस्यति तथाऽहमिति। यद्वा पञ्चभूतमुद्रासहितत्वात् समुद्रे शरीरेऽन्तर्हृदि शेते इति यत् सत्यं तत् दीप्यत्[3] शब्दादिगुणेभ्यो भयादिवाङ्गुष्ठमात्रः। "अङ्गुष्ठमात्रः पुरुषः" इति श्रुतेः। शरीरान्तस्थस्य जीवादविशेषाज्जननादिकमपि स्यादिति तत्राह– **उपलम्भनमात्र इति**। केवलचिन्मयः, अतो न देहधर्मा अस्य स्युरिति भावः। एकत्र स्थितयोर्जीवेशयोर्विशेषः कथम्? अत्राह– **आत्मेति**। आत्मा तथाविधस्वभावः। किन्नामधेयो भवानित्यतो वाह– **आत्मेति**। आत्मा सुखमेवाददाति नाण्वपि दुःखमित्यात्मा। जीवस्तु शरीरमादाय शरीरान्तराणि निर्मिमीत इति तच्छब्दवाच्यः। "बलवद्भिः कृतद्वेषान्" इत्यस्य तात्पर्यं वक्ति– **य इति**। यः अनित्येकेन्द्रियगणैः कृतविग्रहः

---

१. दत्तमिति शेषेणान्वयः। एवमुत्तरत्रापि।

२. अस्पष्टमिदम्। महानुभावैः श्रीमद्भिरित्यादेः काहमित्यनेनोक्तमिदमुत्तरमित्यभिप्रायः स्यात्।

३. भयादिति स्यात् पाठः।

**त्वत्पादपद्ममकरन्दजुषां मुनीनां वर्त्म स्फुटं नृपशुभिर्ननु दुर्विभाव्यम्।**
**यस्मादलौकिकमिवेहितमीश्वरस्य भूमंस्तवेहितमथो अनु मे भवन्ति ।। ४० ।।**
**निष्किञ्चनो ननु भवान् न यतोऽस्ति किञ्चिद् यस्मै बलिं बलिभुजोऽपि हरन्त्यजाद्याः ।**
**न त्वा विदन्त्यसुतृपोऽन्तिकमाढ्यतान्धाः प्रेष्ठः सतां बलिभुजामपि योऽन्तरास्से ।। ४१ ।।**

---

स त्वं तादृङ्माहात्म्यः ''बलवानिन्द्रियग्रामः'' इति स्मृतेः । बलवन्ति परिवर्तनवन्ति नानायोनिष्वित्यतोऽनित्यानीन्द्रियाणीत्युच्यन्ते[१] । नियन्तुमशक्यत्वाद् बलवन्ति इति । भवत्प्रसादादितरेषां इन्द्रियजयो भवतस्तु स्वत इति । ''पराञ्चि खानि व्यतृणात् स्वयम्भूः'' इति श्रुतेः । प्रायस्त्यक्तनृपासनानित्यत्राह– **त्वत्सेवयेति** । तव सेवा यस्याः साऽहं त्वत्सेवा तया त्वत्सेवया मया नृपासनं नृपपदं नृपशब्दवाच्यमात्रं न तु नॄन् पातीति नृपालनलक्षणार्थोपेतम् अन्धतमः प्रति विधुतं प्रक्षिप्तं, तत्त्यजनं कृतमित्यर्थः[२] । तस्माद् भवानेव नृपशब्दमुख्यार्थत्वात् तत्वज्ञैः सर्वैस्त्यक्तं दत्तं नृपासनं यस्मै स त्यक्तनृपासनः । शिशुपालादय एव त्यक्तमुज्झितं नृपासनं यैस्ते तथा । त्वत्सेवया हेतुना वा ते त्यक्ताः ।। ३९ ।।

अस्पष्टवर्त्मनामित्यस्यार्थमाह– **त्वत्पादेति** । तव पादपद्ममकरन्दसेविनां मुनीनां वर्त्म स्वरूपं स्फुटं स्पष्टम् । तथापि त्वदुक्तं सत्यम् । नृपशुभिरज्ञानिभिर्दुर्विभाव्यं दुर्ज्ञेयं तस्मादस्पष्टमित्युच्यते । यद्वा मुनीनां वर्त्म नृपशुभिः स्फुटं दुर्विभाव्यं किमुत तव वर्त्मेति । अलोकपथमीयुषामित्यस्याप्ययमर्थ इत्याह–**यस्मादिति** । हे भूमन् ईश्वरस्य तवेहितमलौकिकमिव यस्मादथो तस्मात् तवेहितमनु अनुकूलानि मम ईहितानि भवन्ति, अलौकिकानीति शेषः । तवेहितमनुक्रियमाणानि ममेहितान्यलौकिकानि यस्मात् तस्मात् किमु तवेहितमलौकिकमिति वा ।। ४० ।।

''निष्किञ्चना वयम्'' इतीदं निबोधयतः किञ्चित् किञ्चिन्मात्रं नास्ति किन्तु सर्वमेवास्त्यतो भवान् निष्किञ्चन इत्युच्यते[३] । नत्वनाढ्यत्वं निष्किञ्चनत्वमित्याह– **यस्मा इति** । सर्वप्राणिदत्तबलिभुजोप्यजाद्या यस्मै बलिं हरन्ति, स भवान् निष्किञ्चन इति विदुषां परिषदि न शोभत इति शेषः । तस्मात् प्रायेण नो ह्याढ्या न भजन्तीत्यत्रावधारणम्– **न त्वेति** । आढ्यतान्धाः ऐश्वर्यमदान्धाः त्वा त्वां न विदन्ति न जानन्ति, न लभन्ते चेत्यन्वयः ।

---

१. इतिशब्दो बलवन्तीत्यनेन सम्बध्यते । बलवन्तीतीन्द्रियाण्युच्यन्त इति ।
२. विधुतं त्यजनं कृतमित्यर्थः इति ग.पाठः । ३. वाक्यस्यान्वयो न सरलः ।

**त्वं वै समस्तपुरुषार्थमयः फलात्मा यद्वाञ्छया सुमतयो विसृजन्ति कृत्स्नम्।**
**तेषां विभो समुदितो भवतः प्रसादस्त्रय्यां च यश्च रतयोः सुखदुःखिनोर्न ॥ ४२ ॥**

---

दूरस्थत्वान्न विदन्तीति नेत्याह– **अन्तिकमिति** । ''नेदिष्ठमन्तिकतमम्'' इत्यमरः । अत्र हेतुरसुतृप इति स्वेन्द्रियपोषणपरत्वात् । अन्तिकस्थत्वं स्पष्टयति– **बलिभुजामिति** । यस्त्वं बलिभुजां ब्रह्मादीनामप्यन्तरास्से तिष्ठसि किमुतेतरेषाम्? नियन्तृत्वेनेति शेषः । अत्र प्रमाणमाह– **प्रेष्ठ इति** । सतां प्रियतमः । ''प्रियो हि ज्ञानिनोऽत्यर्थमहं स च मम प्रियः'' इत्यतो ज्ञानिदर्शनं प्रमाणम् । ''कस्मै देवाय हविषा विधेम'' ''इमा रुद्राय स्थिरधन्विने गिरः'' इत्यादिश्रुतिः ॥ ४१ ॥

''ययोरेव समं वित्तम्'' इत्याद्युक्तमनुवदति **त्वं वा इति** । वैशब्दो हेत्वर्थः । त्वं फलात्मा सुखात्मा परमानन्दस्वरूपो वै यस्मात् तस्मात् समस्तपुरुषार्थमयः । अर्थ्यत इत्यर्थः, मयट् प्रत्ययः प्रधानार्थः सर्वस्मात् प्राधान्यस्वरूपः, समस्तपुरुषैरर्थ्यमानस्वरूप इत्यर्थः । ये सुमतयः सम्यग्ज्ञानिनो यस्य तव वाञ्छया अनुग्रहेच्छया कृत्स्नं पुत्रमित्रवित्तादि सर्वं विसृजन्ति मुञ्चन्ति । त्यक्तसर्वैषणा इत्यर्थः । अनेन प्रकृते किमागतम्? अत्राह– **तेषामिति** । हे विभो तेषां सुमतीनां भवतश्च प्रसादः पूर्णसुखलक्षणो गुणः समुदितः सम्यगुक्तः । समानो वा नास्तीत्यस्य कोऽभिप्राय इत्यत उक्तम्– **यश्चेति** । चोऽप्यर्थे यश्च कोपि नास्तीत्यर्थः ।

ननु युवयोः कोऽपि गुणः समो नास्ति किम्? अत्राह– **त्रय्यां चेति** । त्रय्यां चशब्दात् स्मृतिष्वपि च [1]तयोर्युवयोर्यश्च कोऽपि गुणोऽस्ति स क इत्यतो रतयोरित्यनेन स सूचितः । ''अग्निष्टोमेन स्वर्गकामो यजेत'' इति वेदोक्तकर्मकर्तृत्वेन सुमतीनां त्रयीरतत्वं भवतो वेदप्रतिपाद्यत्वेन चेत्येवमाकारेण समत्वम् । ननु जीवस्य चेतनत्वेन ज्ञानानन्दादिगुणोऽस्त्येवातः कथं समो गुणो नास्तीत्यत्राह– **सुखदुःखिनोरिति** । सुखदुःखिनोर्युवयोर्मध्ये केवल-सुपरिपूर्णसुखो[2] भवांस्ते सुमतयो भवज्ज्ञानपर्यन्तं दुःखिन इति । ननु पश्चात् समगुणत्वमापन्नम् ''यो वानानन्दाद् विमुक्तः ज्ञानानन्दी भवति'' इति[3] श्रुतेरितीयमाशङ्का ''अल्पसम्पूर्ण-शक्तित्वादल्पपूर्णसुखत्वतः'' इति स्मृतिवचनेन परिहरणीया । यद्वा ये सुमतयः कृत्स्नं विसृजन्ति तेषां भवतः पुंसां भवदीयपुरुषाणां यस्त्वं फलात्मा परमानन्दमोक्षरूपः समुदितः

---

१. गपाठे तयोरिति नास्ति । २. केवलपरिपूर्णसुखो भवानित्येव तात्पर्यपाठः ।

३. स दुःखाद् विमुक्त आनन्दीभवति सोऽज्ञानाद् विमुक्तो ज्ञानीभवतीति भाष्योदाहृता पैङ्गिश्रुतिः ।

त्वं न्यस्तदण्डमुनिभिर्गदितानुभाव आत्माऽऽत्मदश्च जगतामिति मे वृतोऽसि।
मुक्त्वा भवद्भवदुदीरितकालगन्ध[1]ध्वस्ताशिषोऽब्जभवनाकपतीन् कुतोऽन्यान्[2] ॥ ४३ ॥
सत्यं वचस्तव गदाग्रज यश्च भूपान् विद्राव्य शार्ङ्गनिनदेन जहर्थ मां त्वम्।
सिंहो यथा स्वबलिमीश पशुं स्वभागं तेभ्यो भयाद् यदुदधिं शरणं प्रपन्नः ॥ ४४ ॥
यद्वाञ्छया नृपशिखामणयोऽङ्गवैन्यजायन्तनाहुषगदादय ऐकपत्यम्।
राज्यं विसृज्य विविशुर्वनमम्बुजाक्ष सीदन्ति नानुपदवीं त इहास्थिताः किम् ॥ ४५ ॥

---

सम्यगुक्तः त्रय्यां त्रिवेदविहितमार्गे वर्तमानयोः सुखदुःखिनोः धर्माधर्मानुष्ठानेन तत्तत्फल-भुजोर्विहितप्रतिषिद्धकर्त्रोर्यस्त्वं फलात्मा न समुदितः[3] स त्वं मे वृतोऽसीत्यन्वयः ॥ ४२ ॥

''भिक्षुभिः श्लाघिता मुधा'' इत्यस्योत्तरं शृणु– **त्वमिति**। न्यस्तो वाङ्मनःकायलक्षणो दण्डो यैस्ते न्यस्तदण्डाः, तैर्मुनिभिः वाचंयमैः निर्जितेन्द्रियग्रामैः गदितानुभावः स्पष्टीकृत-प्रभावस्त्वम्। अदीर्घसमीक्षयेति यदुक्तं तत्राह– **आत्मेति**। जगतामात्मा स्वामी भजतामात्मदः सायुज्यमुक्तिप्रदश्चेति दीर्घसमीक्षया निश्चित्य मे मया त्वमभिहितः वृतोऽसि। ''हिर्हेताव-वधारणे'' इति यादवः। भवतो भवज्जायमानमुदीरितमुदीरणं प्रेरणं यस्य स भवद्भवदुदीरितः स चासौ कालः भवद्भवदुदीरितकालः तस्य गन्धेन ध्वस्ताशिषः निरस्तसम्पदः। अब्धोजा-तोऽब्जो ब्रह्मा ''सोऽब्ध्य एव पुरुषं समुद्धृत्यामूर्च्छयत्'' इति श्रुतेः। भवो रुद्रः नाकपतिरिन्द्रः। एतान् मुक्त्वा। अन्यांश्चैद्यादीन् मुक्त्वेति कुतः किमु वक्तव्यमित्यर्थः। एषामदीर्घसमीक्षया[4] वृतोऽसीत्यर्थः ॥ ४३ ॥

राजभ्यो बिभ्यत इत्येतत् प्रकारान्तरेणाक्षिपति **सत्यमिति**। हे गदाग्रज चशब्द एवार्थे। यस्त्वेव शार्ङ्गनिनदेन भूपान् विद्राव्य मां जहर्थ हृतवानसि। कथमिव? यथा सिंहः स्वभागं पशुलक्षणं स्वबलिं स्वस्य भरणयोग्यं हरति तथा तेभ्यो राजभ्यो भयादुदधिं शरणं प्रपन्न इति यत् तत् तव वचः सत्यं साधुभावं त्यजतीति[5] अस्मद्व्यामोहनार्थमुक्तमिति भावः ॥ ४४ ॥

---

१.२. भवदुदीरितकालवेगेति कुतोऽन्ये इति (च) पाठं मन्ये सुन्दरम् -स.

३. समुदितः इति ग.पाठः। अस्पष्टमिदं वाक्यम्। विहितप्रतिषिद्धकर्त्रोर्विषये फलात्मा त्वमिति न समुदितः, तवाभेदो नोक्त इत्यभिप्रायो भवेद्वा?

४. अदीर्घत्वसमीक्षयेत्यर्थः। भावप्रधानो निर्देशः।

५. सत्यमित्यस्यार्थः साधुभावं त्यजतीति।

**का स्त्री वृणीत तव पादसरोजगन्धमाघ्राय सन्मुखरितं जनतापवर्गम् ।**
**लक्ष्म्यालयं त्वविगणय्य गुणालयाढ्यं मर्त्याशिषोरुभयमर्थविविक्तदृष्टिः ॥ ४६ ॥**
**तं त्वानुरूपमभजं जगतामधीशमात्मानमत्र च परत्र च कामरूपम् ।**
**स्यान्मे तवाङ्घ्रिशरणं श्रुतिभिर्भ्रमख ये वै भजन्ति उत यान्त्यनृतापवर्गम् ॥ ४७ ॥**
**कस्याः स्युरच्युत नृपा भवतोपदिष्टाः स्त्रीणां गृहेषु खरगोश्वबिडालभृत्याः ।**
**यत्कर्णमूलमरिकर्शन नोपयायाद् युष्मत्कथा मृडविरिञ्चिसभासु गीता ॥ ४८ ॥**

---

प्रायः सीदन्ति योषित इत्यत्र वक्ति– **यद्वाञ्छयेति** । नृपशिखामणयोऽङ्गादयो यस्य तव श्रीपादनिषेवणवाञ्छया ऐकाधिपत्यं राज्यं साम्राज्यं विसृज्य वनं विविशुः ते राजानः सीदन्ति किम्? तवानुपदवीं नास्थिताः किम्? आस्थाय न सीदन्तीत्यर्थः । अम्बुजाक्षेत्यनेन नयनयोः स्निग्धं गुणं सूचयति ॥ ४५ ॥

स्थिरबुद्धित्वेन पुरुषाणां विषादाभावेऽपि भीरूणां स्त्रीणां स स्यादिति मन्दाशङ्कां श्लोकद्वयेन परिहरति– **केति** । का स्त्री सततं रमणकाङ्क्षिणी जनतायाः जनसमूहस्यापवर्गो मोक्षो यस्मात् स तथा तम् । सद्भिः मुखरितं मुख्यत्वेनेरितं दत्तमुपदिष्टम्, प्रधानीकृतमित्यर्थः । एवंविधं तव पादसरोजगन्धमाघ्राय निषेव्य पुनरत्र परत्र च कामरूपं त्वामविगणय्य मर्त्याशिषा नाशशिरस्कसम्पदा कारणेन उरुभयं गुरुतरभीतिमन्तं जनं वृणीतेत्यन्वयः ॥ कीदृशं त्वाम्? लक्ष्म्याः सकलसम्पद आलयं शौर्यादिगुणानामालयम् अत एवाढ्यं च ॥ ४६ ॥

यस्त्वमविशेषेण स्त्रीपुरुषाणामर्थनीयगुणरत्नाकरस्तं त्वामहमभजम्, चैद्यादीन् हित्वेति शेषः । कथंविधं त्वाम्? अनुरूपमनुकूलसौन्दर्यं जगतामधीशं जगतामीश्वराणां ब्रह्मादीनामपि सम्पत्प्रदम् अत एवात्मानं तेषां स्वामिनम् । कीदृशी? अहं च अर्थविविक्तदृष्टिः अर्थोऽयमिति विवेकीकृतदृष्टिः अव्यक्तज्ञानेत्यर्थ (?) । किं बहुनेत्याशयेनाह– **स्यादिति** । कीदृश्याः भ्रमत्या भ्रमः ति अन्नं यस्याः सा भ्रमतिः तस्या विपरीतज्ञानिनामीशित्र्या इत्यर्थः[१] ॥ केनेयमवगम्यत इत्यत उक्तं– **श्रुतिभिरिति** । श्रुतिप्रमाणेन, सिद्धाया इति शेषः । ''अभ्रमा भ्रमतामत्री या वेदैरधिगम्यते'' इति स्मृत्या च । ''मुखं तु वदने मुख्ये'' इति यादवः । तीत्यन्नमिति श्रुतिः । पारत्रिककामरूपत्वं दर्शयति– **य इति** । ये त्वां भजन्ति ते । उत एव अनृतापवर्गं संसारान्मोक्षं यान्तीत्यन्वयः । ''तमेवं विद्वानमृत इह भवति'' इति श्रुतिर्वैशब्देन गृहीता ॥ ४७ ॥

---

१. ''भ्रमन्तः ति अन्नं यस्याः सा भ्रमत्ती तस्याः भ्रमत्त्याः । विपरीतज्ञानिनां भक्षकाया इत्यर्थः । श्रुतिभिः श्रुतिप्रमाणेन'' इति रघुरत्नतीर्थीयतात्पर्यपाठः । 'सा भ्रमती (भ्रमतिः) तस्याः भ्रमत्याः' इति विजयध्वजादिसम्मतः । तत्र तात्पर्यस्थं भ्रमन्त इति पदं भ्रमशब्दस्य व्याख्यानरूपमित्यभिप्रायः ।

**त्वक्श्मश्रुरोमनखकेशपिनद्धमन्तर्मांसास्थिरक्तकृमिविड्भरितान्त्रवीतम् ।**
**जीवच्छवं भजति कामतिर्विमूढा या ते पदाब्जमकरन्दमजिघ्रती स्त्री ॥ ४९ ॥**
**अस्त्यम्बुजाक्ष मम ते चरणानुराग आत्मन् रतस्य मयि चानतिरिक्तदृष्टेः ।**
**यर्ह्यस्य वृद्धय उपात्तरजोऽतिमात्रो मामीक्षसे तदु ह नः परमानुकम्पा ॥ ५० ॥**

---

नृपाणां हेयत्वे दोषान्तरमाह– **कस्या इति** । हे अच्युत, स्वतः परतो वा च्युतिरहित, भवतोपदिष्टा नृपाश्चैद्यादयः कस्याः स्त्रियः स्युः? न कस्या अपि भवन्तीत्यर्थः । सर्व-दोषेष्वधिको दोषोऽयमिति भावेनाह– **यत्कर्णमूलमिति** । हे अरिकर्शन! मृडो रुद्रः। रुद्रविरिञ्चसभासु गीता युष्मत्कथा येषां नृपाणां कर्णमूलं नोऽपयायान्नोपगच्छति, ते इति शेषः। तासां स्युरिति पाठे यासां तासां स्त्रीणां ते नृपाः स्युरित्यर्थः ॥ ४८ ॥

एतदेव स्पष्टयति– **त्वक्श्मश्रुरोमेति** । या स्त्री तव पदाब्जमकरन्दमजिघ्रती असेवमाना सा जीवच्छवं जीवन्मृतं पुरुषं भजति । तत्र निमित्तं काममतिरिति । अस्य सम्पदमाह बहिस्त्व-गादिभिः पिनद्धं बद्धम् अन्तर्मांसादिभिः संवृतम् । ननु विग्रहोप्येतादृशः कृष्णस्य किं न स्याद-विशेषादिति चेन्न । 'आनन्दश्मश्रुरानन्दकेशः' इत्यादिश्रुतेर्हेतोः कालात्ययानदिष्टत्वात् ॥४९॥

अहमप्येतादृशी नेत्याह– **अस्तीति** । चरणयोरनुरागो पराभक्तिरस्तीति भक्तेः सर्वदैकप्रकारत्वं कथयति । मया तव न कोऽप्यर्थ इति भावेनाह– **आत्मन्निति** । आत्मन् आत्मनि । मम तु त्वत्तो महानर्थोऽस्तीति भावेनाह– **मयि चेति** । मयि महाधिकारिण्यां भक्तेर्न अतिरिक्ता दृष्टिरनुग्रहलक्षणा यस्य स तथा । भक्त्यनुकूलानुग्रह इत्यर्थस्तस्या चशब्दो भक्तेरन्वयव्यतिरेकसूचकः । तत् कुत इति चेन्न । ''य एष देवः परोऽक्षरोऽमरस्तं वा एनमाहुः भक्तः'' इत्यादि श्रुतिसिद्धत्वात् । अनेनैव तारतम्यं सूचयति । ''अथातो भक्तिमीमांसा'' इति श्रुतिविहितत्वात् । अन्योन्यं हेतुहेतुमद्भावं चः ''मिलितौ वाव एतौ भवतो यदनुग्रहश्च भक्तिश्च'' इति श्रुतिसिद्धमनुवदति[1] मिलितावन्योन्यं हेतुहेतुमद्भावोपेतौ । भक्त्यनुकूलानु-ग्रहविशेषं कथयति– **यर्हीति** । यर्हि यदा अस्य जगतोऽभिवृद्धये सृष्टिलक्षणायै उपात्तं स्वीकृतं रजोऽतिमात्रं केवलं रजो येन स तथा । यद्वा उपात्ताः प्रलये मूलरजसि अतीताः सङ्गताः मात्रा अंशा येन स तथा । मूलरजो गुणोपादानवानित्यर्थः । तदु तदेव मामीक्षसे ह विशेषत इत्यर्थः । यदा स्थितिलक्षणायै[2] उपात्ता रजसोऽतिरिक्ता मात्रा सत्वलक्षणा येन स तथा । तदा

---

१. चः अनुवदतीत्यन्वयः ।

२. यद्वा स्थितिलक्षणवृद्धय इति पाठः स्यात् ।

**नैवालीकं भरत्येव वचस्ते मधुसूदन। अम्बाया इव हिं प्रायः कन्यावादरतिः क्वचित्॥ ५१॥**
**मुग्धायाश्चापि पुंश्चल्या मनोऽभ्येति नवन्नवम्। बुधोऽसतीं न बिभृयात् तां बिभ्रदुभयच्युतः॥५२॥**

**श्रीभगवानुवाच**

**साध्व्येतच्छ्रोतुकामैस्त्वं राजपुत्रि प्रलम्भिता। मयोदितं यदन्वर्थं सर्वं तत् सत्यमेव हि॥ ५३॥**

---

मामीक्षसे। [१]यदाऽतिवृद्धिरहितो वर्धनं छेदनं संहारस्तस्मै उपात्ता रजोऽतिक्रान्ता मात्रा तमोलक्षणा येन स तथा। अत्रेक्षणं नाम तत्तत्कार्यमनुसृत्य रजआदि यदधीनं तत्तद्गुणाभिवर्धनमभिप्रेतम्। तदुक्तम् ''अथ त्रिगुणा ह्येष प्रकृतिरगुणो वा विष्णुः स यदाह्यरजा रजोऽस्या उद्वर्धयति'' इत्यादि श्रुतौ। नैतत् स्वप्रयोजनमुद्दिश्येति नः अस्मानुद्दिश्य कृता परमकृपेति भावः॥ ५०॥

भगवती भगवदुक्तेरेवं तात्पर्यं प्रकाश्य निगमयति– **नैवेति**। हे मधुसूदन ते तव वचः अलीकम् असत्यलक्षणं भारं न भरति न तु[२] बिभर्त्येव न। ''भृञ् भरणे'' इति धातुः। कथमिव? अम्बायाः कन्यावादरतिरिव। यथा मातुः कन्याप्रदानकथायां रतिस्तात्पर्याभिनिवेशलक्षणा नालीकं भवति[३]। प्रायः एव अयमर्थोऽनुमतो हि। ''समुच्चयेऽनुमत्यां चाप्येव साम्येऽवधारणे'' इति यादवः[४]। कापि मातू रतिरलीकं भरति[५] तव वचः काप्यलीकं न भवत्येव। एतदुक्तम् **क्वचिदिति**। क्वचित् कापि॥ ५१॥

इदानीं कृष्णस्य नियतदारत्वमात्मनो नियतपातिव्रत्यं च ध्वनयन्ती देवी पुंश्चलीममर्थं वादयति[६] **मुग्धाया इति**। अस्यार्थ आचार्योक्तोऽत्र लिख्यते। 'यामसतीं बुधो न बिभृयात्। यां च तां बिभ्रद् दृष्टादृष्टच्युतो भवति। तस्या अपि पुंश्चल्यास्त्वयि मनो नवं नवमभ्येति'' इति। मूर्च्छया मोहिन्या मूढत्वं युवयोरपि तत्र तत्र सुलभमुपलब्धमिति मन्दाशङ्का ''अमुग्धैव तु मुग्धेव त्वदुःखा दुःखितेति च। श्रीर्दर्शयेद्धरिश्चैव नैवैतौ मोहदुःखिनौ'' इत्यादिस्मृत्या परिहर्त्तव्या॥ ५२॥

---

१. यद्वेति पाठः स्यात्। वृद्धये अतिवृद्धये अतिवृद्धिः अहितं वर्धनं छेदनं संहार इत्याशयः स्यात्। तदनेन वृद्धिशब्दस्य सृष्टिस्थितिसंहाररूपमर्थत्रयं प्रत्येकमुक्तं भवति।

२. तुरधिकमिति भाति।

३. नाळीकं भरति प्राय इति रघुरत्नतीर्थपाठः।

४. अस्पष्टमिदम्।

५. भवतीति टीकासम्मतस्तात्पर्यपाठः स्यात्।

६. अस्पष्टमिदम्।

**यं यं कामयसे कामं मयि कामय कामिनि । सन्ति ह्येकान्तभक्तायास्तव कल्याणि नित्यदा ।५४।**
**उपलब्धं पतिप्रेम पातिव्रत्यं च तेऽनघे । यद् वाक्यैश्चोद्यमाना या न धीर्मय्यपकर्षिता ।। ५५ ।।**
**ये मां भजन्ति दाम्पत्ये तपसा व्रतचर्यया । कामात्मानोऽपवर्गेशं मोहिता मम मायया ।। ५६ ।।**

**मां प्राप्य मानिन्यपवर्गसम्पदं वाञ्छन्ति ये सम्पद एव सत्पतिम् ।**
**ते मन्दभाग्या निरयेऽपि ये स्युर्मात्रात्मकत्वान्निरये सुसङ्गमः ।। ५७ ।।**
**दिष्ट्या गृहेश्वर्यसुते मयि त्वया कृताऽनुवृत्तिर्भवमोचनी खलैः ।**
**सुदुष्कराऽसौ सुतरां दुराशिषो ह्यसुम्भराया विकृतिञ्जुषः स्त्रियः ।। ५८ ।।**

---

भगवत्योक्तं भगवता किमनुमतं किंवा विमतमिति विकल्पं परिहरति– **साध्विति** । एतद् वचः । प्रलम्बिता प्रस्तोभिता । अन्वर्थमनुकूलार्थम् ।। ५३ ।।

हे ईश्वरि यं यं कामं कामयसे सर्वे त्वयि नित्यदा सन्ति, हि यस्मात् तस्मात् कां विभूतिं कामयसे? न कामपीत्यर्थः । यद्वा यं यं कामं कामयसे तान् मयि कामयस्व तेषामभावाद् वच्मीत्याह– **सन्तीति** । तस्मात् प्रियवचनमुक्तं कामयति[1] ।। ५४ ।।

भर्तुः स्नेहः पातिव्रत्यं चाभीष्टसम्पत्प्राप्तौ निमित्तं तत् तवास्तीत्याह **उपलब्धमिति** । उपलब्धं दृष्टम् । तत्र हेतुर्यद् वाक्यैरिति । मयि संलग्ना धीर्नापकर्षिता अन्यत्र न नीता । यद् यस्मान्नित्यमुक्त-त्वादावयोर्दाम्पत्यं नित्यम् ।। ५५ ।।

तत्र मुक्तिमन्तरेण दाम्पत्यापेक्षयाऽस्मद्भजनमयुक्तमित्याशयेनाह– **य इति** ।। ५६ ।।

ननु तर्हि सम्पदर्थे भगवद्भजनं युक्तं हीति तत्राह– **मामिति** । सतः सत्यस्य मोक्षस्य पतिम्। ये सम्पल्लक्षणभोगाः । कथं तेषां भोगानां निरये[2] सत्वमिति तत्राह– **मात्रात्मकत्वादिति** । मात्रात्मकत्वात् तेषां भोगानां शब्दादिविषयाविनाभूतत्वान्निरये सुसङ्गमः सुलभः सङ्गम इत्यर्थः ।। ५७ ।।

सर्वभक्तेषु त्वमेव मुख्यभक्तेत्याशयेनाह– **दिष्ट्येति** । हे गृहैश्वर्यसुते देवि, त्वया मय्यनुवृत्तिः भक्तिः कृतेति यत् तद् दिष्ट्या त्वदन्येषां भवमोचनी वा असावनुवृत्तिः खलैः सुदुष्कराशिषः दुष्टेच्छायाः पत्या सह दुर्वाक्यायाः वा असुंभरायाः स्वप्राणपोषणपरायाः

---

१. अस्पष्टमिदम् ।    २. निरयो नाम नीचैरयनं तिर्यग्योनिगमनम् । तत्र विषयभोगः सुलभः ।।

न त्वादृशीं प्रणयिनीं गृहिणीं गृहेषु पश्यामि मानिनि यया स्वविवाहकाले ।
प्राप्तान् नृपानविगणय्य रहोरहो मे प्रस्तापितो द्विज उपस्थितसत्कथस्य ॥ ५९ ॥
भ्रातुर्विरूपकरणं युधि निर्जितस्य प्रौद्वाहपर्वणि च तद्वधमक्षगोष्ठ्याम् ।
दुःखं समुत्थमसहोऽस्मदयोगभीत्या नैवाब्रवीः किमपि तेन वयं जितास्ते ॥ ६० ॥
दूतस्त्वयाऽऽत्मलभने सुविविक्तमन्त्रः प्रस्थापितो मयि चिरायति शून्यमेतत् ।
मत्वा जिहासुरिदमङ्गमनन्ययोग्यं तिष्ठेस्ततस्त्वयि वयं प्रतिनन्दयामः ॥ ६१ ॥

**श्रीशुक उवाच**

एवं सौरतसल्लापैर्भगवान् देवकीसुतः । स्वरतो रमया रेमे नरलोकं विडम्बयन् ॥ ६२ ॥
तथाऽन्यासामपि स्त्रीणां गृहेषु गृहवानिव ॥ आस्थितो गृहमेधीयान् धर्मांल्लोकगुरुर्जुषन् ॥ ६३ ॥

॥ इति पञ्चसप्ततितमोऽध्यायः ॥

---

विकृतिंजुषः जारलक्षणव्याजं सेवमानायाः स्त्रियः सुतरां सुदुष्करा । दिष्ट्या गृहं मङ्गलमन्दिरं च ऐश्वर्ययुतश्च दिष्ट्या गृहैश्वर्ययुतः तस्मिन्निति वा ॥ ५८ ॥

श्लोकत्रयेण देव्याः पूर्वोक्तां भक्तिं लालयति **न त्वादृशीमित्यादिना** । उपस्थिता समीपं प्रापिता त्वत्सत्कथा यस्य स तथा तस्य । रहोरहः अतिरहसि ॥ ५९ ॥

विरूपकरणं केशवपनम् । प्रोद्वाहपर्वणि विवाहलक्षणोत्सवदिवसे[1] । अक्षगोष्ठ्यां द्यूत-विशेषक्रीडायां तस्य भ्रातुर्वधम् । अस्मदयोगभीत्या अस्मद्विरहभयेन ॥ ६० ॥

आत्मलभने स्वलाभार्थं सुष्ठु विविक्तमन्त्रः स्पष्टीकृतरहोवचनः चिरायति विलम्बनं कुर्वति सति एतज्जगच्छून्यम् असदमङ्गलं मत्वाऽनन्ययोग्यम् अन्यपुरुषसंयोगायोग्यमिदम् अङ्गं जिहासुस्तिष्ठेरिति यावत् ॥ ६१ ॥

देव्या गुणा ब्रह्मायुषाऽपि वक्तुं न शक्या इति सङ्क्षिपतीत्याह– **श्रीशुक इति** । सौरतसल्लापैः सुरतसम्बन्धिमिथोभाषणैः । नरलोकं मनुष्यजनं विडम्बयन् अनुकुर्वन् ॥ ६२ ॥

इदमन्यत्रातिदिशति– **तथेति** । गृहवान् गृहस्थ इव आस्थितः उद्गतश्च प्रकाशितः । आङ उद्गमन इति सूत्रम् ॥ ६३ ॥

॥ इति श्रीमद्भागवतटीकायां विजयध्वजतीर्थकृतायां पदरत्नावल्यां दशमस्कन्धे उत्तरार्धे पञ्चसप्ततितमोऽध्यायः ॥

---

१. अनिरुद्धविवाहसमये इत्यर्थः ।

## ॥ अथ षट्सप्ततितमोऽध्यायः ॥

श्रीशुक उवाच

एकैकशस्ताः कृष्णस्य पुत्रान् दशदशाबलाः । अजीजनन्ननवमान् पितुः सर्वात्मसम्पदा ॥ १ ॥
गृहादनपगं वीक्ष्य राजपुत्र्योऽच्युतं स्थितम् । आत्मनोऽमंसत प्रेष्ठं नतत्तत्त्वविदः स्त्रियः ॥ २ ॥
चार्वब्जकोशवदनायतचारुनेत्रसप्रेमहासरसवीक्षितवल्गुजल्पैः ।
सम्मोहिता भगवतो न मनो विजेतुं स्वैर्विभ्रमैः समशकन् वनिता विभूम्नः ॥ ३ ॥
स्मायावलोकलवदर्शितभावहारिभ्रूमण्डलप्रहितसौरतमन्त्रशौण्डैः ।
पत्न्यस्तु षोडशसहस्रमनङ्गबाणैर्यस्येन्द्रियं विमथितुं करणैर्न शेकुः ॥ ४ ॥
याः स्वीप्सितं स्वभवनेष्वधिरूढमुच्चैर्लक्ष्म्यैकधामसरसप्लुतवीक्षणेन ।
ऐक्षन् सतामपि पतिं च सतीः कटाक्षैः स्थूणान्तरेण नवसङ्गमलज्जयैव ॥ ५ ॥

---

अध्यायद्वयेन लोकविडम्बनानुचरितं कथयति । तेन सतां ज्ञानाभिवृद्धिरसतामन्यथेति । तत्रादावेकैकस्यां दशदश पुत्रा आसन्नित्यादि कथयति– **एकैकश इति** । सर्वात्मसम्पदा अन्यूनदेहादिस्वभावसमृद्ध्या ॥ १ ॥ अनपगमपगमरहितम्[1] ॥ २ ॥ एवमपि पराजयः स्त्रीणामेवेत्याह– **चार्विति** ॥ ३ ॥

स्मायो मन्दस्मितं तेन युक्तोऽवलोकः स्मायावलोकः । तस्य लवेनाल्पेन दर्शितेन भावेन स्पन्दनलक्षणक्रियया हारिणा मनोहरेण भ्रुवोर्मण्डलवलयेन प्रहिताः सौरतमन्त्राः सुरतवर्धनमन्त्राः । एतैः शौण्डैः पटुत्वमाप्तैः कामबाणैः करणैः सम्भोगसाधनैः यस्य हरेरिन्द्रियं रेतोलक्षणं विमथितुमालोडयितुं स्रावयितुं वा । वशीकृतकामत्वेन दृढवीर्यत्वात् ॥ ४ ॥

याः पत्न्यः पक्ष्मकटाक्षैः स्थूणान्तरेण स्तम्भव्यवधानेन स्वीप्सितं सुतरामभीष्टं कृष्णमैक्षन् अपश्यन्, ता इति शेषः । केन? उच्यते । लक्ष्म्याः कान्त्या एकधाम प्रधानगृहं च सरसं सस्नेहं प्लुतं दीर्घीकृतं सृतं वा वीक्षणं दर्शनं लक्ष्म्येकधामसरसप्लुतवीक्षणं तेन । स्वभवनेष्वधिरूढमुत्तुङ्गमश्वारूढम् । अपि सम्भावनार्थम् । सतीः सत्यः । स्थूणान्तरे किमर्थमीक्षणमित्यत उक्तम्– **नवसङ्गमेति** ॥ ५ ॥

---

१. अत्रश्लोके द्वितीयार्धे आत्मानमित्यध्याहृत्य आत्मानं स्वात्मानमात्मनः स्वामिनः कृष्णस्य प्रेष्ठममंसतेत्यन्वयः कार्यः ।

**[1]रामा गृहे विहरतः पुरतः कराभ्यां बद्धेक्षणाः स्वदयितस्य मुदा हसन्त्यः ।**
**गात्रान्तराण्यपिदधुर्निजपूरुषस्य क्लेशावहान्यपि तदङ्गजभङ्गभीताः ।। ६ ।।**
**तासां या दशपुत्राणां कृष्ण स्त्रीणां पुरोदिताः । अष्टौ महिष्यस्तत्पुत्रान् प्रद्युम्नादीन् गृणन्ति तान् ।।७।।**

---

सुरतादन्यत्र काले तासां लीलाविशेषमाह– **रामा इति** । रामाः स्त्रियो गृहे विहरतः स्वदयितस्य कराभ्यां पुरतो बद्धेक्षणा मुदा रोमाञ्चहेतुहर्षेण हसन्त्यः साट्टहासं कुर्वन्त्यः निजपूरुषस्य निजभर्तुः क्लेशावहानि क्लेशकराण्यपि गात्रान्तराणि पिधेयेभ्यः स्पर्शयोग्येभ्यो गात्रेभ्योऽन्यद्गात्राण्यपिदधुः वस्त्रादिना पिहितानि चक्रुरित्यन्वयः । कीदृश्यः? तस्याङ्गजस्याश्लेषलक्षणकामस्य भङ्गेन भीता अपीति ।। ६ ।।

इदानीं तासां पृथक्पृथक् पुत्रान् वक्तुमुपक्रमते– **तासामिति** । दशदश पुत्रा यासां ता दशपुत्राः तासाम् । तासां कृष्णस्त्रीणां मध्ये याः पुरोदिताः पूर्वोक्ताः अष्टौ महिष्यस्तासां तान् पुत्रान् प्रद्युम्नादीन् गृणन्ति, तत्रत्या इति शेषः ।। ७ ।।

---

१. 'गात्रान्तराणि पिधातव्येभ्योऽन्यान्यपि । येषां पिधानेन क्लेशो भवत्यात्मनः । निजभर्तृरप्यपिदधुः । निर्लज्ज्रा इत्यकामो भवत्यसाविति भयात्' इति तात्पर्यवेचनमस्मिन् श्लोके ।

अत्रैवं सत्यधर्मीया योजना– 'राजा गृहे विहरतः क्रीडतः । रामा दासीनार्यस्ताभिः सहितं गृहं तस्मिन्निति चावृत्त्याऽर्थः । स्वदयितस्य स्वप्रीतिपात्रस्य निजपूरुषस्य भर्तुः पुरतोऽग्रे कराभ्यां स्वयं बद्धानि पिहितानीक्षणानि यासां ताः । मुदा आनन्देन आहसन्त्यः ईषत्स्मितं कुर्वन्त्यः । स्वपतौ नृपतौ वा सति सतीनां बहुमतो न बहुहास इति तत् । गात्रान्तराणि अपिहितोरुमूलकुचाद्यतिरिक्तानि । आत्मनः क्लेशावहानि । मुखनयनपिधाने किञ्चिच्छ्वासत्यजनभजनतः क्लेशापादकानि स्वाङ्गानि तथा निजपूरुषस्यापि नयनवदनादीन्यपि । निर्लज्ज्राः सतीपरिवारजने किमिदं तन्वङ्ग्यस्तन्वतीति तस्य पत्युरङ्गजः कामः स्वाभिलाषस्तस्य भङ्गस्तस्माद् भीता पिदधुः' -इति

''गृहे स्वसद्मनि विहरतः क्रीडतः स्वदयितस्य स्वप्रेष्ठस्य कृष्णस्य कराभ्यां पुरतो बद्धेक्षणा रामाः कृष्णपत्न्यः मुदा हर्षेण आहसन्त्य ईषत्स्मितं कुर्वन्त्यः सत्यः क्लेशावहानि येषां पिधानेनात्मनः क्लेशो भवति तथाविधानि गात्रान्तराणि पिधातव्येभ्योऽन्यानि मुखादीन्यपि निजपूरुषस्यापि स्वभर्तृरपि सकाशादपिदधुः । यद्यपि प्रियतमस्य भर्तुः सन्निधौ स्वगात्रपिधानं नापेक्षितं तथापि तच्चक्रुः । कुतः? अन्यथा तथा अकरणे निर्लज्ज्रा इमा इत्यस्मास्वभिलाषं त्यजेदसाविति भीताः'' इत्येवमपि योजयितुं शक्यते । अत्र महान्तः प्रमाणम् ।

**चारुदेष्णः सुदेष्णश्च चारुदेहश्च वीर्यवान्[1] । सुचारुश्चारुगुप्तश्च भद्रचारुस्तथाऽपरः[2] ॥८॥**
**चारुचन्द्रोऽतिचारुश्च चारुमान् दशमो हरेः । प्रद्युम्नप्रमुखा जाता रुक्मिण्याऽनवमाः पितुः[3]॥९॥**
**भानुः सुभानुः स्वर्भानुः प्रभानुर्भानुमांस्तथा । चन्द्रभानुर्बृहद्भानुरतिभानुस्तथाऽष्टमः ॥ १० ॥**
**श्रीर्भानुः प्रतिभानुश्च सत्यभामात्मजा दश । साम्बः सुमित्रः पुरुजिच्छतजिच्च सहस्रजित् ॥११॥**
**विजयश्चित्रकेतुश्च वसुमान् द्रविणः क्रतुः । जाम्बवत्याः सुता ह्येते साम्बाद्याः पितृसम्मताः ।१२।**
**भानुश्चन्द्रोऽश्वसेनश्च चित्रगुर्वेगवान् वृषः। आमः शङ्कुर्वसुः श्रीमान्[4] कृतिर्नाग्नजितेः सुताः ।१३।**
**श्रुतः कविर्वृषो वीरः सुबाहुर्भद्र एकलः । शान्तिर्दर्शः पूर्णमास्यः कालिन्द्याः सोमकोऽपरः ।१४।**
**प्रघोषो गात्रवान् सिंहो बलः प्रबल ऊर्ध्वगः । माद्र्याः पुत्रा महाशक्तिः सह ओजोऽपराजितः।१५।**
**वृकोऽर्हकोऽनिलो नीलो बह्वन्नोऽन्नाद एव च । महाशापो वनो वह्निर्मित्रविन्दात्मजाः कृतिः ।१६।**
**सङ्ग्रामजिद् बृहत्सेनः शूरः प्रहरणोऽरिजित्[5] । जयः सुभद्रो भद्राश्वो[6] वाम आयुश्च सप्तकः[7] ॥**
**दीप्तिमांस्ताम्रपत्राद्या रोहिण्यास्तनया हरेः ॥ १७ ॥**
**प्रद्युम्नाच्चानिरुद्धोऽभूद् रुग्मवत्यां महाबलः । पुत्र्यां च रुक्मिणो राजन् नाम्ना भोजकटे पुरे ॥१८॥**
**एतेषां पुत्रपौत्राश्च बभूवुः कोटिशो नृप । मातरः कृष्णभार्याणां[8] सहस्राणि च षोडश ॥१९॥**

---

प्रद्युम्नादन्ये किन्नामान इति तत्राह– **चारुदेष्ण इत्यादिना** ॥ ८,९ ॥

एवं क्रमेण सत्यभामादिसुताननुक्रामति– **भानुरित्यादिना** । एकः शत्रुश्चन्द्रस्य स्वर्भानुः राहुरिव । अपरो लोकस्य भानुः सूर्य इव स्वः स्वर्गपुरे स्थितः ॥ १०-१२ ॥

नाग्नजितेः नग्नजित्पुत्र्या नीलायाः ॥ १३ ॥ वृषविशेषणं वीर इति । अपरः[9] सोमकोऽपि कालिन्द्याः सुतः ॥ १४ ॥ माद्र्याः लक्ष्मणायाः ॥ १५,१६ ॥

रोहिण्याः भद्रायाः ॥ १७ ॥ भोजकटे पुरे स्थितस्य रुक्मिणः पुत्र्याम् ॥ १८ ॥ एतेषां मातरः कृष्णभार्याणां षोडशसहस्राणि ॥ १९ ॥

---

१. वीर्यवानिति आदावीर्यमाणानां विशेषणमिति सत्यधर्मतीर्थाः । २. अपरे इति स.पाठः ।
३. रुक्मिण्या नवमाःपितुः इति स.पाठः । ''रुक्मिण्याः न वमा इति च्छेदः । वमा अवमा इत्यर्थः । वष्टिभागुरिरित्यादेः । न समासो वा'' -स
४. श्रीमानिति विशेषणं सर्वान्वयि ।
५. सङ्ग्रामजिदिति बृहत्सेनविशेषणम् । एवमरिजिदिति प्रहरणस्य । शूर इति च विशेषणं योग्यसर्वान्वयि ।
६. सुभद्रो भद्रायाः इति स.पाठः । तदात्वेऽरिजिदित्यन्यतमस्य नाम ।
७. सात्यक इति स.पाठः । ८. मातरः कृष्णजातानां -ग. ९. अपरः कनिष्ठः -स.

राजोवाच

**कथं रुक्म्यरिपुत्राय प्रादाद् दुहितरं युधि। कृष्णेन परिभूतस्तं हन्तुं रन्ध्रं प्रतीक्षते ॥ २० ॥**
**एतदाख्याहि मे ब्रह्मन् द्विषोर्वैवाहिकीं क्रियाम्। अनागतमतीतं च वर्तमानमतीन्द्रियम्।**
**विप्रकृष्टं व्यवहितं सम्यक् पश्यन्ति योगिनः ॥ २१ ॥**

श्रीशुक उवाच

**यद्यप्यनुस्मरन् वैरं रुक्मी कृष्णावमानितः। व्यतरद् भागिनेयाय सुतां कुर्वन् स्वसुः प्रियम् ॥२२॥**
**तदेवानुस्मरन् वैरं रुक्मी कृष्णावमानितः। तोषयामास तपसा श्रीशैलनिलयं हरम् ॥ २३ ॥**
**तपसाऽऽराधितो रुद्रो रुक्मिणा वरदर्षभः। वरेण च्छन्दयामास स च वव्रे दृढं धनुः[1] ॥२४॥**
**अजेयं शत्रुसङ्घानामच्छेद्यं त्रिदशैरपि। तथेति कार्मुकं दत्त्वा वाक्यं चोवाच शङ्करः ॥ २५ ॥**
**यदा विरुध्यसे विष्णौ तदेतत् कार्मुकं नृप। हित्वा तदा त्वा मामेव प्रतिपत्स्यति नान्यथा ॥२६॥**
**इत्युक्त्वा कार्मुकं दत्त्वा शङ्करो न व्यदृश्यत। सोऽपि लब्धवरो राजा प्राप्य भोजकटं पुरम् ॥२७॥**
**तेन चापेन सकलान् नृपान् प्रख्यातपौरुषान्। वशीचकार सङ्ग्रामे रुक्मी कृष्णमृते नृप ॥ २८ ॥**

---

अरेः कृष्णस्य पुत्राय प्रद्युम्नाय। तं कृष्णम्। रन्ध्रमवसरम् ॥ २० ॥

द्विषोः शत्रुभूतयोः। वैवाहिकीं विवाहसम्बन्धिनीम्। अतीतकथा नेदानीं वक्तुं शक्येति नेत्याह– **अनागतमिति**। विप्रकृष्टं दूरस्थम्। व्यवहितं मूर्तद्रव्यान्तरितम् ॥ २१ ॥

अर्धाङ्गीकारेण परिहरति– **यद्यपीति**। व्यतरद् दत्तवान्। भागिनेयाय सहोदर्याः पुत्रायेति सूचितं प्रियं स्पष्टं चष्टे– **कुर्वन्निति**। इदं दाने कारणम् ॥ २२ ॥

ननु ततः परं वैरं मुक्तवान् किम्? न। ततोऽधिकोऽभूत्। कथम्? अत्राह– **तदेवेति**। श्रीशैलनिलयं श्रीपर्वतवासिनं मल्लिकार्जुननामानमित्यर्थः ॥ २३ ॥

छन्दयामास अभीष्टं दत्तवान्। 'वशाभिप्राययोश्छन्दः' इति ॥ २४ ॥

शत्रुसङ्घानाम्, मनसेति शेषः। अजेयत्वाच्छेद्यत्वे तथा स्तामित्युक्त्वा। तस्य कृष्णभक्तिं दर्शयितुं वक्ति– **वाक्यं चेति** ॥ २५-२८ ॥

---

१. सति शल्यादौ धनुर्वरणं किमर्थं चेन्न। हरिशरासनपराजये जाते हरशरासनांशेन धनुषा जयी स्यामिति दुराशात इति ज्ञेयम् -स.

विरोद्धुं वासुदेवेन रुक्मी नैवाकरोन्मनः । धनुर्लोभान्महाराज न मैत्रीमप्यकल्मषाम् ।। २९ ।।
यद्यप्यनुस्मरन् वैरं गिरिशस्य स्मरन् वचः । वृतः स्वयंवरे साक्षादनङ्गोऽङ्गयुतस्तया ।। ३० ।।
राज्ञः समेतान् निर्जित्य जहारैकरथो युधि । अनिरुद्धो रुक्मवत्यां तस्यां जज्ञे महारथः ।। ३१ ।।
जहार यं चित्रलेखा बाणपुत्र्या प्रचोदिता । सहस्रबाहुर्बाणश्च यत्कृते द्विभुजोऽभवत् ।। ३२ ।।
रुक्मिण्यास्तनयां राजन् कृतवर्मसुतो बली । उपयेमे विशालाक्षः कन्यां चारुमतीं किल ।। ३३ ।।
दौहित्रायानिरुद्धाय पौत्रीं रुक्म्यददाद् हरेः । रोचनां बद्धवैरोऽपि स्वसुः प्रियचिकीर्षया ।। ३४ ।।
जानन्नधर्मं तद्योगं स्नेहपाशानुबन्धनः । तस्मिन्नभ्युदये राजन् रुक्मिणी रामकेशवौ ।। ३५ ।।
पुरं भोजकटं जग्मुः साम्बप्रद्युम्नकादयः । तस्मिन् प्रवृत्त उद्वाहे कलिङ्गप्रमुखा नृपाः ।। ३६ ।।
दृप्तास्ते रुक्मिणं प्रोचुर्बलमक्षैर्विनिर्जय । अनक्षज्ञो बलो राजन्नपि तद्व्यसनी महान् ।। ३७ ।।
इत्युक्तो बलमाहूय तेनाक्षै रुक्म्यदीव्यत । शतं सहस्रमयुतं रामस्तत्राददे पणम् ।। ३८ ।।
तं तु रुक्म्यजयत् तत्र कलिङ्गः प्राहसद् बलम् । दन्तान् सन्दर्शयन्नुच्चैर्नामृष्यत् तद् हलायुधः ।३९।
ततो लक्षं रुक्म्यगृह्णाद् ग्लहं तदजयद् बलः । जितवानहमित्याह रुक्मी कैतवमाश्रितः ।। ४० ।।
मन्युना क्षुभितः श्रीमान् समुद्र इव पर्वणि । जातारुणाक्षोऽतिरुषा न्यर्बुदं ग्लहमाददे ।। ४१ ।।
तं चापि जितवान् रामो धर्मेण च्छलतोऽब्रवीत् । रुक्मी जितं मयाऽत्रेमे वदन्तु प्राश्निका इति ।।४२।।
तथेत्याह कलिङ्गोऽपि दन्तान् सन्दर्श्य सीरिणः। ततः कोपपरीतात्मा तूष्णीमासीद् हलायुधः ।।४३।।

---

तर्हि बन्धुमैत्रीं निर्दुष्टात्माऽकार्षीत् किम्? नेत्याह– **मैत्रीमिति** । अपि तु बन्धुकृत्याकरणेन कल्मषामकरोत् ।। २९ ।।

मैत्र्यकरणे विरोधाकरणे च निमित्तमाह– **यदीति** । अनङ्गश्चेत् किमवलोक्य वृत इत्यत उक्तम्– **अङ्गयुत इति** ।। ३०,३१ ।। यमनिरुद्धम् ।। ३२ ।। कृतवर्मणः सुतः पुत्रः ।। ३३ ।। रुक्मी स्वदौहित्राय हरेः पौत्रायानिरुद्धायेति शेषः, स्वपौत्रीमदात् ।। ३४ ।।

तस्मिन्नभ्युदये अनिरुद्धविषये विवाहे प्रवृत्ते सति ।। ३५,३६ ।। बलं बलभद्रम् । तद्व्यसनी द्यूतक्रियापरः ।। ३७ ।। पराजये पणं ग्लहम् ।। ३८ ।।

कलिङ्गो दन्तवक्रः त्वां जितवान् तानशिक्षत अग्रे इति भावः[१] ।। ३९,४० ।। अर्बुदं दशकोटिधनम्[२] ।। ४१-४३ ।।

---

१. अस्पष्टमिदम् । २. अर्बुदमिति वि.पाठः स्यात् । न्यर्बुदमिति स.पाठः । न्यर्बुदं शतकोटिधनम् -स.

तदाऽब्रवीन्नभोवाणी बलेनैव जितो ग्लहः । धर्मतो वचनेनैव रुक्मी वदति वै मृषा ॥ ४४ ॥
तामनादृत्य वैदर्भो दुष्टराजन्यचोदितः । सङ्कर्षणं परिहसन् बभाषे कालचोदितः ॥ ४५ ॥
नैवाक्षकोविदा यूयं गोपाला वनगोचराः । अक्षैर्दीव्यन्ति राजानो बाणैश्च न भवादृशाः ॥ ४६ ॥
रुक्मिणैवमधिक्षिप्तो राजभिश्चोपहासितः । क्रुद्धस्त्वष्टपदेनैनं[१] जघानोद्वाहपर्वणि ॥ ४७ ॥
कलिङ्गराजं तरसा गृहीत्वा दशमे पदे । दन्तानपातयत् क्रुद्धो योऽहसद् विवृतैर्द्विजैः ॥ ४८ ॥
अन्ये निर्भिन्नबाहूरुशिरसो रुधिरोक्षिताः । राजानो दुद्रुवुर्भीता बलेन परिघार्दिताः ॥ ४९ ॥
निहते रुक्मिणि श्याले नाब्रवीत् साध्वसाधु वा । रुक्मिणीबलयो राजन् स्नेहभङ्गभयाद् हरिः[२] ॥५०॥

अथोऽनिरुद्धं[३] सह भार्यया वरं रथं समारोप्य ययुः कुशस्थलीम् ।
रामादयो भोजकटाद् दशार्हकाः सिद्धाखिलार्था मधुसूदनाश्रयाः ॥ ५१ ॥

॥ इति षट्सप्ततितमोऽध्यायः[४] ॥

---

आकाशसरस्वती किमाहेति तत्राह– **बलेनेति** ॥ ४४ ॥ तामाकाशवाणीम् ॥ ४५,४६ ॥ अष्टपदेनाक्षफलकेन ॥ ४७-४९ ॥ हरेः श्याले रुक्मिणि निहते सति ॥ ५० ॥

भार्यया सहानिरुद्धं वरं रथमारोप्य । रामादयो दशार्हकाः । सिद्धाखिलार्था सम्पन्नसमस्ताभीष्टाः । तत्र हेतुः– **मधुसूदनेति** ॥ ५१ ॥

॥ इति श्रीमद्भागवतटीकायां विजयध्वजतीर्थकृतायां पदरत्नावल्यां दशमस्कन्धे उत्तरार्धे षट्सप्ततितमोऽध्यायः ॥

---

१. अष्टापदेनैनम् इति स.पाठः। अष्टापदं स्यात् कनके सारिणां फलकेपि चेति विश्वकोशोऽपि तैरुदाहृतः।

२. 'न स्नेहभङ्गो देव्यास्तु न भयं केशवस्य च । स्नेहभीत इवाथापि नोचे रुग्मिवधे हरिः' इति तात्पर्योदाहृतेन ब्रह्माण्डवचनेनात्र नरवन्नटनमवसेयम् ।

३. ततोऽनिरुद्धमिति वा अथानिरुद्धमिति वा पाठः । अथोऽनिरुद्धमित्यसरलः । ओदिति प्रगृह्यसञ्ज्ञायां प्रकृतिभावेन भाव्यत्वात् -स.

४. सत्यधर्मतीर्थास्तु ततोऽनिरुद्धं सहभार्यया रथमित्येतदुत्तरं 'बाणस्य तनयामुषामुपयेमे यदूत्तमः' इति श्लोकमारभ्य 'एवं कृष्णस्य विजयं शङ्करेण च संयुगम् । संस्मरेत् प्रातरुत्थाय तस्य न स्यात् पराजयः' इत्यन्तमध्यायद्वयं कचित्पुस्तकसम्पुट्यां नास्तीति प्राचीना न व्यचीचरन् विवृत्तिम् । बहुपुस्तकेषु वर्तते । अपि चानुक्रमणिकायां 'बाणस्य भुजकृन्तनम्' इत्युक्तेस्तथा तृतीये च 'शम्बरं विविदं बाणं मुरं बल्वलमेव च । अन्यांश्च दन्तवक्त्रादीनवधीत् कांश्च धातयत्' इत्युक्तेश्च तद् व्याक्रियत इत्युक्त्वा तदध्यायद्वयं व्याचक्रुः । विजयध्वजतीर्थास्तु न व्याचक्रुरिति ज्ञायते ।

## ॥ अथ सप्तसप्ततितमोऽध्यायः ॥

श्रीशुक उवाच

**तथा ताभिर्वरस्त्रीभी रममाणो जनार्दनः । दिनानि हतसापत्न्यः सुबहून्यत्यवासयत् ॥ १ ॥**

राजोवाच

**तासां षोडशसाहस्रमहिषीणां जनार्दनः । तृप्तिं कथं चकारैको मानुषं देहमाश्रितः ॥ २ ॥**

श्रीशुक उवाच

**हन्त ते कथयिष्यामि श्रोतॄणां विस्मयावहम् । यथा चकार बह्वीनामेकस्तृप्तिं जनार्दनः ॥ ३ ॥**
**नरकं निहतं श्रुत्वा तथोद्वाहं च योषिताम् । कृष्णेनैकेन बह्वीनां तद्दिदृक्षुः स्म नारदः ॥ ४ ॥**
**चित्रं बतैतदेकेन वपुषा युगपत् पृथक् । गृहेषु व्यष्टसाहस्रस्त्रिय एक उदावहत् ॥ ५ ॥**
**इत्युत्सुको द्वारवतीं देवर्षिर्द्रष्टुमागमत् । पुष्पितोपवनारामं द्विजालिकुलनादितम् ॥ ६ ॥**
**उत्फुल्लेन्दीवराम्भोजकल्हारकुमुदोत्पलैः । छुरितेषु सरस्सूच्चैः कूजितं हंससारसैः ॥ ७ ॥**
**प्रासादलक्षैर्नवभिर्जुष्टं स्फाटिकराजतैः । महामरकतप्रख्यैः स्वर्णरत्नपरिच्छदैः ॥ ८ ॥**

---

यथा पूर्वमुक्तं तथाऽत्यवासयत् अतीतान्यकरोत् । यथाऽत्यवासयत् तथा तव कथयामीति वा ॥ १-३ ॥ तरकं निहतं श्रुत्वा तथैकेन कृष्णेन बह्वीनां योषितामुद्वाहं च श्रुत्वा नारदस्तद्दिदृक्षुरभूदित्यन्वयः ॥ ४ ॥

ततः किमिति तत्राह– **चित्रमिति** । एक एकेन वपुषा पृथग् गृहेषु व्यष्टसहस्रस्त्रियः एकस्मिन् मुहूर्ते उदावहदिति यत् तदिदं विचित्रमाश्चर्यमिव ॥ ५ ॥

सन्तोषादुत्सुको भूत्वा देवर्षिः कृष्णचेष्टितं द्रष्टुं द्वारवतीमगमदित्यन्वयः । कीदृशं द्वारवतीं नाम पुरम्? पुष्पिता उपवनारामा यस्मिंस्तत्, द्विजानां पक्षिणामलीनां कुलेन नादितम् ॥ ६ ॥

उत्फुल्लेन्दीवरादिभिश्छुरितेषु मिश्रितेषु सरस्सु हंसादिभिरुच्चैः प्लुतस्वरेण कूजितम् । यद्वा सामान्यत उक्तं नारदागमनं विशिनष्टि– **पुष्पितेत्यादिना** । प्रथमतो द्विजादिनादितं पुष्पितोपवनारामं प्राप । पश्चादुत्फुल्लेन्दीवरादिभिश्छुरितेषु सरस्सु हंसादिभिरुच्चैः कूजितं स्थलमाप ॥ ७ ॥

ततः पश्चात् स्फाटिकराजतैः स्फटिकादिभिर्निर्मितैः नवभिर्नूतनैः प्रासादलक्षैर्जुष्टं स्थलमाप । कीदृशैः? महामरकतप्रख्यैः इन्द्रनीलविहितसोपानैः । स्वर्णरत्नानि सुवर्णश्रेष्ठानि परिच्छदा येषां तानि तथा, अत्युत्तमसुवर्णजलविचित्रितानीत्यर्थः, तैः ॥ ८ ॥

विभक्तरथ्यापथचत्वरापणैः शालासभाभी रुचिरां सुरालयैः ।
संसिक्तमार्गांगणवीथिगेहिनीं पतत्पताकाध्वजवारितातपाम् ॥ ९ ॥
तस्यामन्तः पुरं श्रीमदर्चितं सर्वधिष्ण्यपैः । हरेः स्वकौशलं यत्र त्वष्ट्रा कात्स्नर्येन दर्शितम् ॥१०॥
तत्र षोडशभिः सद्मसहस्रैः समलङ्कृतम् । विवेशैकतमं शौरेः पत्नीनां भवनं महत् ॥ ११ ॥
विष्टब्धं विद्रुमस्तम्भैर्वैदूर्यफलकोत्तमैः । इन्द्रनीलमयैः कुड्यैर्जालैर्मरकतोत्तमैः ॥ १२ ।
वितानैर्निर्मितैस्त्वष्ट्रा मुक्तादामविलम्बिभिः । दान्तैरासनपर्यङ्कैर्मण्युत्तमपरिष्कृतैः ॥ १३ ॥
दासीभिर्निष्ककण्ठीभिः सुवासोभिरलंकृतम् । पुम्भिः सकञ्चुकोष्णीषसुवस्त्रमणिकुण्डलैः ॥१४॥
रत्नप्रदीपनिकरद्युतिभिर्निरस्तध्वान्तं विचित्रवलभीषु शिखण्डिनोऽङ्ग ।
नृत्यन्ति यत्र विहितागुरुधूपमक्षैर्नियातमीक्ष्य घनबुद्धय उन्नदन्तः ॥ १५ ॥
तस्मिन् समानगुणरूपवयःसुवेषदासीसहस्रयुतयाऽनुसवं गृहिण्या ।
विप्रो[१] ददर्श चमरव्यजनेन रुक्मदण्डेन सात्वतपतिं परिवीजयन्त्या ॥ १६ ॥

---

किञ्च विभक्ते रथ्यापथै रथमार्गैश्चत्वरैरापणैश्च शोभिताम् । ततः परं शालाभिः सभाभिरतिरुचिराम्, सुरालयैर्देवगृहैश्च मनोरमाम् । गोमयचन्दनादिना संसिक्तमार्गाश्चाङ्गणानि च वीथयश्च गृहपङ्क्तिपुरोमार्गाश्च संसिक्तमार्गाङ्गणवीथयः, ताश्च गेहानि चास्याः सन्तीति संसिक्तमार्गाङ्गणवीथिगेहिनी, ताम् । पतन्त्यो विवरणावरणे कुर्वन्त्यः पताका येषां ते पतत्पताकाः ते च ध्वजाः (च) पतत्पताकध्वजास्तैर्वारितः स्तम्भित आतपो यत्र सा तथा, ताम् । एवंविधायां तस्यां कुशस्थल्यामन्तर्भागे हरेः पुरं सर्वसम्पदा पूर्णं स्थानमस्तीति शेषः । सर्वधिष्ण्यपैः समस्तैर्ब्रह्मादिभिरर्चितं धिष्ण्यं गृहम् । मध्यगृहपतिर्ब्रह्मा परितः पतय इन्द्रादयः । यत्र पुरे । त्वष्ट्रा विश्वकर्मणा ॥ ९-१० ॥

ततः परितः कृष्णस्य पत्नीनां षोडशभिः सद्मसहस्रैः सन्दर्शनीयतया अलङ्कृतम् । भवनानामेकतमं भवनम् ॥ ११ ॥ कीदृशं तद् गृहम्? अत्राह– **विष्टब्धमिति** । मूले अग्रे च फलकोत्तमानि येषां ते तथा तैः । जालैर्गवाक्षैः ॥ १२ ॥

मुक्तादामविलम्बिभिः अवलम्बमानमौक्तिकमालैः । दान्तैःगजदन्तनिर्मितैः ॥ १३,१४ ॥ अक्षैर्गवाक्षैः । निर्यातं निर्गतं विहितागुरुधूपं दृष्ट्वा । शिखण्डिनो मयूराः ॥ १५ ॥ चामर व्यजनेन चामराख्यव्यजनेन । तस्मिन् भवने ॥ १६ ॥

---

१. ब्रह्मपुत्रत्वाद् विप्र इत्युक्तिः -स.

तं सन्निरीक्ष्य भगवान् सहसोत्थितः श्रीपर्यङ्कतः सकलधर्मभृतां वरिष्ठः ।
आनम्य पादयुगलं शिरसा किरीटजुष्टेन साञ्जलिरवीविशदासने स्वे ॥ १७ ॥
तस्यावनिज्य चरणौ तदपः स्वमूर्ध्ना बिभ्रज्जगद्गुरुतरोऽपि सतां पतिर्हि ।
ब्रह्मण्यदेव इति यद् गुणनाम युक्तं तस्यैव यच्चरणशेषमशेषतीर्थम् ॥ १८ ॥
सम्पूज्य देवऋषिमादिऋषिः पुराणो नारायणो नरसखो विधिनोदितेन ।
वाण्याऽभिभाष्य मितयाऽमृतकल्पया च प्राह प्रभो भगवतः करवाम किं ते ॥ १९ ॥

नारद उवाच

नैवाद्भुतं त्वयि विभोऽखिललोकनाथे मैत्रीं जनेषु दधतश्च दमं खलानाम् ।
निःश्रेयसाय जगतां स्थितिरक्षणाभ्यां स्वैरावतार उरुगाय विदाम सुष्ठु ॥ २० ॥
दृष्टं तवाङ्घ्रियुगलं जनतापवर्गं ब्रह्मादिभिर्हृदि विचिन्त्यमगाधबोधैः ।
संसारकूपपतितोत्तरणावलम्बं ध्यायंश्चराम्यनुगृहाण यथा स्मृतिः स्यात् ॥ २१ ॥
ततोऽन्यदाविशद् गेहं कृष्णपत्न्याः स्म नारदः । योगेश्वरेश्वरस्याङ्ग योगमायाविवित्सया ॥ २२ ॥
दीव्यन्तमक्षभिस्तत्र[1] प्रियया चोद्धवेन च । पूजितः परया भक्त्या प्रत्युत्थानासनादिभिः ॥२३॥
पृष्टश्चाविदुषेवासौ कदाऽऽयातो भवानिति । क्रियते किन्नु पूर्णानामपूर्णैरस्मदादिभिः ॥ २४ ॥
अथापि ब्रूहि नो ब्रह्मन् जन्मैतच्छोभनं कुरु । स तु विस्मित उत्थाय तूर्णमन्यदगाद् गृहम् ॥२५॥
तत्राप्यचष्ट गोविन्दं लालयन्तं शिशून् सुतान् । ततोऽन्यस्मिन् गृहेऽपश्यन्मज्जनाय कृतोद्यमम् ॥२६॥

---

अवीविशत् उपविष्टः ॥ १७ ॥ भो परीक्षित्, नैतच्चित्रमित्याह– **ब्रह्मण्यदेव इति** । यस्य चरणशौचजलमशेषान् तीर्थयति शुद्धान् करोतीत्यशेषतीर्थम् । यद्वा अशेषाणि तीर्थानि यस्मिंस्तत् । तस्य हरेर्ब्रह्मण्यदेव इति यद् गुणनाम तत् तस्यैव युक्तमित्यवधारयेत्यर्थः ॥ १८ ॥ शास्त्रोदितेन विधिना सम्पूज्य ॥ १९ ॥

तत्र नारदः प्रतिवक्ति– **नेति** । त्वयि अद्भुतं नैव, मानादिदानमिति शेषः । स्वैरावतारः स्वेच्छावतार इति सुष्ठु विदाम ॥ २० ॥

अद्य दृष्टं तवाङ्घ्रियुगलं ध्यायन् चरामि । यथा स्मृतिः स्यात् तथाऽनुगृहाण ॥ २१,२२ ॥ अक्षभिरक्षैः । दीव्यन्तं देवनक्रियां कुर्वन्तम् ॥ २३ ॥ अविदुषेव पूर्वगृहे नारदागमनमजानतेव हरिणा भवान् कदाऽऽयात इत्यसौ नारदः पृष्टः ॥ २४-२६ ॥

---

१. दीव्यन्तमक्षैस्तत्रापीति पाठोपि स.सम्मतः ।

**जुह्वन्तं च वितानाग्नीन् यजन्तं पञ्चभिर्मखैः । भोजयन्तं द्विजान् क्वापि भुञ्जानमवशेषितम् ॥२७॥**
**क्वापि सन्ध्यामुपासीनं जपन्तं ब्रह्म[2] वाग्यतम् । एकत्र चासिचर्मभ्यां चरन्तं शिष्यवर्त्मसु ॥२८॥**
**अश्वैर्गजै रथैः क्वापि विचरन्तं गदाग्रजम् । क्वचिच्छयानं पर्यङ्के स्तूयमानं च बन्दिभिः ॥ २९ ॥**
**मन्त्रयन्तं च कस्मिंश्चिन्मन्त्रिभिश्चोद्धवादिभिः । जलक्रीडारतं क्वापि वारमुख्याबलावृतम् ॥३०॥**
**कुत्रचिद् द्विजमुख्येभ्यो ददतं गाः स्वलङ्कृताः । इतिहासपुराणानि शृण्वन्तं मङ्गलानि च ॥३१॥**
**हसन्तं हास्यकथया कदाचित् प्रियया गृहे । क्वापि धर्मं सेवमानमर्थकामौ च कुत्रचित् ॥ ३२ ॥**
**ध्यायन्तमेकमात्मानं पुरुषं प्रकृतेः परम् । शुश्रूषन्तं गुरून् क्वापि कामैर्भोगैः सपर्यया ॥ ३३ ॥**
**कुर्वन्तं विग्रहं कैश्चित् सन्धिं चान्यत्र केशवम् । कुत्रापि सह रामेण चिन्तयन्तं सतां शिवम् ॥३४॥**
**पुत्राणां दुहितॄणां च काले विध्युपनायनम् । दारैर्वरैस्तत्सदृशैः कल्पयन्तं विभूतिभिः ॥ ३५ ॥**
**प्रस्थापनोपनयनैरपत्यानां महोत्सवान् । वीक्ष्य योगेश्वरेशस्य येषां लोका विसिस्मिरे ॥ ३६ ॥**
**यजन्तं सकलान् देवान् क्वचित् क्रतुभिरूर्जितैः । पूर्तयन्तं क्वचिद् धर्मं कूपारामालयादिभिः ॥३७॥**
**चरन्तं मृगयां क्वापि हयमारुह्य सैन्धवम् । घ्नन्तं तीर्थपशून् मेध्यान् परीतं यदुपुङ्गवैः ॥ ३८ ॥**
**अव्यक्तालिङ्गप्रकृतिमन्तःपुरचरादिषु । क्वचिच्चरन्तं योगेशं तत्तद्भावबुभुत्सया ॥ ३९ ॥**
**अथोवाच हृषीकेशं नारदः प्रहसन्निव । योगमायाबलं वीक्ष्य मानुषीमीयुषो रतिम् ॥ ४० ॥**

---

क्वापि गृहे ब्राह्मणदत्तावशेषितमन्नम् ॥ २७ ॥ असिचर्मभ्यां शिष्यवर्त्मसु चरन्तं शिष्यान् शिक्षयन्तम् ॥ २८,२९ ॥ वारमुख्याभिरबलाभिरावृतं वेष्टितम् ॥ ३० ॥ ददतमिति पाठः । ददन्तमिति पाठे दद दान इत्यस्य धातोः शत्रादेशः ॥ ३१,३४ ॥

काले प्राप्ते विध्युक्तप्रकारेण उपनायनमुपनयनं ब्राह्मणीकरणं कल्पयन्तम् । पुत्राणां दारैः सह दुहितॄणां वरैः सह योगं कल्पयन्तम् ॥ ३५ ॥

प्रस्थापनं परगृहं प्रति दुहितृप्रेषणम् । उपनयनं स्वगृहं प्रत्यानयनम् । येषामिति षष्ठी द्वितीयार्थे । लोका यानि कर्माणि वीक्ष्य विसिस्मिरे तानि कुर्वन्तम् । कर्मणामाचरणं वीक्ष्येति वा ॥ ३६ ॥ कूपादिभिः पूर्तयन्तं पूर्ताख्यधर्ममाचरन्तम् ॥ ३७ ॥ सैन्धवं सिन्धुदेशभवम् । तीर्थे शास्त्रे विहितान् । पात्रे प्राप्ते यज्ञे वा ॥ ३८ ॥

अव्यक्तलिङ्गप्रकृतिमस्पष्टलक्षणस्वभावम् । तेषां तेषां भावानां पदार्थानां बुभुत्सया स्वभावजिज्ञासया ॥ ३९ ॥ मानुषरतिं मनुष्यक्रीडाम् ॥ ४० ॥

---

२. ब्रह्म गायत्रीं जपन्तम् -स.

नारद उवाच

विदाम योगमायां ते दुर्दर्शामपि योगिनाम् । योगेश्वरात्मन् निर्भातभवत्पादनिषेवया ॥ ४१ ॥
अनुजानीहि मां देव लोकांस्ते यशसा प्लुतान् । पर्यटामि तवोद्गायन् लीलां भुवनपावनीम् ॥४२॥

श्रीभगवानुवाच

ब्रह्मन् धर्मस्य वक्ताऽहं कर्तारमनुमोदकः । शिक्षयंस्तं लोकमिममास्थितः पुत्र मा खिदः ॥४३॥

श्रीशुक उवाच

इत्याचरन्तं सध्दर्मान् प्राक्सृष्टान् गृहमेधिनाम् । तमेव सर्वगेहेषु सन्तमेकं ददर्श ह ॥ ४४ ॥
कृष्णस्यानन्तवीर्यस्य योगमायामहोदयम् । मुहुर्दृष्ट्वा ऋषिरभूद् विस्मितो जातकौतुकः ॥ ४५ ॥
इत्यर्थधर्मकामेषु कृष्णेनावहितात्मना । सम्यक् सभाजितः प्रीतस्तमेवानुस्मरन् ययौ ॥ ४६ ॥

एवं मनुष्यपदवीमनुवर्तमानो नारायणोऽखिलभवाय गृहीतशक्तिः ।
रेमे च शोडशसहस्रवराङ्गनानां सव्रीडसौहृदनिरीक्षणहासजुष्टः ॥ ४७ ॥
यानीह विश्वविलयोद्भववृत्तिहेतुः कर्माण्यनन्यविषयाणि हरिश्चकार ।
यस्त्वङ्ग गायति शृणोत्यनुमोदते वा भक्तिर्भवेद् भगवति ह्यपवर्गमार्गे ॥ ४८ ॥

॥ इति सप्तसप्ततितमोऽध्यायः ॥

---

आत्मनि हृदये निर्भातस्य प्रकाशितस्य भवतः पादयोर्निषेवया ॥ ४१ ॥ आप्लुतानिति पाठे यशसा तीर्थेन स्नातानित्यर्थः ॥ ४२ ॥

लोकानुकारिचरितदर्शनेन नारदस्यान्यथाज्ञानं निवारयन्निति तत्वमुपदिशति– **ब्रह्मन्निति** । इमं लोकमास्थितः । तं धर्मकर्तारमनुमोदकः अनुज्ञाता ॥ ४३ ॥

उपसंहरति– **इतीति** । इति शब्द आदिवचनः ॥ ४४,४५ ॥ इत्यर्थधर्मकामेषु अवहितात्मना कृष्णेन ॥ ४६ ॥

साक्षान्मोक्षहेतुत्वाद् भगवच्चरितमिदं बुभूषुभिरभ्यसनीयमाश्वसनीयं (च) न तु विटवृत्तवदुपेक्षणीयमिति भावेनाह– **यानीति** । अङ्ग विष्णुरात । विश्वविलयोद्भववृत्तिषु हेतुर्हरिर्यान्यनन्यविषयाणि कर्माणि चकार यस्तु तानि गायति शृणोति अनुजानाति वा तस्य पुंसोऽपवर्गमार्गे भगवति भक्तिर्भवति हि यस्मात् तस्मादवश्यं मुमुक्षुणा सेव्यानीति ॥ ४८ ॥

॥ इति श्रीमद्भागवतटीकायां विजयध्वजतीर्थकृतायां पदरत्नावल्यां दशमस्कन्धे उत्तरार्धे सप्तसप्ततितमोऽध्यायः ॥

## ॥ अथ अष्टसप्ततितमोऽध्यायः ॥

**श्रीशुक उवाच**

**अथोषस्युपवृत्तायां कुक्कुटान् कूजतोऽशपन्। गृहीतकण्ठ्यः पतिभिर्माधव्यो विरहातुराः ॥ १ ॥**
**वयांस्यरूरुवन् कृष्णं बोधयन्तीव बन्दिनः। गायत्स्वलिष्वदभ्रेषु मन्दारवनवायुभिः ॥ २ ॥**
**मुहूर्तं तं तु वैदर्भी नामृष्यदपि शोभनम्। परिरम्भणविश्लेषात् प्रियबाह्वन्तरं गता ॥ ३ ॥**
**ब्राह्मे मुहूर्ते उत्थाम वार्युपस्पृश्य माधवः। दध्यौ प्रसन्नकरणः स्वात्मानं तमसः परम् ॥ ४ ॥**
**एकं परं ज्योतिरनन्यमद्वयं स्वसंस्थया नित्यनिरस्तकल्मषम्।**
**ब्रह्माख्यमस्योद्भवनादिहेतुभिः स्वलक्षणैर्लक्षितभावनिर्वृतम् ॥ ५ ॥**
**अथाप्लुतोऽम्भस्यमले यथाविधि क्रियाकलापं परिधाय वाससी।**
**चकार सन्ध्योपगमादि सत्तमो हुतानलो ब्रह्म जजाप वाग्यतः ॥ ६ ॥**

---

राज्ञां दैनन्दिननित्यनियमप्रकारं कथयत्यस्मिन्नध्याये। तत्रादौ माधवीनां ग्राम्यधर्मलौल्यातिशयं कथयति[1] **अथेत्यादिना** ॥ १ ॥

वयांसि कोकिलादीनि। बन्दिनः कृष्णं बोधयन्तीवोपतस्थुः। नित्योद्बुद्धत्वादिवेति। मन्दारवनवायुभिः पारिजातवनवायुभिः सह ॥ २ ॥

तं मुहूर्तोपलक्षितकालम्। प्रियस्य कृष्णस्य बाह्वन्तरं वक्षःस्थलम् ॥ ३ ॥ नित्यप्रसन्नान्तःकरण आत्मानं स्वयमेव ॥ ४ ॥

इतरवस्तुभ्य आत्मानं व्यावर्तयति– **एकमिति**। एकं मुख्यं स्वरूपभेदशून्यं वा। आदित्यादिज्योतिभ्यः परं विलक्षणम्। 'परं ज्योतिरुपसम्पद्य' इति श्रुतिः। अनन्यम् अन्याधीनस्वभावरहितम्। न अन्यः स्वतन्त्रो यस्मात् स तथा तं वा। अद्वयमसदृशम्। स्वसंस्थया स्वव्यवस्थया स्वमहिम्ना स्वाकारेण वा नित्यनिरस्तदोषम्। किं तस्य नामधेयम्? अत्राह– **ब्रह्माख्यमिति**। स्वलक्षणैः स्वरूपलक्षणैः व्यावर्तकधर्मैः। अस्य जगत उद्भवनादिहेतुभिः सृष्ट्यादिहेतुभिः लक्षितभावनिर्वृतिः स्वरूपानन्दो यस्य स तथा तम्। 'यदेष आकाश आनन्दो न स्यात्' इति श्रुतेः ॥ ५ ॥

सन्ध्योपगमादि सन्ध्योपासनादिकं क्रियाकलापं चकार। ब्रह्म जजाप नियतस्वाध्यायाध्ययनं कृतवान् गायत्रीं वा जप्तवान् ॥ ६ ॥

---

१. तत्रादौ भगवदङ्गालिङ्गनविरहकातराणां तरुणीनामितरासां ग्राम्यधर्माशां रुक्मिण्या उपलक्षणया सत्यायाश्च नटनं च कथयति -स.

उपस्थायार्कमुद्यन्तं तर्पयित्वाऽऽत्मनः कलाः । देवान् ऋषीन् पितॄन् वृद्धान् विप्रानभ्यर्च्य चात्मवान् ॥
धेनूनां रुक्मशृङ्गीणां साध्वीनां मौक्तिकस्रजाम् । पयस्विनीनां गृष्टीनां सवत्सानां सुवाससाम् ॥८॥
ददौ रौप्यखुराग्राणां क्षौमाजिनतिलैः सह । अलङ्कृतेभ्यो विप्रेभ्यो वद्वं वद्वं[1] दिनेदिने ॥ ९ ॥
गोविप्रदेवतावृद्धान् गुरुभूतानि सर्वशः । नमस्कृत्वाऽऽत्मसम्भूतिं मङ्गलानि समस्पृशत् ॥ १० ॥
आत्मानं भूषयामास नरलोकविभूषणम् । वासोभिर्भूषणैः स्वीयैर्दिव्यस्रगनुलेपनैः ॥ ११ ॥
अवेक्ष्याज्यं तथाऽऽदर्शं गोवृषद्विजदेवताः । कामिनां सर्ववर्णानां पौरान्तःपुरचारिणाम् ।
प्रादात् कामान् पृथक् कामैः प्रतोष्य प्रत्यनन्दत ॥ १२ ॥
संविभज्याग्रतो विप्रान् स्रक्ताम्बूलानुलेपनैः। सुहृदः प्रकृतीर्दारान् प्रायुङ्क्त च ततः स्वयम् ॥
तावत् सूत उपानीय स्यन्दनं परमाद्भुतम् । सुग्रीवाद्यैर्हयैर्युक्तं प्रणम्यावस्थितोऽग्रतः ॥ १४ ॥
गृहीत्वा पाणिना पाणिं सारथे रथमारुहत् । सात्यक्युद्धवसंयुक्तः पूर्वाद्रिमिव भास्करः ॥ १५ ॥
ईप्सितोऽन्तःपुरस्त्रीणां सव्रीडप्रेमवीक्षितैः । कृच्छ्राद् विसृष्टो निरगाज्जातहासो हरन् मनः ॥१६॥

---

स आत्मनः कलाः स्वसन्निधानविशेषोपेतान् । आत्मवान् स्वाधीनप्रयत्नः स्वाधीनमना वा ॥ ७ ॥ साध्वीनां पादबन्धनादिक्रियानपेक्षाणाम् । गृष्टीनां प्रथमप्रसूतानाम् ॥ ८ ॥ वद्वं वद्वं द्वयं द्वयमेकैकस्मै विप्राय[2] ॥ ९ ॥

गोविप्रदेवता वयोवृद्धांश्च । गुरुभूतान्यश्वत्थादीनि नमस्कृत्य । एतत् सर्वं कीदृशम्? अत्राह– **आत्मेति** । आत्मनः सम्भूतिं सन्निधेः प्रतिमाम् । मङ्गलानि तिलादीनि ॥ १० ॥ नरलोकस्य मुक्तामुक्तस्य भूषणमलङ्कारभूतम् ॥ ११ ॥

आदर्शं दर्पणम् । गवादींश्च प्रेक्ष्य । देवताः प्रतिष्ठिताः । कामिनामर्थिनां कामान् काम्यान् पदार्थान् । किं बहुना? सर्वान् कामैः पृथक् पृथक् प्रतोष्य सन्तोषं जनयित्वा स्वयमपि प्रत्यनन्दत सन्तुष्टोऽभूदित्यन्वयः ॥ १२ ॥

द्रव्यसंविभागक्रममाह– **संविभज्येति** । विप्रादीनुद्दिश्य स्रगादिभिः । तृतीया च द्वितीयार्थे । प्रायुङ्क्त स्वयं स्वीचकार ॥ १३ ॥ तावत् तदा ॥१४,१५॥ स्त्रीणां मतः ॥ १६ ॥

---

१. बद्धंबद्धमित्यपपाठः । वद्वपदार्थो नवमे भरतमधिकृत्यप्रवृत्तग्रन्थविवरणे स्फुटं प्रदर्शितः -स । चतुरधिकाशीतैस्त्रयोदशसहस्रैरेकं वद्वमिति ।

२. इदं वाक्यं लेखकप्रमादायत्तं स्यात् ।

सुधर्माख्यां सभां सर्वैर्वृष्णिभिः परिवारितः । प्राविशद् यन्निविष्टानां न सन्त्यङ्ग षडूर्मयः ॥१७॥
तत्रोपविष्टः परमासने विभुर्बभौ स्वभासा ककुभोऽवभासयन् ।
वृतो नृसिंहैर्यदुभिर्यदूत्तमो यथोडुराजो दिवि तारकागणैः ॥ १८ ॥
तत्राथ मन्त्रिणो राजन् नानाहास्यरसैर्विभुम् । उपतस्थुर्नटाचार्या नर्तक्यस्ताण्डवैः समम् ॥१९॥
मृदङ्गवीणामुरजवेणुतालतलस्वनैः । ननृतुर्जगुस्तुष्टुवुश्च सूतमागधबन्दिनः ॥ २० ॥
तत्रस्था ब्राह्मणाः केचिदासीना ब्रह्मवादिनः । पूर्वेषां पुण्ययशसां राज्ञां चाकथयन् कथाः ॥२१॥
तत्रैकः पुरुषो राजन्नागतोऽपूर्वदर्शनः । विज्ञापितो भगवते प्रतीहारैः प्रवेशितः ॥ २२ ॥
स नमस्कृत्य कृष्णाय परेशाय कृताञ्जलिः । राज्ञामावेदयद् दुःखं जरासन्धोपरोधजम् ॥ २३ ॥
ये तु दिग्विजये तस्य सन्नतिं नाययुर्नृपाः । प्रसह्य रुद्धास्तेनासन्नयुते द्वे गिरिव्रजे ॥ २४ ॥

राजान ऊचुः[१]

कृष्णकृष्णाप्रमेयात्मन् प्रपन्नभयभञ्जन । वयं त्वां शरणं यामो भवभीताः पृथग्धियः ॥ २५ ॥
लोको विकर्मनिरतः कुशले प्रमत्तः कर्मण्ययं त्वदुदिते भवदर्चने स्वे ।
यस्तावदस्य बलवानिह जीविताशां सद्यश्छिनत्त्यनिमिषाय नमोऽस्तु तस्मै ॥ २६ ॥
कालो भवान् जगदिदं कलयाऽवतीर्णः सद्रक्षणाय खलनिग्रहणाय चान्यत् ।
कश्चित् त्वदीयमतियाति निदेशमीश किं वा जनः सुकृतमृच्छति तन्न विद्मः ॥ २७ ॥

---

यन्निविष्टानां यत्र सभायामुपविष्टानामशनपानादिषडूर्मयो न सन्ति न बाधन्ते ॥ १७ ॥ नृसिंहैः पुरुषश्रेष्ठैः ॥ १८ ॥ नानाविधैर्हास्यैर्हसनविषयै रसै रागजनकवचनैः ॥ १९ ॥ नटादयो ननृतुः सूतादयो जगुः ॥ २० ॥

गानानन्तरं कः प्रसङ्ग इत्यत्राह– **तत्रस्था इति** । ष्ठा[२] गतिनिवृत्तिवाचिना शयित्वमुपविष्टत्वं वा सूच्यते, अत्र तयोः को विवक्ष्यत इत्यत उक्तम्– **आसीना इति** ॥ २१ ॥

तत्र तस्यामवस्थायाम् ॥ २२ ॥ जरासन्धेन कृत उपरोधो निरोधस्तस्माज्जातम् ॥ २३ ॥ गिरिव्रजे नगरे ॥ २४ ॥ पृथग्धियो यथार्थज्ञानशून्याः ॥ २५ ॥ अयथार्थज्ञानी किं करोति किं च तस्य फलमिति तत्राह– **लोक इति** । उक्तार्थोऽयम् ॥ २६ ॥

भगवानत्र किमर्थमवतीर्ण इति तत्राह– **काल इति** । च शब्द एवार्थे समुच्चये वा । सतां रक्षणाय खलानां दुष्टानां निग्रहाय इदं जगत् अस्मिन् जगति कलयाऽवतीर्णो भगवानिति

---

१. आगतः पुरुषोत्तमं प्रति तद्वचनमनुवदन् वदति -स. २. ष्ठाधातुनेत्यर्थः ।

स्वप्नायितं नृपसुखं परतन्त्रमीश शश्वद्भयेन मृतकेन धुरं वहामः ।
हित्वा यदात्मनि सुखं तदनीहलभ्यं क्लिश्यामहेऽतिकृपणास्तव माययेति ॥ २८ ॥
तन्नो भवान् प्रणतशोकहराङ्घ्रियुग्मो रुद्धान् वियुङ्क्ष्व मगधाधिपकर्मपाशात् ।
यो भूभुजोऽयुतमतङ्गजवीर्यमेको बिभ्रद् रुरोध भवने मृगराडिवावीः ॥ २९ ॥
यो वै त्वया द्विनवकृत्व उदात्तचक्रो भग्नो मृधे खलु भवन्तमनन्तवीर्यम् ।
जित्वा नृलोकनिरतं स तु रूढदर्पो युष्मत्प्रजाः क्षिपति चाशु च तद् विधेहि ॥ ३० ॥
इति मागधसंरुद्धा भवद्दर्शनकाङ्क्षिणः । प्रपन्नाः पादमूलं ते दीनानां शं विधीयताम् ॥ ३१ ॥

---

किंवदन्ती । एतद् द्वयं विना अन्यत् कार्यं किं? न किमपि । कुतः? कालः । तत्तत्काले तत्तत्कार्यसाधनसमर्थत्वात् । कः खलः को वा सन्निति विशिनष्टि– **कश्चिदिति** । हे ईश कश्चिज्जनस्त्वदीयं निदेशमतियाति अतिक्रामति । स खलः किं सुखमृच्छति किं स्वित्? त्वदीयं निदेशमतियाति अधियाति सः सन् किं सुकृतमृच्छतीति वयं न विद्मः । एकः सुखच्छेदकं लोकमेकः सुखकरं ऋच्छतीति भवान् वेत्तीति वाक्यार्थः[1] । 'अति स्यादधिकार्थोक्तौ प्रशंसायामतिक्रमे' इति ॥ २७ ॥

स्वर्गादिसुखस्य निर्विषयत्वेन राज्यसुखात्परं न किमपीति केषाञ्चित् प्रवादस्तत्राह– **स्वप्नायितमिति** । स्वप्नायितं स्वप्नवत् क्षणिकम् । तदपि न स्वाधीनमित्याह– **परतन्त्रमिति** । तत्र तन्नित्यमित्याशयश्च[2] । तन्मरणतयोपेतेन मृतकेन शवकल्पेन शरीरेण राज्यधुरं वहाम इत्यस्यान्यत् किं सुखमस्तीति । तर्हि तद्धानौ बह्वायासात् क्लेशः स्यादिति तत्राह– **हित्वेति** । यदनीहलभ्यं निवृत्तिमार्गस्थैः साध्यमात्मनि सुखं तद् हित्वा कृपणा वयं क्लिश्यामहे । एवंविधं ज्ञानमस्ति चेत् किमिति क्लेश इत्यत उक्तम्– **तवेति** ॥ २८ ॥

किमिदानीमावश्यकं तद् वद किं बहुसिद्धानुवादेनेति तत्राह– **तन्न इति** । वियुङ्क्ष्व वियोजय । अयुतमतङ्गजवीर्यमयुतगजपराक्रमं बिभ्रत् ॥ २९ ॥

---

१. अस्पष्टमिदं वाक्यजातम् । अतीत्यस्य प्रशंसार्थत्वमतिक्रमार्थत्वं चोपेत्य यः कश्चित् त्वदीय-निदेशमतियाति आधिक्येनानुसरति स सन् । स किं कियत् सुखमृच्छतीति न विद्मः । अपारत्वात् त्वत्प्रसादलभ्यसुखस्य । यः कश्चित् त्वदीयनिदेशमतियाति लङ्घयति सोऽसन् । स किं सुखमृच्छतीति न विद्मः । त्वन्निदेशातिलङ्घनस्यासुखहेतुत्वादित्यभिप्राय आविष्कृत इति भाति ।

२. तत्र तन्नित्यमित्याशयश्चेन्मरणतयोपेतेन मृतकेन -ग.

श्रीशुक उवाच

राजदूते ब्रुवत्येवं देवर्षिः परमद्युतिः । बिभ्रत् पिङ्गजटाभारं प्रादुरासीद् यथा रविः ॥ ३२ ॥
गायन् गिरा मधुरया प्रियकर्माणि जन्म च । द्रावयन्नघसङ्घांश्च लोकान् निरमयन् भृशम् ॥ ३३ ॥
तं दृष्ट्वा भगवान् कृष्णः सर्वलोकेश्वरेश्वरः । ववन्द उत्थितः शीर्ष्णा ससभ्यः सानुगो मुदा ॥३४॥
सभाजयित्वा विधिवत् कृतासनपरिग्रहम् । बभाषे सूनृतैर्वाक्यैः श्रद्धया तर्पयन् मुनिम् ॥ ३५ ॥
अपि स्विदद्य लोकानां त्रयाणामकुतोभयम् । ननु भूयान् भगवतो लोकान् पर्यटतो गुणः ॥३६॥
न हि तेऽविदितं किञ्चित् लोकेष्वीश्वरकर्तृषु । अथ पृच्छामहे युष्मान् पाण्डवानां चिकीर्षितम् ॥

नारद उवाच

दृष्टा मया ते बहुशो दुरत्यया माया विभो विश्वसृजश्च मायिनः ।
भूतेषु शश्वच्चरतः स्वशक्तिभिर्वह्नेरिव च्छन्नरुचो रुचोऽद्भुताः ॥ ३८ ॥
तवेहितं कोऽर्हति साधु वेदितुं स्वमाययेदं सृजतो नियच्छतः ।
योऽविद्ययानात्मतयाऽवसीयते तस्मै नमस्ते स्वविलक्षणात्मने ॥ ३९ ॥

---

उदात्तमुन्नतं चक्रं यस्य स उदात्तचक्रः । आशु च आश्वेव । तस्य प्रतिक्रियाम् ॥३०-३५॥

अद्य त्रयाणां लोकानामकुतोभयमपि भयं नास्ति हि? लोककुशलाकुशलजिज्ञासया पर्यटतो भवतो महान् गुणो भवतीत्याह– **नन्विति** ॥ ३६ ॥

पक्षिवत् पर्यटताऽज्ञेन मया किं प्रयोजनम्? अत्राह– **नहीति** । ईश्वरः कर्ता येषां तथा तेषु । अथ तस्मात् ॥ ३७ ॥ माया माहात्म्यानि । मायिनो नित्याव्याहतमाहात्म्यस्य । दारुषु च्छन्नरुचो वह्ने रुच इव तव रुचोऽप्यद्भुता अचिन्त्याः ॥ ३८ ॥

वह्ने रुचो मथनादिना व्यज्यन्ते न तथा तव रुच इति भावेनाह– **तवेति** । कुतो निर्वेदनमिति तत्राह– **य इति** । यो भवानविद्यया अज्ञानेनानात्मतया अस्वामितया अवसीयते निश्चीयते, शरीरिभिरिति शेषः । इति यदतो वेदनं दुःशकमित्यर्थः । तर्हि तत् सत्यं किम्? नेत्याह– **स्वेति** । स्वतो विलक्षणस्वरूपाय । तस्मात् स्वामित्वमेव सत्यमिति तत्राज्ञानमेव कारणमित्यर्थः[1] । स्वरूपतो विरुद्धलक्षणस्वामिने, कदाप्यनुपहतस्वामिन[2] इति वा ॥ ३९ ॥

---

१. अस्वामित्वं न सत्यमपि तु स्वामित्वमेव सत्यं स्वामिन्यस्वामित्वज्ञानं त्वज्ञाननिमित्तकमित्याशयः स्यात् ।

२. अस्मिन् कल्पे सु अविलक्षणात्मने इति च्छेदः ।

जीवस्य यत् संसरतो विमोक्षणं न जायतेऽनर्थवहाच्छरीरतः ।
लीलावतारैः स्वयशःप्रदीपकं प्रज्वालयेस्त्वं तमहं प्रपद्ये ।। ४० ।।
अथाप्याश्रावये[१] ब्रह्मन् नरदेवविडम्बनम् । राज्ञः पैतृष्वसेयस्य भक्तस्य च चिकीर्षितम् ।।४१।।
यक्ष्यति त्वां मखेन्द्रेण राजसूयेन पाण्डवः । नृपतिः पारमेष्ठ्येन तद् भवाननुमोदताम् ।।४२।।
तस्मिन् देव क्रतुवरे भवन्तं वै सुरादयः । दिदृक्षवः समेष्यन्ति राजानश्च यशस्विनः ।। ४३ ।।
श्रवणात् कीर्तनाद् ध्यानान् पूयन्तेऽन्त्यावसायिनः । तव ब्रह्ममयस्येश किमुतेक्षाभिमर्शिनः ।।४४।।
यस्यामलं दिवि यशः प्रथितं रसायां भूमौ च तेऽमलयशोऽथ दिशां वितानम् ।
मन्दाकिनी च तव पादरजोवहोर्मिः श्रीमत्पदास्पदगताऽथ पुनाति विश्वम् ।। ४५ ।।

।। इति अष्टसप्ततितमोऽध्यायः ।।

---

अज्ञानं मां कदापि न स्पृशेत् प्रत्युत ज्ञानमेव नित्यं प्रज्वलितं भूयादिति प्रार्थयते– **जीवस्येति** । अज्ञानतः संसरतो जीवस्यानर्थवहाच्छरीरतो विमोक्षणं न जायत इति यत् तस्मादे तद्देहहानाय लीलावतारैस्त्वं स्वयशःप्रदीपकं ज्ञानं प्रज्वालयेस्तदर्थमहं शरणं प्रपद्य इत्यन्वयः । अनेन लीलावतारविषयाज्ञानं दूरीकृत्य तत्वज्ञानमेव विकसितं कुर्वित्युक्तं भवति ।। ४० ।।

यतस्त्वत्प्रसादादस्मदादेर्विज्ञानं तत्र किञ्चिदपि विज्ञाप्यं न पश्यामि । अथापि तथापि । अशेषपुरुषार्थप्राप्तौ भगवद्भक्तेर्मुख्यहेतुत्वेऽपि । नरदेवानां विडम्बनं यज्ञकरणम्[२] ।। ४१ ।।

पारमेष्ठ्येनोत्तमकल्पेन, ब्रह्मपदप्राप्तिहेतुना वा ।।४२,४३।। अन्त्यावसायिनः अन्त्यजातयोऽपि । ईक्षा दर्शनम्, अभिमर्शनं स्पर्शादिलक्षणं चैषामितीक्षाभिमर्शिनः ।। ४४ ।।

उक्तमेव स्फोरयति– **यस्येति** । हे अमलयशः मङ्गलकीर्तन यस्य तवाथ कल्याणमत एवामलं निर्दोषं यशो विश्वं पुनाति । ननु मितत्वे यशसो विश्वपुनानत्वं कथमित्यत उक्तम्– **दिवीत्यादि** । घटान्तरदीपवदस्पष्टस्यापि (तत्) कथमित्यत उक्तम्– **दिशां वितानमिति** । दिशामन्तेषु विशेषेण तानो विस्तारो यस्य तत् तथा । तथापि न चोरवदित्याह– **प्रथितमिति** । अथ जन्मप्रभृति श्रीमत्पादलक्षणास्पदं गता तव पादरजोवहोर्मिर्मन्दाकिनीव विश्वं पुनाति । अतस्तव माहात्म्यं किं वक्ष्यामीत्यतो नमोनम इत्युपरमामीति वाक्यार्थः ।। ४५ ।।

।। इति श्रीमद्भागवतटीकायां विजयध्वजतीर्थकृतायां पदरत्नावल्यां दशमस्कन्धे उत्तरार्धे अष्टसप्ततितमोऽध्यायः ।।

---

१. अथापि श्रावये इति स.पाठः ।
२. अज्ञवत् प्रस्तुतप्रश्नादिना देववन्नराशक्यगोवर्धनोद्धारेण नरान् देवांश्च विडम्बयतीति नरदेवविडम्बनस्तं श्रावये इति -स.

## ।। अथ एकोनाशीतितमोऽध्यायः ।।

**श्रीशुक उवाच**

**इत्युदीरितमाकर्ण्य देवर्षेरुद्धवोऽब्रवीत् । सभ्यानां मतमाज्ञाय कृष्णस्य च महामतिः ।। १ ।।**

**उद्धव उवाच**

**यदुक्तं ऋषिणा देव साचिव्यं यक्ष्यतस्त्वया । कार्यं पैतृष्वसेयस्य रक्षा च शरणैषिणाम् ।। १ ।।**
**यष्टव्यं राजसूयेन दिक्चक्रजयिना विभो । अतो जरासुतवध उभयार्थो मतो हि मे ।। ३ ।।**
**अस्माकं च महानर्थो ह्येतेनैव भविष्यति । यशश्च तव गोविन्द राज्ञो बन्धाद् विमुच्यतः ।। ४ ।।**
**सर्वैर्दुर्विषहो राजा नागायुतसमो बले । बलिनामपि चान्येषां भीमसेनबलं विना ।। ५ ।।**
**द्वैरथे स तु जेतव्यो न शताक्षौहिणीयुतः । ब्रह्मण्योऽभ्यर्थितो विप्रैर्न प्रत्याख्याति कर्हिचित् ।।६।।**
**ब्रह्मवेषधरो भूत्वा तं भिक्षेत वृकोदरः । हनिष्यति न सन्देहो द्वैरथे तव सन्निधौ ।। ७ ।।**

---

एकान्तभक्तानां भक्त्यतिशयजननाय हरेर्बन्धुकृत्याचरणलक्षणमाहात्म्यं कथयति । तत्रादौ कृष्णकटाक्षसूचिततत्कार्यविशेष उद्धवः स्वां नीतिं वक्ति- **इतीति** ।। १ ।।

तद् भवाननुमोदतामिति देवर्षिणा यदुक्तं तस्यायमभिप्रायः । हे देव त्वया यक्ष्यतो यागं करिष्यतः पैतृष्वसेयस्य युधिष्ठिरस्य साचिव्यं साहाय्यं कार्यं कर्तव्यमिति । किञ्च शरणैषिणां राज्ञां रक्षा च कार्या ।। २ ।।

कार्यद्वयसाधनोपायं वक्ति- **यष्टव्यमिति** । तेन राज्ञा राजसूयेन यज्ञेन यष्टव्यम् । न ऋष्यादिनेव यागमात्रेण । तथापीत्थंकृत्येन भाव्यमित्याह- **दिक्चक्रेति** । दिङ्मण्डलं जितवता । तत्रामृत्वा जरासन्धः करं न ददातीति यदतो जरासुतवध उभयेषामर्थः प्रयोजनम् ।। ३ ।।

युधिष्ठिरकार्यं सिद्धवत्कृत्वा स्वकार्यमभिष्टौति- **अस्माकमिति** । एतेन जरासन्धवधेन । विमुच्यतो विमोचयतः ।। ४ ।।

दुर्बलैर्दुर्विषहोऽस्तु बलिनां सुविषह इत्यत उक्तम्- **बलिनामिति** । तर्हीदं दुःसाध्यं? नेत्याह- **भीमसेनेति** ।। ५ ।। द्वैरथे द्वन्द्वयुद्धे । तत्रोपायमाह- **ब्रह्मण्य इति** ।। ६ ।।

'तीक्ष्णश्चैव प्रचण्डश्च वृको नामानलो मतः । स पाण्डवस्य जठरे तेन भीमो वृकोदरः' इति । हनननिश्चये को हेतुरित्यत उक्तम्- **तवेति** । त्वया सह गन्तव्यं तदर्थमित्यर्थः ।। ७ ।।

निमित्तमात्रमीशस्य विश्वसर्गनिरोधयोः । हिरण्यगर्भः शर्वश्च कालाख्यारूपिणस्तव ॥ ८ ॥

गायन्ति ते विशदकर्म गृहेषु देव्यो राज्ञां स्वशत्रुवधमात्मविमोक्षणं च ।
गोप्यश्च कुञ्जरपतेर्जनकात्मजायाः पित्रोश्च लब्धशरणा मुनयो वयं च ॥ ९ ॥

जरासन्धवधः कृष्ण भूर्यर्थायोपकल्पते । प्रायः कालविपाकेन तव चाभिमतः क्रतुः ॥ १० ॥

श्रीशुक उवाच

इत्युद्धववचो राजन् सर्वतोभद्रमच्युतः । देवर्षियदुवृद्धाश्च रामश्च प्रत्यपूजयन् ॥ ११ ॥

अथादिशत् प्रयाणाय भगवान् देवकीसुतः । भृत्यान् दारुकजैत्रादीननुज्ञाप्य गुरून् विभुः ॥१२॥

स निर्गत्यावरोधात् स्वात् स्वसुतान् सपरिच्छदान् । सङ्कर्षणमनुज्ञाप्य यदुराजं च शत्रुहा ।
सूतोपनीतं स्वरथमारुहद् गरुडध्वजम् ॥ १३ ॥

ततो रथद्विपभटसादिनायकैः करालया परिवृत आत्मसेनया ।
मृदङ्गभेर्यानकशङ्खगोमुखैः सङ्घुष्टया वै ककुभो निराक्रमत् ॥ १४ ॥

---

तत् कुत इति तत्राह– **निमित्तमात्रमिति** । काल इत्याख्या रूपं सञ्ज्ञा अस्यास्तीति कालाख्यारूपी तस्य[1] ॥ ८ ॥

तत्रेदं कर्म लोकक्षेमकरमिति भावेनाह– **गायन्तीति** । हे कृष्ण राज्ञां देव्यो महिष्यः, चशब्दाद् देव्यः, गृहेषु ते तवेदं कर्म गायन्ति । इदमिति किम्? तत्राह– **स्वशत्र्विति** । आत्मनः स्वामिनो निरोधान्मोक्षणम् । कथं गायन्तीत्यतो लुप्तोपमामाह– **गोप्य इति** । चशब्दो यथावचनः । यथा कुञ्जरपतेर्गजेन्द्रस्य नक्राद् विमोक्षणं नक्रस्य वधं च । यद्वा कुवलयापीडस्यात्मविमोक्षणं शरीरवियोगलक्षणं मरणं चाणूरादिस्वशत्रुवधं च । जनकात्मजायाः सीताया रावणबन्धाद् विमोक्षणं रावणवधं च । मुनयो वाल्मीक्यादयो वयं च यथा पित्रोर्देवकीवसुदेवयोः कंसविहितशृंखलाया विमोक्षणं कंसाख्यशत्रुवधं गायामस्तथेत्यर्थः । देव्यो देवस्त्रियो गृहेषु विमानेषु स्थित्वा मोक्षणमित्यादि वा ॥ ९ ॥

किं बहुनोक्तेन? अयं जरासन्धवधोऽनेकप्रयोजनोपेत इत्याह– **जरासन्धेति** । भूभारहरणार्थत्वेनावतीर्णत्वात् तत्र कालान्तरे दुर्योधनादिभारावरोपणहेतुत्वेनाभिमतः क्रतुरित्याह– **प्राय इति** ॥ १० ॥ सर्वतोभद्रं सर्वप्रकारेण भद्रम् ॥ ११-१३ ॥ ततः किमभूदिति तत्राह– **तत इति** । ककुभो दिशः सङ्घुष्टया सङ्घोषयन्त्या ॥ १४ ॥

---

१. अस्पष्टमिदम् । काल इत्याख्या सञ्ज्ञा रूपं चास्यास्तीति कालाख्यारूपीति स्यात् । तथैव सत्यधर्मोक्तिः । काल इत्याख्या युक्तं रूपमस्यास्तीति सत्याभिनवतीर्थोक्तिः ।
काल इत्याख्यारूपं सञ्ज्ञारूपमस्यास्तीति कालाख्यारूपी तस्य -स.

प्रियाश्च काञ्चन शिबिकाभिरच्युतं सहात्मजाः पतिमनु सुव्रता ययुः ।
वराम्बराभरणविलेपनस्रजः सुसंवृता नृभिरसिचर्मपाणिभिः ।। १५ ।।
नरोष्ट्रगोमहिषखराश्वतर्यः करेणुभिः परिजनवारयोषितः ।
स्वलङ्कृताः परकुटिकम्बलाम्बराद्युपस्करा ययुरधियुज्य सर्वशः ।। १६ ।।
बलं बृहद्ध्वजपटछत्रचामरैर्वरायुधाभरणकिरीटवर्मभिः ।
दिवांशुभिस्तुमुलरवं बभौ रवेर्यथाऽर्णवः क्षुभिततिमिङ्गिलोर्मिभिः ।। १७ ।।
अथो मुनिर्यदुपतिना सभाजितः प्रणम्य तं हृदि निदधद् विहायसा ।
निशम्यागाद् व्यवसितमाहृतार्हणो मुकुन्दसन्दर्शननिर्वृतेन्द्रियः ।। १८ ।।
राजदूतमुवाचेदं भगवान् प्रेमया गिरा[1] । मा भैष्ट दूत भद्रं वो घातयिष्यामि मागधम् ।।१९।।
इत्युक्तः प्रस्थितो दूतो यथावदवदन्नृपान् । तेऽपि सन्दर्शनं शौरेः प्रत्यैक्षन्त मुमुक्षवः ।। २० ।।
आनर्तसौवीरमरूंस्तीर्त्वा विनशनं हरिः । नदीर्गिरीनतीयाय पुरग्रामव्रजाकरान् ।। २१ ।।
ततो दृषद्वतीं[2] तीर्त्वा मुकुन्दोऽथ सरस्वतीम् । पाञ्चालानथ मत्स्यांश्च शक्रप्रस्थमथागमत् ।।२२।।
तमुपागतमाकर्ण्य प्रीतो दुर्दर्शनं नृणाम् । अजातशत्रुर्निरगात् सोपाध्यायः सुहृद्वृतः ।। २३ ।।
गीतवादित्रघोषेण ब्रह्मघोषेण भूयसा । अभ्ययात् स हृषीकेशं प्राणाः प्राणमिवागतम् ।। २४ ।।

---

प्रियाश्चाच्युतं पतिमनुययुः । वस्त्रैः सुसंवृता असिचर्मपाणिभिर्नृभिः परिवृताः ।। १५ ।।

ततो बहिर्नरोष्ट्रादिभिः परिवृताः । परिजनयुतवारयोषितश्च । पटकुट्यो वस्त्रनिर्मित-मन्दिराणि । पटकुटिकम्बलाम्बराणि आदिर्येषां ते तथा । ते च उपस्कराः परिकरा येषां ते तथा । अधियुज्य संयुज्यारोप्य वा ।। १६ ।।

रवेरंशुभिर्दिवा दिनं यथा भाति । बृहद्ध्वजपटादेरुदाहरणमिदम् । क्षुभिततिमिङ्गिलो-र्मिभिरर्णवो यथेति नरोष्ट्रादेर्निदर्शनम् ।। १७ ।। हरेर्व्यवसितं निश्चितं निशम्यागात् ।। १८ ।।

प्रेम स्नेहं यातीति प्रेमया । सोमपाशब्दवद् रूपं नेयम् ।। १९,२० ।। विनशनं कुरुक्षेत्रम् । आकरं रत्नाद्युत्पत्तिस्थानम् ।। २१ ।। दृषद्वतीं चक्रनदीम् ।। २२-२५ ।।

---

१. प्रीणयन् गिरेति सरलः पाठः । प्रेमया गिरेति पाठे प्रेम यातीति प्रेमया ।
विश्वपाशब्दवद रूपं ज्ञेयमिति -स.

२. दृषद्वतीं गण्डिकामिति केचित् । चक्रनदीमिति पूर्वे -स.

दृष्ट्वा विक्लिन्नहृदयः कृष्णस्नेहेन पाण्डवः । चिराद् दृष्टं[1] प्रियतमं सस्वजे स्म पुनः पुनः ॥२५॥

दोर्भ्यां परिष्वज्य रमालयालयं मुकुन्दगात्रं नृपतिर्हताशुभः ।
लेभे परां निर्वृतिमश्रुलोचनो हृष्यत्तनुर्विस्मृतलोकविभ्रमः ॥ २६ ॥
तं मातुलेयं परिरभ्य निर्वृतो भीमः स्मयन् प्रेमजलाकुलेन्द्रियः ।
यमौ किरीटी च सुहृत्तमं मुदा प्रवृद्धबाष्पाः परिरेभिरेऽच्युतम् ॥ २७ ॥

अर्जुनेन परिष्वक्तो यमाभ्यामभिवादितः । ब्राह्मणेभ्यो नमस्कृत्य वृद्धेभ्यश्च यथार्हतः ॥ २८ ॥
मानितो मानयामास कुरुसृञ्जयकेकयान् । सूतमागधगन्धर्वा बन्दिनश्चोपमन्त्रिणः ॥ २९ ॥
मृदङ्गशङ्खपटहवीणापणववेणुभिः । ब्राह्मणाश्चारविन्दाक्षं तुष्टुवुर्ननृतुर्जगुः[2] ॥ ३० ॥
एवं सुहृद्भिः पर्यस्तः पुण्यश्लोकशिखामणिः । संस्तूयमानो भगवान् विवेशालङ्कृतं पुरम् ॥ ३१ ॥

संसिक्तवर्त्म करिणां मदगन्धतोयैश्चित्रध्वजैः कनकतोरणपूर्णकुम्भैः ।
मृष्टात्मभिर्नवदुकूलविभूषणस्रग्गन्धैर्नृभिर्युवतिभिश्च विराजमानम् ॥ ३२ ॥
उद्दीप्तदीपावलिभिः प्रतिसद्मजालनिर्यातधूपरुचिरं विलसत्पताकम् ।
मूर्धन्यहेमकलशै रजतोरुशृङ्गैर्जुष्टं ददर्श भवनैः कुरुराजधाम ॥ ३३ ॥
प्राप्तं निरीक्ष्य नरलोचनपानपात्र[3]मौत्सुक्यविश्लथितकेशदुकूलबन्धाः ।
सद्यो विसृज्य गृहकर्म पतीन् स्वतल्पे द्रष्टुं ययुर्युवतयः स्म नरेन्द्रमार्गे ॥ ३४ ॥
तस्मिन् सुसङ्कुल इभाश्वरथद्विपद्भिः कृष्णं सभार्यमुपलभ्य गृहाधिरूढाः ।
नार्यो विकीर्य कुसुमैर्मनसोपगुह्य सुस्वागतं विदधुरुच्छ्रितवीक्षितेन ॥ ३५ ॥

---

रमा श्रीरालया भूस्तयोरालयं श्रीधराश्रयमित्यर्थः[4] । विस्मृतो लोके विद्यमानो विविधभ्रमो येन स तथा ॥२६॥ प्रेमजलेनानन्दाश्रुजलेनाकुले नेत्रेन्द्रिये यस्य स तथा ॥ २७,२८ ॥ उप समीपे समेत्य मन्त्रणशीलाः ॥ २९,३० ॥ पर्यस्तः परिवृतः ॥ ३१,३२ ॥ चन्दनाम्बुसंसिक्त-वर्त्म कुरुराजधाम ददर्शेत्यन्वयः । प्रतिसद्म प्रतिगृहम् ॥ ३३,३४ ॥ उच्छ्रितवीक्षितेन समनिरीक्षणेन ॥ ३५ ॥

---

१. चिराद्दृष्टमिति पाठोऽपि सुन्दरः । चिरमदृष्टमिति तदर्थः -स.

२. सूतेत्याद्यानुपूर्व्यनुसारेण ननृतुर्जगुस्तुष्टुवुरिति वक्तव्यम् । तथापि ब्राह्मणस्तवनस्य ऐहिकपारत्रिक-फलोपलम्भकतया मुख्यत्वात् प्रागुक्तिः क्रममतिक्रम्येति ज्ञेयम् -स.

३. नराणां लोचनानां पानस्य सादरं निरीक्षणस्य पात्रं विषयम् । नराणामियं रीतिश्चेन्नारीणां रीतिः का कीर्तनीयेति नरपदेन ध्वनयति -स.

४. रमाया आलयो गृहं तद्रूपस्य श्रीवत्सस्यालय आश्रयः -स.

ऊचुः स्त्रियः पथि निरीक्ष्य मुकुन्दपत्नीस्तारा यथोडुपसहाः किमकार्यमूभिः ।
यच्चक्षुषां पुरुषमौलिरुदारहासलीलावलोककलयोत्सवमातनोति ॥ ३६ ॥
तत्र तत्रोपसङ्गम्य पौरा मङ्गलपाणयः । चक्रुः सपर्यां कृष्णाय श्रेणीमुख्या हतैनसः ॥ ३७ ॥
अन्तःपुरजनैः प्रीत्या मुकुन्दः फुल्ललोचनैः । ससम्भ्रमैरभ्युपेतः प्राविशद् राजमन्दिरम् ॥ ३८ ॥
पृथा विलोक्य भ्रात्रेयं कृष्णं त्रिभुवनेश्वरम् । प्रीतात्मोत्थाय पर्यङ्कात् सस्नुषा परिषस्वजे[1] ॥३९॥
गोविन्दं गृहमानीय देवदेवेशमावृतः[2] । पूजायां नाविदत् कृत्यं प्रमोदोपहतो नृपः ॥ ४० ॥
पितृष्वसुर्गुरुस्त्रीणां कृष्णश्चक्रेऽभिवादनम् । स्वयं च कृष्णया राजन् भगिन्या चाभिवादितः ॥४१॥
श्वश्र्वा संयोदिता कृष्णा कृष्णपत्नीः सुवर्चसः। आनर्च्य रुक्मिणीं सत्यां भद्रां जाम्बवतीं तथा ॥४२॥
कालिन्दीं मित्रविन्दां च शैब्यां नाग्नजितीं सतीम् । अन्याश्चाभ्यागता यास्ता वासःस्रङ्मण्डनादिभिः ॥
सुखं निवासयामास धर्मराजो जनार्दनम् । ससैन्यं सानुगामात्यं सभार्यं च नवं नवम् ॥ ४४ ॥
तर्पयित्वा खाण्डवेन वह्निं पाण्डवसंयुतः । मोचयित्वा मयं येन राज्ञो दिव्या सभाऽऽहृता ॥४५॥
उवास कतिचिन्मासान् राज्ञः प्रियचिकीर्षया । विहरन् रथमारुह्य फाल्गुनेन भटैर्वृतः ॥ ४६ ॥

इति एकोनाशीतितमोऽध्यायः ॥

---

## ॥ अथ अशीतितमोऽध्यायः ॥

### श्रीशुक उवाच

एकदा तु सभामध्ये आस्थितो मुनिभिर्वृतः । ब्राह्मणैः क्षत्रियैर्वैश्यैर्भ्रातृभिश्च समन्वितः ॥ १ ॥

---

उडुपसहा उडुपेन चन्द्रेण सहितास्ताराः । अमूभिः किं शुभमकारि ॥ ३६ ॥ श्रेणीमुख्या नगरप्रधानाः ॥३७,३८॥ भ्रात्रेयं भ्रातुः पुत्रम् ॥३९,४०॥ भगिन्या सुभद्रया च ॥४१॥ श्वश्र्वा पृथया ॥ ४२-४५ ॥ येन मयेन दिव्या सभा राज्ञ आहृता भगवदाज्ञया निर्माय दत्ता ॥ ४६ ॥

॥ इति श्रीमद्भागवतटीकायां विजयध्वजतीर्थकृतायां पदरत्नावल्यां दशमस्कन्धे उत्तरार्धे एकोनाशीतितमोऽध्यायः ॥

---

१. उत्थानमात्रे स्नुषासाहित्यं नालिङ्गन इत्यपि वदन्ति । पुत्रीसमतया साप्यालिलिङ्गेति परे -स.
२. देवदेवेशमादृतः -ग.

आचार्यैः कुलवृद्धैश्च ज्ञातिसम्बन्धिबान्धवैः । सर्वेषामेव चैतेषामाभाष्येदमुवाच ह ॥ २ ॥

युधिष्ठिर उवाच

क्रतुराजेन गोविन्द राजसूयने पावनीः । यक्ष्ये विभूतीर्भवतस्तत् सम्पादय नः प्रभो ॥ ३ ॥

त्वत्पादुके अविरतं परि ये चरन्ति ध्यायन्त्यभद्रनशने सुधियो गृणन्ति ।
विन्दन्ति ये कमलनाभ भवापवर्गमाशासते यदि त आशिष ईश नान्ये ॥ ४ ॥
तद् देवदेव भवतश्चरणारविन्दसेवानुभावमिह पश्यतु लोक एषः ।
ये त्वां भजन्ति न भजन्त्यपि वोभयेषां निष्ठां प्रदर्शय प्रभो कुरुसृञ्जयानाम् ॥ ५ ॥

---

राजसूययज्ञार्थाय पाण्डवानां दिशां जयो जरासन्धवधश्च श्रीनारायणप्रसादायत्त इति तन्माहात्म्यत्वेन प्रतिपादयत्यस्मिन्नध्याये । तत्रादौ युधिष्ठिर आगतं कृष्णं स्वचिकीर्षितं विज्ञापयति– **एकदेति** ॥ १ ॥

आभाष्य अभिमुखीकृत्य । एतेषां सर्वेषां श्रोत्रादीन्द्रियतृप्तिजनकमिदं वक्ष्यमाण-वचनमुवाच[1] । हेत्यनेन कर्तव्यतां सूचयति ॥ २ ॥ पावनीः शुद्धिकरीर्भवतो विभूतीः सन्निधानविशेषस्थानेन्द्रादिदेवता यष्टुकामः ॥ ३ ॥

तत्कार्यं भवदनुग्रहेण (अन्तथा) एतद् दुःसाधनमित्याह– **त्वत्पादुके इति** । अभद्रनशने अशुभविध्वंसनसमर्थे । परिचरन्ति नित्यं पूजयन्ति । 'व्यवहिताश्च' इति च्छन्दसि व्यवधानेप्युपसर्गाणां क्रियायोगः सिद्धः 'प्र घान्वस्य महतो महानि' इत्यादौ । अनेन भागवतस्य वेदतुल्यत्वेनाध्येयत्वादौ तात्पर्यं दर्शयति । भवापवर्गं संसारत्यागं विन्दन्ति । ननु तर्हि नानेना-भीष्टसिद्धिरिति तत्राह– **आशासत इति** । यदि ते सेवका आशासते ऐहिकसिद्धीः कामयन्ते तर्हि ता आपि विन्दन्ति । अन्ये अनुपासका नोभयं विन्दन्तीति भयं विन्दन्तीति शेषः ॥ ४ ॥

यतो भवच्चरणसेवाफलमनुभवसिद्धमतो लौकोपि प्रत्यक्षप्रमाणोऽस्य माहात्म्यं दृग्विषयं करोत्वित्याह– **तदिति** । अपि कृष्ण त्वमपि भजदभजतामुभयेषामपि जयलक्षणोत्कर्षं व्यवस्थापयेत्याह– **ये त्वामिति** । 'निष्ठोत्कर्षे व्यवस्थायां नाशेऽन्ते व्रतयाञ्चयोः' इति यादवः । 'अनुभावः प्रभावे स्यात्' इति[2] ॥ ५ ॥

---

१. सर्वेषामेव चैतेषां शृण्वतां सतामाभाष्याभिमुखीकृत्य कृष्णमिदमुवाच -स.

२. ये त्वां भजन्ति ये न भजन्तीत्युभयेषां निष्ठां स्थितिं कुरुसृञ्जयानां प्रदर्शय । भजका उत्कर्ष-भाजोऽभजका अपकर्षभाज इति व्यवस्थां प्रदर्शय । सर्वं सम्भावितमिति द्योतयितुं विभविति -स.

**न ब्रह्मणः स्वपरभेदमतिस्तव स्यात् सर्वात्मनः समदृशः स्वसुखानुभूतेः ।
संसेवया सुरतरोरिव ते प्रसादः सेवानुरूप उदयो न विपर्ययोऽत्र ॥ ६ ॥**

**श्रीभगवानुवाच**

**सम्यग् व्यवसितं राजन् भवता शत्रुकर्शन । कल्याणी येन ते कीर्तिर्लोकाननुभविष्यति ॥ ७ ॥
ऋषीणां पितृदेवानां सुहृदामपि नः प्रभो । सर्वेषामेव भूतानामीप्सितः क्रतुराडयम् ॥ ८ ॥
विजित्य नृपतीन् सर्वान् कृत्वा च जगतीं वशे । सम्भृत्य सर्वसम्भारानाहरस्व क्रतूत्तमम् ॥ ९ ॥
एते तु भ्रातरो राजन् लोकपालांशसम्भवाः । वशेऽस्मि तव ताताहं दुर्जयोऽकृतात्मभिः ॥ १० ॥
न कश्चित् मत्परं लोके तेजसा यशसा श्रिया । विभूतिभिर्नाभिभवेद् देवोऽपि किमु पार्थिवाः॥११॥**

**श्रीशुक उवाच**

**निशम्य भगवद्गीतं प्रीत्युत्फुल्लमुखाम्बुजः । भ्रातॄन् दिग्विजयेऽयुङ्क्त विष्णुतेजोपबृंहितान् ॥ १२ ॥
सहदेवं दक्षिणस्यामादिशत् सह सृञ्जयैः । दिशि प्रतीच्यां नकुलमुदीच्यां सव्यसाचिनम् ॥ १३ ॥**

---

सर्वसमस्य हरेर्वैषम्यं मयाऽऽपाद्यत इति बिभ्यदिव परिहरति– **नेति** । ब्रह्मणः पूर्णस्य । सर्वात्मनः सर्वस्वामिनः । ननु 'परा पूर्वेषां सख्या वृणक्ति' इत्यादि कथमित्यत्राह– **समदृश इति** । यथावस्तुदर्शितः । स्वरूपसुखस्यानुभूतिरनुभवः पूर्णानन्दोऽहमिति यस्य स तथा तस्य । अयमपि स्वपरबुध्यभावे हेतुः । नन्वसुराणां दुःखोदयः सुराणां सुखोदय इत्ययं विशेषः कस्मात्? अत्राह– **संसेवयेति** । उदयतीत्युदयः । अतोऽत्र जगति विपर्ययो न विषमो नोदेति ॥ ६ ॥

येन व्यवसितेन क्रतुराजेन । अनुभविष्यति स त्वयाऽनुवर्त्यते[1] ॥ ७ ॥ न केवलं तवाभीष्टोऽयमृष्यादीनां सर्वेषां हृदयङ्गम इत्याह– **ऋषीणामिति** ॥ ८ ॥ तत्रेत्थम्भावमाह– **विजित्येति** । सर्वसम्भारान् सम्भृत्य सम्पाद्य । आहरस्व कुरुष्व ॥ ९ ॥

साम्प्रतं सर्वजयो दुःशको नेति भावेनाह– **एत इति** । लोकपालांशैः सम्भवो येषां ते तथा । योऽहमकृतात्मभिरनुत्पादितमत्प्रसादैः ॥ १० ॥

भवतो दुर्जयत्वेन किमस्काकमिति तत्राह– **नेति** । मत्परं मद्भक्तम् । विभूतिभिरुपस्करसम्पद्भिः ॥ ११ ॥ विष्णोस्तेजसा प्रभावेणोपबृंहितान् परिपूरितान् ॥ १२ ॥

---

१. तव कल्याणी कीर्तिर्लोकान् सर्वाननुभविष्यति ज्ञास्यति, व्याप्ता भविष्यतीति यावत् -स.

ते विजित्य नृपान् वीरानाजह्रुर्दिव्यमञ्जसा । अजातशत्रवे भूरि द्रविणं नृप यक्ष्यते ॥ १४ ॥
श्रुत्वाऽजितं जरासन्धं नृपतेर्ध्यायतो हरिः । आहोपायं तमेवाद्य उद्धवो यमुवाच ह ॥ १५ ॥
भीमसेनोऽर्जुनः कृष्णो ब्रह्मलिङ्गधरास्ततः । जग्मुर्गिरिव्रजं तात बृहद्रथसुतो यतः ॥ १६ ॥
तं गत्वाऽऽतिथ्यवेलायां गृहेषु गृहमेधिनाम् । ब्रह्मण्यं समयाचन्त राजन्या ब्रह्मलिङ्गिनः ॥ १७ ॥
राजन् विद्ध्यतिथीनस्मानर्थिनो गृहमागतान् । तन्नः प्रयच्छ भद्रं ते यद् वयं कामयामहे ॥ १८ ॥
किं दुर्मर्षं तितिक्षूणां किमकार्यमसाधुभिः । किं न देयं वदान्यानां कः परः समदर्शिनाम् ॥१९॥
योऽनित्येन शरीरेण सतां गेयं यशो ध्रुवम् । नाचिनोति स्वयंकल्पः स वाच्यः शोच्य एव सः ॥२०॥
हरिश्चन्द्रो रन्तिदेव उञ्छवृत्तिः शिबिर्बलिः । व्याधः कपोतो बहवो ह्यध्रुवेण ध्रुवं गताः ॥ २१ ॥

श्रीशुक उवाच

स्वरैराकृतिभिस्तांस्तु प्रकोष्ठैर्ज्याहतैरपि । राजन्यबन्धून् विज्ञाय दृष्टपूर्वानचिन्तयत् ॥ २२ ॥
राजन्यबन्धवो ह्येते ब्रह्मलिङ्गानि बिभ्रति । ददामि भिक्षितं तेभ्य आत्मानमपि दुस्त्यजम् ॥२३॥

---

यक्ष्यते यष्टुकामाय ॥ १४ ॥ अत्र दिग्विजये जरासन्धो जितो मारितोवेति तत्प्रसङ्गो नाकर्णित इति राज्ञो हार्दां शङ्कां परिहरन्निव दिग्विजयात् प्रागेव तद्वधो वृत्त इति नात्र प्रसक्त इति वृत्तं तद्धननमनुवदति– **श्रुत्वेति** । ननु दिशां जयादनन्तरं तद्वधः किं न स्यात्, यथास्थितमन्यथाऽनूद्यते किमर्थम्, इति चेन्न । निर्णयग्रन्थविरोधात् । ननु पूर्वापरभावे किं प्रमाणं किञ्च प्रयोजनमिति चेत् । उच्यते । 'पूर्वाः कथाः परं ब्रूयुः पराः पूर्वं तथैव च । मोहनार्थाय दुष्टानां सर्वव्यत्यास इष्यते' इत्यादि वाक्यम् । किञ्च 'जरासन्धं निहत्यैव पाण्डवैस्तु दिशो जिताः' इत्यादि स्पष्टवचनम्[1] । भगवत एव जरासन्धमजितं श्रुत्वा तज्जयः कथमिति ध्यायतो युधिष्ठिरस्य उद्धवो यमुपायमुवाच तमाह हरिरित्यन्वयः ॥ १५ ॥

हेतिसूचितमितिहासं स्पष्टयति– **भीमसेन इत्यादिना** । ब्राह्मणलिङ्गधरा ब्राह्मणलक्षणानि बिभ्राणाः । यतो यत्र ॥ १६ ॥

आतिथ्यवेलायामतिथिपूजासमये, आदित्ये दिनमध्यं गाहमान इत्यर्थः ॥१७,१८॥ दुर्मर्षं दुस्सहम् । परः शत्रुः । 'परोऽरिपरमात्मनोः' इति ॥ १९ ॥ आचिनोति सञ्चिनोति उपार्जितं करोति । वाच्यो निन्द्यः ॥ २० ॥ अध्रुवेण शरीरेण ॥ २१-२३ ॥

---

१. पूर्वापरीभावे पूर्वाःकथा इत्यादिवाक्याद् दुष्टमोहनं प्रयोजनं जरासन्धमित्यादि स्पष्टवचनं च प्रमाणमित्याशयः ।

बलेर्नु श्रूयते कीर्तिर्विंतता दिक्ष्वकल्मषा । ऐश्वर्याद् भ्रंशितस्यापि विप्रव्याजेन विष्णुना ।। २४ ।।
श्रियं जिहीर्षतेन्द्रस्य विष्णवे द्विजरूपिणे । जानन्नपि महीं प्रादाद् वार्यमाणोऽपि दैत्यराट् ।।२५।।
जीवता ब्राह्मणार्थाय कोन्वर्थः क्षत्रबन्धुना । देहेन पतमानेन नेहतां[1] विपुलं यशः ।। २६ ।।
इत्युदारमतिः प्राह कृष्णार्जुनवृकोदरान् । हे विप्रा व्रियतां कामो ददाम्यात्मशिरोऽपि वः ।।२७।।

श्रीकृष्ण उवाच

युद्धं नो देहि राजेन्द्र द्वन्द्वशो यदि मन्यसे । युद्धार्थिनो वयं प्राप्ता राजन्या नान्नकाङ्क्षिणः ।।२८।।
असौ वृकोदरः पार्थस्तस्य भ्राताऽर्जुनो ह्ययम् । अनयोर्मातुलेयं मां कृष्णं जानीहि ते रिपुम् ।।२९।।
एवमावेदितो राजा जहासोच्चैः स मागधः । आह चामर्षितो मन्दो युद्धं तर्हि ददामि वः ।। ३० ।।
न त्वया भीरुणा योत्स्ये युधि विक्लवचेतसा । मधुरां स्वपुरीं त्यक्त्वा समुद्रं शरणं गतः ।। ३१ ।।
अयं तु वयसाऽतुल्यो नातिसत्वो न मे समः । अर्जुनो न भवेद् योद्धा भीमस्तुल्यबलो मम ।।३२।।
इत्युक्त्वा भीमसेनाय दत्वा स महतीं गदाम् । द्वितीयां स्वयमादाय निर्जगाम पुराद् बहिः ।।३३।।
ततः समबलौ वीरौ संसक्ताावितरेतरौ । जघ्नतुर्वज्रकल्पाभ्यां गदाभ्यां रणदुर्मदौ ।। ३४ ।।
मण्डलानि विचित्राणि सव्यं दक्षिणमेव च । चरतोः शुशुभे युद्धं नटयोरिव रङ्गिणोः ।। ३५ ।।
ततश्चटचटाशब्दो वज्रनिष्पेषसन्निभः । गदयोः क्षिप्तयो राजन् दन्तयोरिव दन्तिनोः ।। ३६ ।।

ते वै गदे भुजजवेन निपात्यमाने अन्योन्ययोः सकटिपादकरोरुजत्रून् ।
चूर्णीबभूवतुरुपेत्य यथार्कशाखे संयुध्यतोर्द्विरदयोरिव दीप्तसन्ध्योः ।। ३७ ।।

---

श्रूयते किं श्रूयत एव हीति योज्यम् । इन्द्रस्य श्रियं बलाज्जिहीर्षता हर्तुकामेन विष्णुना ऐश्वर्याद् भ्रंशितस्य ।। २४ ।। वार्यमाणः, शुक्रेणेति शेषः ।। २५ ।।

यः क्षत्रबन्धुः पतमानेन देहेन विपुलं यशो नेहतां नेहते नापादयति तेन ब्राह्मणार्थाय जीवता क्षत्रबन्धुना कोन्वर्थो भवति न कोऽपीति विचिन्त्य ।। २६,२७ ।।

द्वन्द्वशो युद्धं द्वन्द्वयुद्धम् ।। २८ ।। वीप्सां त्रीन् प्रति स्पष्टयन्निर्दिशति **असाविति** ।। २९-३१ ।। अतुल्यः । नातिसत्वः न प्रशस्तपराक्रमः ।।३२-३४।। रङ्गिणो रङ्गगतयोर्मण्डलं वल्गतोर्वा ।। ३५,३६ ।।

अन्योन्ययोः परस्परसङ्गतयोः सकटिपादकरोरुजत्रून् प्रति निपात्यमाने । अर्कस्य गुल्मस्य शाखे । दीप्तसन्ध्योः प्रकाशितसन्धिस्थानयोः ।। ३७ ।।

---

१. नेहता -स.पाठः । पिपुलं यशो नेहता अनीहमानेनार्थः कोनु सम्पादितः स्यात् । न कोऽपि -स.

इत्थं तयोः प्रहतयोर्गदयोर्नृवीरौ क्रुद्धौ स्वमुष्टिभिरयःस्पर्शैर्व्यपिष्टाम् ।
शब्दस्तयोः प्रहरतोर्घनयोरिवासीन्निर्घातवज्रपरुषस्तलताडनोत्थः ॥ ३८ ॥
तयोरेवं प्रहरतोः समशिक्षाबलौजसोः । निर्विशेषमभूद् युद्धमक्षीणजवयोर्नृप ॥ ३९ ॥
शत्रोर्जन्ममृती विद्वान् जीवितं च जराकृतम् । पार्थमाप्याययन् स्वेन तेजसाऽचिन्तयद् हरिः ।४०।
सञ्चित्यारिवधोपायं भीमस्यामोघदर्शनः । दर्शयामास विटपं पाटयन्निव सञ्ज्ञया ॥ ४१ ॥
तद् विज्ञाय महासत्वो भीमः प्रहरतां वरः । गृहीत्वा पादयोः शत्रुं पातयामास भूतले ॥ ४२ ॥
एकं पादं पदाऽऽक्रम्य दोर्भ्यामन्यं प्रगृह्य सः । गुदतः पाटयामास शाखामिव मतङ्गजः ॥ ४३ ॥
एकपादोरुवृषणकटिपृष्ठस्तनांसके । एकबाह्वक्षिभ्रूकर्णे शकले ददृशुः प्रजाः ॥ ४४ ॥
हाहाकारो महानासीन्निहते मागधेश्वरे । पूजयामासतुर्भीमं परिरभ्य जयाच्युतौ ॥ ४५ ॥
सहदेवं तत्तनयं भगवान् भूतभावनः । अभ्यषिञ्चदमेयात्मा मागधानां पतिं प्रभुः ॥
मोचयामास राजन्यान् संरुद्धा मागधेन ये ॥ ४६ ॥

॥ इति अशीतितमोऽध्यायः ॥

---

## ॥ अथ एकाशीतितमोऽध्यायः ॥

### श्रीशुक उवाच

अयुते द्वे शतान्यष्टौ लीलया युधि निर्जिताः । विनिर्गता गिरिद्रोण्यां[1] मलिनो मलवाससः ॥१॥

---

अयःस्पर्शैः स्वमुष्टिभिर्व्यपिष्टां विपेषतुर्जघ्नतुरित्यर्थः । प्रहतयोः सतोः । निर्घातवज्रवन्निष्ठुरः ॥३८,३९॥ जरया राक्षस्या कृतशरीरशकलसन्धानात् जन्म तद्विघटनान्मरणं च जानन् ॥ ४०,४१ ॥ भीमस्यारिवधोपायं सञ्ज्ञया दर्शयामास । का सञ्ज्ञेत्याह– **विटपमिति** ॥ ४२-४६ ॥

॥ इति श्रीमद्भागवतटीकायां विजयध्वजतीर्थकृतायां पदरत्नावल्यां दशमस्कन्धे उत्तरार्धे अशीतितमोऽध्यायः ॥

---

जरासन्धरोधादिलक्षणतपसा प्रसन्नो भगवान् यज्ज्ञानसाध्यं स्वरूपं दर्शितवान् तद् उपासकानां भक्त्यतिशयजननार्थं कृतमिति कृत्वा तन्माहात्म्यं कथयत्यस्मिन्नध्याये । तत्रादौ तत्सङ्ख्यां निर्दिशति– **अयुतेति** । गिरिद्रोण्यां निरुद्धास्ततो विनिर्गताः ॥ १-४ ॥

---

१. विनिर्गता गिरिद्रोण्याः -स.पाठः

**क्षुत्क्षामाः शुष्कवदनाः संरोधपरिकर्शिताः । ददृशुस्ते घनश्यामं पीतकौशेयवाससम् ॥ २ ॥**
**श्रीवत्साङ्कं चतुर्बाहुं पद्मपत्रनिभेक्षणम् । चारुप्रसन्नवदनं स्फुरन्मकरकुण्डलम् ॥ ३ ॥**
**पद्महस्तं गदाशङ्खरथाङ्गैरुपलक्षितम् । किरीटहारकटककटिसूत्राङ्गदान्वितम् ॥ ४ ॥**
**भ्राजद्वरमणिग्रीवं निवीतं वनमालया । पिबन्त इव चक्षुर्भ्यां लिहन्त इव जिह्वया ॥ ५ ॥**
**जिघ्रन्त इव नासाभ्यामीहन्त इव चेतसा । प्रणेमुर्हतपाप्मानो मूर्धभिः पादयोर्हरेः ॥ ६ ॥**
**कृष्णसन्दर्शनाह्लादध्वस्तसंरोधनक्लमाः । प्रशशंसुर्हृषीकेशं गीर्भिः प्राञ्जलयो नृपाः ॥ ७ ॥**

**राजान ऊचुः**

**नमस्ते देवदेवेश प्रपन्नार्तिहराव्यय । प्रपन्नान् पाहि नः कृष्ण निर्विण्णान् घोरसंसृतेः ॥ ८ ॥**
**नैव नाथाभ्यसूयामो मागधं मधुसूदन । अनुग्रहो यद् भवतो राज्ञां राज्यच्युतिर्विभो ॥ ९ ॥**
**राज्यैश्वर्यमदोन्नध्दा न श्रेयो विन्दते नृपाः । त्वन्मायामोहिता नित्या मन्यन्ते सम्पदश्चलाः॥१०॥**
**मृगतृष्णां यथा बाला मन्यन्ते उदकाशयम् । एवं वैकारिकीं मायामयुक्ता वस्तु चक्षते ॥ ११ ॥**

**वयं पुरा श्रीमदनष्टबुद्धयो जिहीर्षयाऽस्या इतरेतरस्पृधः ।**
**घ्नन्तः प्रजाः स्वा अपि निर्घृणाः प्रभो मृत्युं पुरस्त्वामगणय्य[1] दुर्मदाः ॥ १२ ॥**
**त एव कृष्णाद्य गभीररंहसा दुरन्तवीर्येण विचालिताः श्रियः ।**
**कालेन तद् वै भवतोऽनुकम्पया विनष्टदर्पाश्चरणौ स्मरामहे ॥ १३ ॥**

---

निवीतं पर्यासितम् ॥ ५ ॥ चेतसा आलिङ्गनार्थमीहन्तश्चेष्टमाना इव ॥ ६-९ ॥

राज्यच्युतिः कथमनुग्रहोऽभूत्? अत्राह– **राज्येति** । कुतो न विन्दत इति तत्राह– **त्वन्मायामोहिता इति** । चलाः क्षणिकाः सम्पदो नित्याः शश्वद्रूपा मन्यन्ते यत् तस्मात् ॥ १० ॥

एतमर्थं निदर्शयति– **मृगतृष्णामिति** । मृगतृष्णामम्बरप्रदेशसंसृष्टदिवाकरकरनिकरं दृष्ट्वा । उदकाशयं जलाधारं जलपूरितमित्यर्थः । एवमयुक्ता मनोयोगाकुशला अज्ञा वैकारिकीं विकारोपेतामनित्यां मायाम्, 'गोअश्वं महिमेत्याचक्षते' इति श्रुतेर्महिमानं सम्पल्लक्षणं वस्तु प्रतिहतिरहितं नित्यं चक्षते पश्यन्ति ॥ ११ ॥

अस्या जगत्याः[2] । ये वयं पुरःस्थितं मृत्युं त्वामगणय्य स्थिताः ॥ १२ ॥ ते च वयं कालेन श्रियो विचालिता अभूम । तत् तस्माद् भवतोऽनुकम्पया चरणौ स्मरामहे ॥ १३ ॥

---

१. मृत्युं परं त्वामगणय्य -स.पाठः । त्वां विगणय्येति पाठः सरलः -स.

२. अस्याः श्रियो भुवो वा ।

अथो न राज्यं मृगतृष्णरूपितं देहेन शश्वत् पतता रजोभुवा ।
उपासितव्यं स्पृहयामहे विभो क्रियाफलं प्रेत्य च कर्णरोचनम् ।। १४ ।।

तन्नः समादिशोपायं येन ते चरणाब्जयोः । स्मृतिर्यथा न विरमेदपि संसरतामिह ।। १५ ।।
कृष्णाय वासुदेवाय हरये परमात्मने । प्रणतक्लेशनाशाय गोविन्दाय नमो नमः ।। १६ ।।

श्रीशुक उवाच

संस्तूयमानो भगवान् राजभिर्मुक्तबन्धनैः । तानाह करुणस्तात शरण्यः श्लक्ष्णया गिरा ।। १७ ।।

श्रीभगवानुवाच

अद्य प्रभृति भूपाला मय्यात्मन्यखिलेश्वरे । सुदृढा जायते भक्तिर्बाढमाशंसितं तथा ।। १८ ।।
दिष्ट्या व्यवसितं भूपा भवन्त ऋतभाषिणः । श्रियैश्वर्यमदोन्नाहं पश्यतोन्मादनं नृणाम्[1] ।।१९।।
हैहयो नहुषो वेनो रावणो नरकोऽपरे । श्रीमदाद् ध्वंसिताः स्थानाद् देवदैत्यनरेश्वराः ।। २० ।।
सञ्चिन्तयत विज्ञाय देहाद्युत्पाद्यमन्तवत् । मां यजन्तोऽध्वरैर्यत्ताः प्रजा धर्मेण रक्षत ।। २१ ।।
सन्तन्वन्तः प्रजातन्तून् सुखदुःखे भवाभवौ । प्राप्तंप्राप्तं च सेवन्तो मच्चित्ता विचरिष्यथ ।। २२ ।।
उदासीनाश्च देहादावात्मारामा धृतव्रताः । मय्यावेश्य मनः सम्यङ् मामन्ते ब्रह्म यास्यथ ।।२३।।

---

रजोभुवा रजोगुणोत्पन्नेन शश्वत् पतता देहेन राज्यं नोपासितव्यमिति स्पृहयामहे । प्रेत्य यत् क्रियाफलं स्वर्गादि तदपि न कामयामहे । कीदृशम्? कर्णरोचनम् । श्रवणसुखजनक-मापातरमणीयमित्यर्थः ।। १४ ।।

येनोपायेन ।। १५ ।। बाढमभिमतमाशंसितमाकाङ्क्षितं च जायते । 'बाढं त्वभिमते भृशे' इति च ।। १८ ।।

भवतां व्यवसितं दिष्ट्या मङ्गलम् । तत्र हेतुः– **भवन्त इति** । ऋतभाषिणो ब्रह्मवादिनो यथार्थवादिनो वा । अनुभावयति– **श्रियेति** । यूयं श्रियैश्वर्यमदानामुन्नाहमभिवृद्धिमुन्मादनं बुद्धिभ्रंशकरं पश्यत ।। १९ ।।

कान् पश्याम इति तत्राह– **हैहयेति** । ध्वंसिता भ्रंशिताः ।। २० ।। शिक्षयति– **सञ्चिन्तयतेति** । उत्पाद्यमुत्पत्तियोग्यमन्तवन्नाशवत् ।। २१ ।। भवाभवौ मङ्गलामङ्गले ।। २२ ।। आत्मारामत्वं विवृणोति– **मयीति** ।। २३-२५ ।।

---

१. पश्य उन्मादनं नृणाम् -स.पाठः । तैरेव स्वविदितत्वेनोक्तस्य पुनरुपदेशासम्भवादहमप्येवं पश्यामीत्यस्य सुलग्नत्वात् -स.

इत्यादिश्य नृपान् कृष्णो भगवान् भुवनेश्वरः । तेषां न्ययुङ्क्त पुरुषान् स्त्रियो मज्जनकर्मणि ॥२४॥
सपर्यां कारयामास सहदेवेन भारत । नरदेवोचितैर्वस्त्रैर्भूषणैः स्रग्विलेपनैः ॥ २५ ॥
भोजयित्वा वरान्नेन सुस्नातान् समलङ्कृतान् । भोगैश्च विविधैर्युक्तान् ताम्बूलाद्यैर्नृपोचितैः ॥२६॥
ते पूजिता मुकुन्देन राजानो मृष्टकुण्डलाः । विरेजुर्मोचिताः क्लेशात् प्रावृडन्ते यथा ग्रहाः ॥२७॥
रथान् सदश्वानारोप्य मणिकाञ्चनभूषितान् । प्रीणय्य सूनृतैर्वाक्यैः स्वदेशान् प्रत्ययापयत् ॥२८॥
त एवं मोचिताः कृच्छ्रात् कृष्णेन सुमहात्मना । ययुस्तमेव ध्यायन्तः कृतानि च जगत्पतेः ॥२९॥
जगदुः प्रकृतिभ्यस्ते महापुरुषचेष्टितम् । यथाऽन्वशासद् भगवान् तथा चक्रुरतन्द्रिताः ॥ ३० ॥
जरासन्धं घातयित्वा भीमसेनेन केशवः । पार्थाभ्यां संयुतः प्रायात् सहदेवेन पूजितः ॥ ३१ ॥
ते गत्वा खाण्डवप्रस्थं शङ्खान् दध्मुर्जितारयः । हर्षयन्तः स्वसुहृदो दुर्हृदां चासुखावहाः ॥ ३२ ॥
तच्छ्रुत्वा प्रीतमनस इन्द्रप्रस्थानिवासिनः । मेनिरे मागधं शान्तं राजा चाप्तमनोरथः ॥ ३३ ॥
अभिवाद्याथ राजानं भीमार्जुनजनार्दनाः । सर्वमाश्रावयाञ्चक्रु रात्मना यदनुष्ठितम् ॥ ३४ ॥
निशम्य धर्मराजस्तु केशवेनानुकम्पितः । आनन्दाश्रुकणान् मुञ्चन् प्रेम्णा नोवाच किञ्चन ॥३५॥

॥ इति एकाशीतितमोऽध्यायः ॥

---

## ॥ अथ व्यशीतितमोऽध्यायः ॥

### श्रीशुक उवाच

**एवं युधिष्ठिरो राजा जरासन्धवधान् प्रभो । कृष्णस्य चानुभावं तं श्रुत्वा प्रतिस्तमब्रवीत् ॥ १ ॥**

---

भोगैः स्रक्चन्दनादिलक्षणैः, धनैर्वा ॥ २६ ॥ ग्रहा आदित्यादयः ॥ २७ ॥ प्रीणय्य प्रीतिं जनयित्वा ॥ २८ ॥ कृतानि कार्याणि ॥२९॥ प्रकृतिभ्यो विश्वस्तभृत्येभ्यः ॥३०,३१॥

खाण्डवप्रस्थमिन्द्रप्रस्थम् । दुर्हृदां शत्रूणाम् ॥ ३२ ॥ शान्तं मृतम् । प्राप्तमनोरथः, अभूदिति शेषः ॥ ३३-३५ ॥

॥ इति श्रीमद्भागवतटीकायां विजयध्वजतीर्थकृतायां पदरत्नावल्यां दशमस्कन्धे उत्तरार्धे एकाशीतिमोऽध्यायः ॥

---

श्रोतृमनोहरं क्षमाजनकं वीरवीर्यवर्धनं हरेः समवृत्तिनिदर्शनं शिशुपालवधं निगदत्यस्मिन्नध्याये । तत्रादौ युधिष्ठिरो भगवन्तं स्तुत्वा तदनुज्ञया राजसूयप्रारम्भणं वक्ति[१] **एवमित्यादिना** ॥ १ ॥ यस्य तव । त्रिलोकगुरवो ब्रह्मादयः ॥ २ ॥

---

१. राजसूयं प्रारभतेति वक्तीति सरलम् ।

युधिष्ठिर उवाच

**यस्य त्रिलोकगुरवः सर्वलोकमहेश्वराः । वहन्ति दुर्लभं लब्ध्वा शिरसैवानुशासनम् ॥ २ ॥**
**स भवानरविन्दाक्ष दीनानामीशमानिनाम् । धत्तेऽनुशासनं भूमन् तदत्यन्तविडम्बनम् ॥ ३ ॥**
**न ह्येकस्याद्वितीयस्य ब्रह्मणः परमात्मनः । कर्मभिर्वर्धते तेजो ह्रसते च यथा रवेः ॥ ४ ॥**
**न च तेऽजित भक्तानां ममाहमिति माधव । त्वं तवेति च नानाधीः पशूनामिव वैकृता ॥ ५ ॥**
**इत्युक्त्वा याज्ञिये काले वव्रे युक्तान् स ऋत्विजः। कृष्णानुमोदितः पार्थो ब्राह्मणान् ब्रह्मवादिनः॥**
**द्वैपायनो भरद्वाजः सुमन्तुर्गौतमोऽसितः । वसिष्ठश्च्यवनः कण्वो मैत्रेयः कवषस्त्रितः ॥ ७ ॥**
**विश्वामित्रो वामदेवः सुमतिर्जैमिनिः क्रतुः । पैलः पराशरो गर्गो वैशम्पायन एव च ॥ ८ ॥**
**अथर्वा कश्यपो धौम्यो रामो भार्गव आसुरिः । वीतिहोत्रो मधुच्छन्दा वीरसेनोऽकृतव्रणः ॥९॥**
**उपाहूतास्तथा चान्ये द्रोणभीष्मकृपादयः । धृतराष्ट्रः सहसुतो विदुरश्च महामतिः ॥ १० ॥**

---

ईशमानिनाम् ईश्वरोऽहमहं भोगीत्याद्यभिमानवताम् । दीनानाम् आत्मतत्वज्ञानाभावात् कोष्ठष्टगत्या(?) कृपणानाम् । अनुशासनं दुर्मार्गप्रवृत्तिपरित्यागेन सन्मार्गप्रवर्तनम्[१] ॥ ३ ॥

प्रेक्षावत इव हरेरनुशासनादिप्रवृत्तिः स्वप्रयोजनोद्देशपूर्विकेत्यकृतार्थत्वप्रसङ्ग इति तत्राह– **न हीति** । तेजः प्रभावलक्षणा प्रभा । कर्मभिः शुभाशुभलक्षणैः । 'न कर्मणा वर्धते नो कनीयान्' इति श्रुतेः । एकस्यापि समाधिकसद्भावे तौ किं न स्यातामिति तत्राह– **अद्वितीयस्येति** । अस्यापि परिच्छिन्नत्वे कथमिति मन्दाशङ्कां परिहरति– **ब्रह्मण इति** । बहिस्तथाऽस्तु, अन्तः परिच्छिन्न इति तत्राह– **परमात्मन इति** । आत्मनो जीवात् परत्वेन पूर्णत्वेन मीयमानस्य परमात्मनः इत्यर्थः । रवेः प्रभामन्दोष्णत्वादिविशेषः कालोपाधिको न स्वाभाविक इति भवत्येवं निदर्शनम् । हरेस्तूक्तविशेषणसामर्थ्यात् सोऽपि नेत्यवगमयितव्यम् ॥४॥

हरेरद्वितीयत्वं किं पुनर्न्यायेनाह– **न चेति** । हे अजित माधव लक्ष्मीपते ते तव भक्तानां पुत्रादौ ममेति देहादावहमिति देहान्तरे त्वमिति तदीयक्षेत्रादौ तवेति नानाधीर्नास्ति । च शब्दः सर्वत्रेश्वरसत्तां पश्यतामित्यस्मिन्नर्थे वर्तते । कीदृशी नानाधीः? यथा पशूनां संस्काररहितानां बुद्धिर्वैकृता विविधप्रकारा । स्वार्थे तद्धितः ॥ ५ ॥ याज्ञिये यज्ञकरणयोग्ये । युक्तान् कल्पोक्तन्यायवेदिनः ॥६-९॥ उपाहूता मुनयो तथाऽन्ये अनुपाहूता अपि तत्राजग्मुः । तत्र द्रोणादयोऽप्युपाहूताः ॥ १०,११ ॥

---

२. हे भूमन् । स भवांश्चतुराननशासनकर्तापि ईशमानिनां वस्तुतस्त्वनीशानां दीनानामस्माकमनुशासनं कृष्णैवं कुर्वित्यादिकं धत्ते विधत्ते । तदत्यन्तविडम्बनम् -स.

**ब्राह्मणाः क्षत्रिया वैश्याः शूद्रा यज्ञदिदृक्षवः । तत्रेयुः सर्वराजानो राज्ञां प्रकृतयो नृप ॥ ११ ॥**
**ततस्तद् देवयजनं ब्राह्मणाः स्वर्णलाङ्गलैः । कृष्ट्वा तत्र यथान्यायं दीक्षायाञ्चक्रिरे नृपम् ॥ १२ ॥**
**हैमः किलोपकरणो वरुणस्य यथा पुरा । इन्द्रादयो लोकपाला विरिञ्चिभवसंयुताः ॥ १३ ॥**
**सगणाः सिद्धगन्धर्वविद्याधरमहोरगाः । मुनयो यक्षरक्षांसि खगाः किन्नरचारणाः ॥ १४ ॥**
**राजानश्च समाहूता राजपत्न्यश्च सर्वशः । राजसूयं समीयुः स्म राज्ञः पाण्डुसुतस्य वै ॥ १५ ॥**
**मेनिरे कृष्णभक्तस्य सूपपन्नमविस्मिताः । अयाजयन् महाराज याजका देववर्चसः ॥ १६ ॥**
**राजसूयेन विधिवत् प्रचेतसमिवापराः । सूत्येऽहन्यवनीपालान् याजकान् सदसस्पतीन् ॥ १७ ॥**
**अपूजयन् महाभागान् यथावत् सुसमाहिताः । सदस्यग्राहर्णार्हं वै विमृशन्तः सभासदः ॥ १८ ॥**
**नाध्यगच्छन्ननैकान्त्यात् सहदेवस्तदब्रवीत् । अर्हति ह्यच्युतः श्रैष्ठ्यं भगवान् सात्वतां पतिः॥१९॥**
**एष वै देवताः सर्वा देशकालधनादयः । यदात्मकमिदं विश्वं क्रतवश्च यदात्मकाः ॥ २० ॥**

---

यत्र यज्ञकरणमभीष्टतमं तद् देवयजनं स्वर्णलाङ्गलैः सुवर्णमयहलैः कृष्ट्वोल्लिख्य संशोध्य शालां कृत्वा तत्र यथान्यायं नृपं दीक्षयाञ्चक्रुरित्यन्वयः ॥ १२ ॥

वरुणस्य यज्ञे । वरुणमनूक्तं[1] समाहृत्य तात्पर्यात् पुनरुक्तं करोति–**इन्द्रादय इति** ॥१३-१६॥

प्रेचेतसं वरुणम् । सूत्ये सोमाभिषवसम्बन्धिन्यहनि, पशुसंज्ञपनदिवसे वा ॥ १७ ॥ अग्राहर्णार्हम् अग्रपूजास्वीकारयोग्यं विमृशन्तो विचारयन्तः ॥ १८ ॥

अनैकान्त्यान्नानाबुद्धित्वात्, सर्वेषां गुणानामेकत्वानियमाद्वा । अच्युतः गुणतः स्वरूपतो वा नक्षीणः । श्रैष्ठ्यं गुणज्येष्ठयोग्याग्रपूजनम् । 'गुणाः श्रुताः सुविरुद्धाश्च देवे सन्ति' इत्यादिश्रुतिवाक्यं हिना सूचयति । सात्वतास्तन्त्रप्रणेतारः, एतेषां पतिः स्वामी गतिश्च । इदं चाग्रपूजायोग्यत्वे लिङ्गम् ॥ १९ ॥

'इन्दो वै सर्वेषां श्रेष्ठः' 'अग्निर्वै देवानां मुखम्' इत्यादेरिन्द्रादिषु सत्स्वस्य कथं सम्भवो भवतीति तत्राह– **एष वा इति** । यो देवानामिति श्रुतिं वा इत्यनेन गृह्णाति । अचेतनमपि तदधीनसत्ताकमित्याह– **देशेति** । किं बहुना? सर्वमपि तद्व्याप्तमित्याह– **यदात्मकमिति** । तात्पर्यात् पुनरुक्तं करोति– **क्रतव इति** ॥ २० ॥

---

१. वरुणं अनूक्तम् - ग.

अग्निराहुतयो मन्त्राः साङ्ख्यं योगश्च यत्परः । एक एवाद्वितीयोऽसावैतदात्म्यमिदं जगत् ॥२१॥
आत्मनाऽऽत्माश्रयः सभ्यः सृजत्यवति हन्त्यजः । विविधानीह कर्माणि जनयन् ह्यनपेक्षया ॥
ईहते यदयं सर्वं श्रेयो धर्मादिलक्षणम् । तस्मात् कृष्णाय महते दीयतां परमार्हणम् ॥ २३ ॥
एवं चेत् सर्वभूतानामात्मनश्चार्हणं भवेत् । सर्वभूतात्मभूताय कृष्णायानन्यदर्शिने ॥ २४ ॥
देयं शान्ताय पूर्णाय दत्तस्यानन्त्यमिच्छता ॥ २५ ॥

श्रीशुक उवाच

इत्युक्त्वा सहदेवोऽभूत् तूष्णीं कृष्णानुभाववित् । तत् श्रुत्वा तुष्टुवुः सर्वे साधुसाध्विति सत्तमाः॥
श्रुत्वाऽनुजेरितं राजा ज्ञात्वा हार्दं सभासदाम् । समर्हयद् हृषीकेशं प्रीतः प्रणयविह्वलः ॥ २७ ॥
तत्पादाववनिज्यापः शिरसा लोकपावनीः । सभार्यः सानुजामात्यः सकुटुम्बोऽवहन्मुदा ॥२८॥
वासोभिः पीतकौशेयैर्भूषणैश्च महाधनैः । अर्हयित्वाऽश्रुपूर्णाक्षो नाशकत् समवेक्षितुम् ॥ २९ ॥
इत्थं सभाजितं वीक्ष्य सर्वे प्राञ्जलयो जनाः । नमो जयेति नेमुस्तं खात् पेतुः पुष्पवृष्टयः ॥ ३० ॥

इत्थं निशम्य दमघोषसुतः स्वपीठादुत्थाय कृष्णगुणवर्णनजातमन्युः ।
उत्क्षिप्य बाहुमिदमाह सदस्यमर्षात् संश्रावयन् भगवते परुषाण्यभीतः ॥ ३१ ॥

ईशो दुरत्ययः काल इति सत्यवती श्रुतिः । वृद्धानामपि यद् बुद्धिर्बालवाक्यैर्विभिद्यते ॥ ३२ ॥
यूयं पात्रविदां श्रेष्ठा मा मन्ध्वं बालभाषितम् । सदसस्पतयः सर्वे कृष्णो यत् सम्मतोऽर्हणे ॥३३॥

---

साङ्ख्यं यथार्थज्ञानम् । योगः कर्मलक्षणः । यः परो विषयो यस्य स तथा । उपसंहरति– **एक इति** । एतदात्माधीनम् ॥ २१ ॥

हे सभ्याः । ऐतदात्म्य (मित्यस्य) विवरणम्– **आत्मनेति** । उक्तार्थसमर्थनम्– **सृजतीत्यादि** ॥ २२ ॥ फलहेतुत्वाच्चायमेवात्र योग्यतम इत्याह– **यदयमिति** ॥ २३ ॥

एतत्तृप्तौ सर्वं तृप्तं स्यादिति भावेनाह– **एवं चेति** । स्वस्मादन्यस्य स्वातन्त्र्यं न पश्यतीत्यनन्यदर्शी । तस्मै ॥ २४,२५ ॥

देवैः सह वर्तत इति सहदेवो देवव्रतोऽपि ग्राह्यः । भारते तद्वचनादग्रपूजादानाद्युक्तेः ॥ सत्तमाः सतां श्रेष्ठाः ॥ २६-३१ ॥

'ईशः कालो दुरत्ययः' इति श्रुतिः सत्यवती अबाधितार्था । तदुपपादयति– **वृद्धानामिति** ॥ ३२ ॥ मा मंध्वं हे सर्वे सदसस्पतयः । किं बालभाषितम्? तत्राह– **कृष्ण इति** ॥३३,३४॥ अतिव्रज्यातिक्रम्य । कुलकर्मणि एते इत्याह– **गोप इति** ॥ ३५ ॥

तपोविद्याव्रतधरान् ज्ञानविध्वस्तकल्मषान् । परमर्षीन् ब्रह्मनिष्ठान् लोकपालांश्च पूजितान् ॥३४॥
सदसस्पतीनतिव्रज्य गोपोऽयं कुलपांसनः । यथा काकः पुरोडाशं सपर्यां कथमर्हति ॥ ३५ ॥
वर्णाश्रमकुलापेतः सर्वधर्मबहिष्कृतः । स्वैरवर्ती गुणैर्हीनः सपर्यां कथमर्हति ॥ ३६ ॥
ययातिनैषां हि कुलं शप्तं सद्भिर्विगर्हितम् । वृथा पानरतं मत्तं सपर्यां कथमर्हति ॥ ३७ ॥
ब्रह्मर्षिसेवितान् देशान् हित्वैतेऽब्रह्मवर्चसः । समुद्रं दुर्गमाश्रित्य बाधन्ते दस्यवः प्रजाः ॥ ३८ ॥
एवमादीन्यभद्राणि बभाषे नष्टमङ्गलः । नोवाच किञ्चिद् भगवान् यथा सिंहः शिवारुतम् ॥३९॥
भगवन्निन्दनं श्रुत्वा दुःसहं तत्सभासदः । कर्णौ पिधाय निर्जग्मुः शपन्तश्चेदिपं रुषा ॥ ४० ॥
निन्दां भगवतः शृण्वन् तत्परस्य जनस्य च । ततो नापैति यः सोऽपि यात्यधः सुकृताच्च्युतः ।४१।
ततः पाण्डुसुताः क्रुद्धा मत्स्यकैकेयसृञ्जयाः । उदायुधाः समुत्तस्थुः शिशुपालजिघांसवः ॥ ४२ ॥
ततश्चैद्यस्त्वसम्भ्रान्तो जगृहे खड्गचर्मणी । भर्त्सयन् कृष्णपक्षीयान् राज्ञः सदसि भारत ॥ ४३ ॥
तावदुत्थाय भगवान् तान् निवार्य स्वयं रुषा । शिरः क्षुरान्तचक्रेण जहारापततो रिपोः ॥ ४४ ॥
शब्दः कोलाहलोऽप्यासीच्छिशुपाले हते महान् । तत्राततायिनो भूपा दुद्रुवुर्जीवितैषिणः ॥ ४५ ॥
चैद्यदेहस्थितं ज्योतिर्वासुदेवमुपाविशत् । पश्यतां सर्वभूतानामुल्केव भुवि खाच्च्युता ॥ ४६ ॥
जन्मत्रयानुगुणितवैरसंरब्धया धिया । ध्यायंस्तन्मयतां यातो भावो हि भवकारणम् ॥ ४७ ॥
वर्णितं तदुपाख्यानं मया ते बहुविस्तरम् । वैकुण्ठवासिनोर्जन्म विप्रशापात् पुनः पुनः ॥ ४८ ॥

---

एतदेव विवृणोति– **वर्णेति** ॥ ३६ ॥ यदोर्वंशे जातत्वात् कथं कुलाभाव इति तत्राह– **ययातिनेति** ॥ ३७ ॥

अब्रह्मवर्चसः गायत्रीजपसम्बन्धतेजोरहिताः । ब्रह्म वेदस्तत्सम्बन्धवर्चोयुक्तान् देशान् वा । समुद्रमित्यादिना दाशसाम्यमापादयति ॥ ३८ ॥ शिवारुतं सृगालशब्दितम् ॥३९,४०॥ कुतो निर्गमनमिति तत्राह– **निन्दामिति** ॥ ४१,४३ ॥

स्ववचनं सत्यं कर्तुं तावत् ततः पूर्वमेव कृष्णः क्षुरान्तचक्रेण क्षुरधारसुदर्शनेन रिपोः शिरो जहारेत्यन्वयः ॥४४,४५॥ ज्योतिर्जयचैतन्यात्मकम् । खादाकाशाच्च्युतोल्का भुवीव ॥ ४६ ॥

जन्मत्रयेऽनुगुणितेन संवर्धितेन वैरेण शत्रुभावेन विशिष्टेनेतरेण ज्ञानेन संरब्धया समुद्रिक्तया धिया ध्यायन् तन्मयतां द्वेषमयतामसुरो भगवत्प्रधानतां जयो यातः । तथा हि । भावो भक्तिर्भवकारणं माङ्गल्यकारणं भवति ॥ ४७ ॥

तयोरुपाख्यानम् । वैकुण्ठवासिनोर्जयविजययो र्विप्रशापात् पुनःपुनर्जन्म ॥ ४८ ॥

ऋत्विग्भ्यः ससदस्येभ्यो दक्षिणां विपुलामदात् । सर्वान् सम्पूज्य विधिवच्चक्रेऽवभृतमेकराट् ॥४९॥
साधयित्वा क्रतुं राज्ञः कृष्णो योगेश्वरेश्वरः । हत्वा च चेदिपं तत्र विजहार यथासुखम् ॥ ५० ॥
राजसूयावभृथ्येन स्नातो राजा युधिष्ठिरः । ब्रह्मक्षत्रसभामध्ये शुशुभे सुरराडिव ॥ ५१ ॥
राज्ञा सभाजिताः सर्वे सुरमानवखेचराः । कृष्णं क्रतुं च शंसन्तः स्वधामानि मुदा ययुः ॥५२॥
य इदं कीर्तयेद् विष्णोः कर्म चैद्यवधादिकम् । राज्ञां मोक्षविधानं च सर्वपापैः प्रमुच्यते ॥ ५३ ॥

॥ इति द्व्यशीतितमोऽध्यायः ॥

## ॥ अथ त्र्यशीतितमोऽध्यायः ॥

राजोवाच

अजातशत्रोस्तं दृष्ट्वा राजसूयमहोदयम् । सर्वे मुमुदिरे ब्रह्मन् देवा ये च समागताः ॥ १ ॥
दुर्योधनं वर्जयित्वा राजान ऋषयः सुराः । इति श्रुतं नो भगवंस्तत्र कारणमुच्यताम् ॥ २ ॥

---

भगवतेऽग्रपूजासमर्पणेन युधिष्ठिरः कृतकृत्यः किम्, उत ऋत्विगादिभ्योऽपि यथाविहितदक्षिणामदादिति तत्राह– **ऋत्विग्भ्य इत्यादिना** । एकराट् चक्रवर्ती ॥ ४९,५० ॥

राजसूयावभृतविहितकर्मणा । ब्रह्मणां विप्राणां क्षत्राणां मण्डलेश्वराणाम् । सुरराडिन्द्रः ॥ ५१,५२ ॥

बन्धुभूतशिशुपालवधलक्षणं हरेः कर्म न पुण्यसाधनं किन्तु तद्विपरीतकारणमिति मन्दाशङ्कां परिहरन् फलमाह– **इदमिति** ॥ ५३ ॥

॥ इति श्रीमद्भागवतटीकायां विजयध्वजतीर्थकृतायां पदरत्नावल्यां दशमस्कन्धे उत्तरार्धे द्व्यशीतितमोऽध्यायः ॥

अनेनानन्तराध्यायोक्तमेव प्रश्नपूर्वकं विस्तृत्य कथयति– **अजातशत्रोरित्यादिना**[1] ॥१-७॥

---

१. कश्चित् पुस्तके राज्ञा सभाजिता इति श्लोकोत्तरं 'दुर्योधनमृते पापं कलिं कुरुकुलामयम् । यो न सेहे श्रियं स्फीतां दृष्ट्वा पाण्डुसुतस्य ताम्'' इति श्लोको वर्तते । तत्पक्षे सर्वे तुतुषुः कुतः कुतो दुर्योधनो न तुतोषेति कारणमजानानो राजा पृच्छति अजातशत्रोरिति । बहुषु पुस्तकेषु न श्लोक इति पक्षे दुर्योधनो नैव तुतोषेति किंवदन्तीं श्रुत्वा राजा तत्कारणं पृच्छति– अजातशत्रोरितीत्यवतारणमिति ज्ञेयम् -स.

श्रीशुक उवाच

पितामहस्य ते यज्ञे राजसूये महात्मनः । बान्धवाः परिचर्यायां तस्यासन् प्रेमबन्धनाः ।। ३ ।।

भीमो महानसाध्यक्षो धनाध्यक्षः सुयोधनः । सहदेवस्तु पूजायां नकुलो द्रव्यसाधने ।। ४ ।।

सतां शुश्रूषणे जिष्णुः कृष्णः पादावनेजने । परिवेषणे द्रुपदजा कर्णो दाने महामनाः ।। ५ ।।

युयुधानो विकर्णश्च हार्दिक्यो विदुरादयः । बाह्लीकपुत्रा भूर्याद्या ये च सन्तर्दनादयः ।। ६ ।।

निरूपिता महायज्ञे नानाकर्मविशारदाः । प्रवर्तन्ते स्म राजेन्द्र राज्ञः प्रियचिकीर्षया ।। ७ ।।

ऋत्विक्सदस्यबहुवित्सु सुहृत्तमेषु स्विष्टेषु सूनृतमहार्हणदक्षिणाभिः ।
चैद्ये च सात्वतपतेश्चरणं प्रविष्टे चक्रुस्ततस्त्ववभृतस्नपनं द्युनद्याम् ।। ८ ।।

मृदङ्गशङ्खपणवसतूर्यानकगोमुखाः । वादित्राणि विचित्राणि नेदुरारान्महोत्सवे ।। ९ ।।

नर्तक्यो ननृतुर्हृष्टा गायका यूथशो जगुः । वीणावेणुतलोन्नादस्तेषां स दिवमस्पृशत् ।। १० ।।

चित्रध्वजपताकाग्यैरिभेन्द्रस्यन्दनादिभिः । स्वलङ्कृतैर्भटैर्भूपा निर्ययू रुक्ममालिनः ।। ११ ।।

यदुसृञ्जयकाम्बोजाः कुरुकोशलकैकयाः । कम्पयन्तो भुवं सैन्यैर्यजमानपुरःसरैः ।। १२ ।।

सदस्यर्त्विग्द्विजश्रेष्ठा ब्रह्मघोषेण भूयसा । देवर्षिपितृगन्धर्वास्तुष्टुवुः पुष्पवर्षिणः ।। १३ ।।

स्वलंकृता नरा नार्यो गन्धस्रग्भूषणाम्बरैः । विलिम्पन्तोऽभिषिञ्चन्तो विजह्रुर्विविधैरसैः ।। १४ ।।

तैलगोरसगन्धोदहरिद्रासान्द्रकुङ्कुमैः । पुम्भिर्लिप्ताः प्रलिम्पन्त्यो विजह्रुर्वारयोषितः ।। १५ ।।

गुप्ता नृभिर्निरगमन्नुपलब्धुमेतद् देव्यो यथा दिवि विमानवरैर्नृदेव्यः ।
ता मातुलेयसखिभिः परिषिच्यमानाः सव्रीडहासविकसद्वदना विरेजुः ।। १६ ।।

ता देवरानुत सखीन् सिषिचुर्दृतीभिः क्लिन्नाम्बरा विवृतगात्रकुचोरुमध्याः ।
औत्सुक्यमुक्तकबरच्यवमानमाल्याः क्षोभं दधुर्मलधियां रुचिरैः समेताः ।। १७ ।।

स सम्राड् रथमारूढः सदश्वं रुक्ममालिनम् । व्यरोचत स्वपत्नीभिः क्रियाभिः क्रतुराडिव ।।१८।।

---

ऋत्विजश्च सदस्याश्च बहुविदश्च ते तथा । तेषु सुहृत्तमेषु स्विष्टेषु सुपूजितेषु सत्सु । ततः कालव्यवधानमन्तरेण ।। ८ ।। आराद् दूरे समीपे च ।।९-१३।। रसैश्च हरिद्रादिरागजलैः ।।१४।। एतदेवाह– **तैलेत्यादिना** ।। १५ ।।

नृदेव्यो राज्य एतदुपलब्धुं चक्षुर्विषयं स्थलं निरगमन्नित्यन्वयः । देव्यो देवस्त्रियः । मातुलेयैः सखिभिश्च ।। १६ ।। दृतीभिर्जलसेचनपात्रैः । मलधियां विषयाविष्टानाम् । रुचिरैर्भूषणैः समेताः ।। १७,१८ ।।

पत्नीसंयाजावभृथ्यैश्चरित्वा ते तमृत्विजः । आचान्तं स्नापयाञ्चकुर्गङ्गायां सह कृष्णया ।। १९ ।।
दिवि दुन्दुभयो नेदुर्नरदुन्दुभिभिः समम् । मुमुचुः पुष्पवर्षाणि देवर्षिपितृमानवाः ।। २० ।।
सस्नुस्तत्र ततः सर्वे वर्णाश्रमयुता जनाः । अथ राजाऽहते क्षौमे परिधाय स्वलङ्कृतः ।। २१ ।।
ऋत्विक्सदस्यविप्रादीनानर्च्याभरणाम्बरैः । बन्धून् ज्ञातीन् नृपान् मित्रान् सुहृदोऽन्यांश्च[1] सर्वशः ।।
अभीक्ष्णं पूजयामास नारायणपरो नृपः ।। २३ ।।

सर्वे जनाः सुररुचो मणिकुण्डलस्रगुष्णीषकञ्चुकदुकूलमहार्घ्यहाराः ।
नार्यश्च कुण्डलयुगालकवृन्दजुष्टवक्त्रश्रियः कनकमेखलया विरेजुः ।। २४ ।।

अथर्त्विजो महाशिक्षाः सदस्या ब्रह्मवादिनः । विप्रक्षत्रियविट्शूद्रा राजानो ये समागताः ।।२५।।
देवर्षिपितृभूतानि लोकपालाः सहानुगाः । पूजितास्तमनुज्ञाप्य स्वधामानि ययुर्मुदा ।। २६ ।।
हरिदासस्य राजर्षे राजसूयमहोदयम् । नैवातृप्यन् प्रशंसन्तः पिबन् मर्त्यो यथाऽमृतम् ।। २७ ।।
ततो युधिष्ठिरो राजा सुहृत्सम्बन्धिबान्धवान् । प्रेम्णा निवासयामास कृष्णं च त्यागकातरः ।।२८।।
भगवानपि तत्राङ्ग न्यवात्सीत् तत्प्रियङ्करः । प्रस्थाप्य यदुवीरान् स्वान् साम्बादींश्च कुशस्थलीम् ।।
इत्थं राजा धर्मसुतो मनोरथमहार्णवम् । सुसमृद्धं समुत्तीर्य कृष्णेनासीद् गतज्वरः ।। ३० ।।
एकदाऽन्तःपुरे तस्य वीक्ष्य दुर्योधनः श्रियम् । अतप्यद् राजसूयस्य महित्वं चाच्युतात्मनः ।।३१।।

यस्मिन् नरेन्द्रदितिजेन्द्रसुरेन्द्रलक्ष्म्यो नाना विभान्ति किल विश्वसृजोपक्लृप्ताः ।
ताभिः पतिं द्रुपदराजसुतोपतस्थे यस्यां विषक्तहृदयः कुरुराज एषः ।। ३२ ।।
यस्मिंस्तदा मधुरिपोर्महिषीसहस्रं श्रोणीभरेण शनकैः क्वणदङ्घ्रिशोभम् ।
वक्षः सुचारुकुचकुङ्कुमशोणहारं श्रीमन्मुखं च चलकुण्डलकुन्तलाढ्यम् ।। ३३ ।।

सभायां मयक्लृप्तायां क्वापि धर्मसुतो विराट् । वृतोऽनुजैर्बन्धुभिश्च कृष्णेनापि स्वचक्षुषा ।। ३४ ।।
आसीनः काञ्चने साक्षादासने मघवानिव । पारमेष्ठ्यश्रिया जुष्टः स्तूयमानश्च बन्दिभिः ।। ३५ ।।
उपास्यमानो विप्रेन्द्रैर्नानादेशसमागतैः । दोधूयमानो धवलैर्वालव्यजनसङ्कुलैः ।
रराज राजशार्दूलो दिवि देवपतिर्यथा ।। ३६ ।।

।। इति त्र्यशीतितमोऽध्यायः ।।

---

पत्नीसंयाजावभृथ्याख्येष्टिभिश्चरित्वा कृत्वा ।।१९,२०।। अहते अधौते[2] ।। २१-३१ ।। यस्मिन् पुरे । विश्वसृजा कृष्णेन । तस्मिन् ताभिः श्रीभिः सह द्रुपदराजसुता पतिमुपतस्थ इत्यन्वयः ।। ३२,३३ ।। स्वचक्षुषा स्वदृष्टिभूतेन ।। ३४,३५ ।। वालव्यजनसङ्कुलैश्चामरस्तिमितवायुभिः। दोधूयमानो वीज्यमानः ।। ३६ ।।

।। इति श्रीमद्भागवतटीकायां विजयध्वजतीर्थकृतायां पदरत्नावल्यां दशमस्कन्धे उत्तरार्धे त्र्यशीतितमोमोऽध्यायः ।।

---

१. मित्रसुहृदोऽन्यांश्चेति पाठः । मित्रानिति पाठे मित्राणामित्यर्थः -स. २. नूतने इति यावत् ।

## ॥ अथ चतुरशीतितमोध्यायः ॥

श्रीशुक उवाच

तत्र दुर्योधनो राजा परीतो भ्रातृभिः प्रियैः । किरीटमाली न्यविशदसिहस्तः क्षिपन् रुषा ॥ १ ॥
स्थलेऽप्यगृह्णाद् वस्त्रान्तं हरिनीलोपलाचिते । स्थलं पुष्करिणीं मत्वा सर्वे तं जहसुर्जनाः ॥ २ ॥
आगच्छन्नेवमुर्वीशः पुरः पुष्करिणीं क्वचित् । विलोक्य स्फाटिकां भूमिं मन्वानो न्यपतज्जले ॥३॥
जहास भीमस्तं दृष्ट्वा स्त्रियो भूपाश्च केचन । निवार्यमाणा अप्यङ्ग राज्ञा कृष्णानुमोदिताः ॥ ४ ॥
अजातशत्रुराकर्ण्य वस्त्रस्रग्भूषणादिकम् । सम्प्रेष्याह्लापयामास साम्ना...१ योगेश्वरेण च ॥ ५ ॥
तदनादृत्य सत्कारं व्रीडावनतकन्धरः । जाज्वल्यमानहृदयो न जगाम तदन्तिकम् ॥ ६ ॥

स व्रीडितोऽवाग्वदनो रुषा ज्वलन् निष्क्रम्य तूष्णीं प्रययौ गजाह्वयम् ।
हाहेति शब्दः सुमहानभूत् तदा अजातशत्रुर्विमना इवाभवत् ॥ ७ ॥
बभूव तूष्णीं भगवान् भुवो भरं जिहीर्षुरात्मेहितमात्मनि स्मरन् ।
तदाऽऽविरासीज्जगदीशसन्निधौ मुनिः सुराराधितपादपङ्कजः ॥ ८ ॥

उपेत्य नारदः सर्वैः सदस्यैरभिपूजितः । कृष्णेनाभ्यर्चितः सम्यगुपविष्टो नृपान्तिके ॥ ९ ॥
उवाच धर्मराजस्तं प्रणिपत्य यथाविधि । भवान् सर्वत्रगो ब्रह्मन् सर्वकालेष्वसङ्गवः ॥ १० ॥
नृपाणां शौर्ययुक्तानां सर्वमण्डलवासिनाम् । इदानीं कतमः शूरो नित्योद्योगेन वर्तते ॥ ११ ॥
इति तेनोदितां वाणीमाकर्ण्य मुनिरब्रवीत् ॥ १२ ॥

नारद उवाच

भग्नदर्पा नृपाः सर्वे कृष्णेनाप्रतिमौजसा । वसन्ति विषये स्वे स्वे नष्टचेष्टा गतश्रियः ॥ १३ ॥
एक एव महोत्साहः क्षत्रियाणां दुराग्रही । जातः शाल्वेषु नृपतिर्बहुपादातिवाहनः ॥ १४ ॥

---

द्वित्रेष्वध्यायेषु शाल्ववधमाहात्म्यं कथयति । तत्रादौ भूभारहरणहेतुदुर्योधनस्य तेजःक्षतिं च वक्ति– तत्रेत्यादिना । तत्र सभायाम् ॥१॥ 'आचितं निचितं व्याप्तम्' इति हलायुधः ॥२॥

पुरः अग्रतः । स्फटिकमणिनिबद्धाम् ॥ ३,४ ॥ योगेश्वरेण श्रीकृष्णेनानुज्ञातः । साम्ना सान्त्ववचनेन ॥ ५-७ ॥

आत्मना स्वेनैवेहितं चेष्टितम् । आत्मनि मनसि स्मरन्, भद्रमिति शेषः । तत्र कथान्तरं वक्तुं नारदागमनमाह– तदेति ॥ ८,१५ ॥

---

१. दूतैर्योगेश्वरेण चेति स.पाठः ।

भ्रातर्युपरते युद्धे विष्णुना लोकजिष्णुना । ब्रह्मदत्तसुते हंसे यमुनायां महात्मना ॥ १५ ॥
कृष्णद्विडेत्य राज्ञोऽसौ रुक्म्यादीन् कुण्डिने पुरे । समाजं कारयामास भ्रातुरानृण्यकाङ्क्षया ॥१६॥
शिशुपालद्रुममुखैर्दन्तवक्त्रपुरःसरैः । पराजितेषु सङ्ग्रामे जरासन्धादिषु प्रभो ॥ १७ ॥
शाल्वः प्रतिज्ञामकरोच्छृण्वतां सर्वभूभुजाम् । अयादर्वी क्ष्मां करिष्ये पश्यन्तु मम पौरुषम् ॥१८॥
इति मूढः प्रतिज्ञाय तपसे प्राविशद् वनम् । गते तस्मिन् बहून् वर्षान् प्रतीक्ष्य तदुपागमम् ॥१९॥
तदनन्तरजोऽमात्यैरभिषिक्तो नृपार्थिभिः । तपस्तप्त्वा स नृपतिर्देवं पशुपतिं प्रभुम् ॥ २० ॥
आराधयामास वने पांसुमुष्टिं सकृद् ग्रसन् । संवत्सरान्ते भगवान् सन्तुष्टः स उमापतिः ॥ २१ ॥
वरेण च्छन्दयामास शाल्वं शरणमागतम् । देवासुरमनुष्याणां गन्धर्वोरगरक्षसाम् ॥ २२ ॥
अभेद्यं कामगं वव्रे स यानं वृष्णिभीषणम् । तथेति गिरिशादिष्टो मयः परपुरञ्जयः ॥ २३ ॥
पुरं निर्माय शाल्वाय प्रादात् सौभमयस्मयम् । स लब्ध्वा कामगं यानं तमोधाम दुरासदम् ॥२४॥
आययौ स्वं जनपदं समग्रबलवाहनम् । इदानीं राजपुत्राणां स एवोद्योगवान् नृप ॥ २५ ॥
इति धर्मसुतः श्रीमान् श्रुत्वा तन्नारदोदितम् । पार्श्वे भगवतः शौरेः शनैर्मुखमवैक्षत ॥ २६ ॥
निशम्य तद् वासुदेवो धैर्यसारो निराकुलः । किञ्चित् प्रहस्यास्तु नामेत्याह सा हि महात्मता ।२७।
पूजयित्वा ऋषिं सम्यक् सूनृतैर्गीर्भिरच्युतः । चिराभिलषितः सोऽपि प्राप्तः साध्वित्यचिन्तयत् ॥
उग्रसेनं यदुपतिं युयुधानं च माधवः । अक्रूरं कृतवर्माणमन्यांश्च यदुपुङ्गवान् ॥ २९ ॥
प्रेषयामास रक्षार्थे द्वारवत्याः स्वसैनिकान् ॥ ३० ॥

॥ इति चतुरशीतितमोऽध्यायः ॥

---

रुक्म्यादीन् राज्ञः । समाजं सम्मेलनम् । आनृण्यमृणाभावकरणम् ॥ १६ ॥ शिशुपाल-द्रुमदुर्मुखैः सह जरासन्धादिषु युद्धे पराजितेषु सत्सु ॥ १७-१९ ॥

तस्य शाल्वस्यानन्तरजोऽनुजः ॥ २०,२१ ॥ छन्दयामास तृप्तमकरोत् ॥ २२,२३ ॥

अयस्मयम् अयोमयम् । अयस्मयादीनि च्छन्दसीति पाणिनिः । नीलरश्मिपुञ्जात्मकत्वात् तमोधामेत्युच्यते[1] ॥ २४-२७ ॥ सूनृतैः सूनृताभिः ॥ २८,२९ ॥ स्वसैनिकान् स्वसेनानायकान् ॥ ३० ॥

॥ इति श्रीमद्भागवतटीकायां विजयध्वजतीर्थकृतायां पदरत्नावल्यां दशमस्कन्धे उत्तरार्धे चतुरशीतितमोऽध्यायः ॥

---

१. तमोधाम पश्यतामदृश्यमन्धकारेणेत्यर्थः -स.

## ॥ अथ पञ्चाशीतितमोऽध्यायः ॥

श्रीशुक उवाच

**तथा वसति गोविन्दे शक्रप्रस्थे महात्मनि। ससानुजे चैव नृपे कृतकृत्ये युधिष्ठिरे ॥ १ ॥**
**आकर्ण्य शाल्वः संक्रुद्धो दमघोषसुतं हतम्। जरासन्धं च सुहृदं राजसूयं क्रतुं कृतम् ॥ २ ॥**
**ययौ द्वारावतीं शाल्वो वैरं वृष्णिकृतं स्मरन्। तमावसन्नन्तरिक्षे युयुधे भरतर्षभ ॥ ३ ॥**
**पुरीं बभञ्जोपवनान्युद्यानानि च सर्वशः। सगोपुराणि द्वाराणि प्राकाराट्टालतोलिकाः ॥ ४ ॥**
**विहायसो विमानाग्र्यान्निपेतुः शस्त्रवृष्टयः। शैला द्रुमाश्चाशनयः सर्पा आसारशर्कराः।**
**प्रचण्डश्चक्रवातोऽभूद् रजसा च्छादिता दिशः ॥ ५ ॥**
**इत्यर्द्यमाना सौभेन कृष्णस्य नगरी भृशम्। नाभ्यपद्यत शं राजन् त्रिपुरेण यथा मही ॥ ६ ॥**
**प्रद्युम्नो भगवान् वीक्ष्य मथ्यमाना निजाः प्रजाः। मा भैष्टेत्यभ्यधाद् धीरो वाचः पित्रोरनुस्मरन् ॥**
**सात्यकिश्चारुदेष्णश्च साम्बोऽक्रूरः सहानुजैः। हार्दिक्यो भानुविन्दश्च गदश्च शुकसारणौ ॥ ८ ॥**
**अपरे च महेष्वासा रथयूथपयूथपाः। निर्ययुर्दंशिता गुप्ता रथनागाश्वपत्तिभिः ॥ ९ ॥**
**ततः प्रववृते युद्धं शाल्वानां यदुभिः सह। यथाऽसुराणां विबुधैस्तुमुलं रोमहर्षणम् ॥ १० ॥**
**तां च सौभपतेर्मायां दिव्यास्त्रै रुक्मिणीसुतः। क्षणेन नाशयामास नैशं तम इवोष्णगुः ॥ ११ ॥**
**विव्याध पञ्चविंशत्या स्वर्णपुङ्खैरयोमुखैः। शाल्वस्य ध्वजिनीपालं शरैः सन्नतपर्वभिः ॥ १२ ॥**
**शतेनाताडयच्छाल्वमेकैकेनास्य सैनिकान्। विव्याध दशभिर्नेतॄन् वाहनानि त्रिभिस्त्रिभिः ॥१३॥**
**तदद्भुतं महत्कर्म प्रद्युम्नस्य महात्मनः। दृष्ट्वा तं पूजयामासुः सर्वेऽस्य पुरवासिनः ॥ १४ ॥**
**बहुरूपैकरूपं तद् दृश्यते न च दृश्यते। मयमायाकृतं यानं दुर्विभाव्यं जनैरभूत् ॥ १५ ॥**
**क्वचिद् भूमौ क्वचिद् व्योम्नि क्वचित् सिन्धौ क्वचिद् गिरौ। अलातचक्रवद् भ्राम्यत् सौभं तद् दुरवस्थितम् ॥**

---

तथा महोत्सवसमेतत्वेन ॥ १ ॥ शाल्वः संक्रुद्धः, अभूदिति शेषः ॥ २ ॥ आगत्य चान्तरिक्षे तं विमानमावसन् तस्मिन् विमाने स्थितो युयुध इत्यन्वयः ॥ ३ ॥

सम्प्रहारप्रकारमाह– **पुरीमिति** । अट्टालोऽट्टः । तोलिका वीथिकागृहपङ्क्तिमध्यपद्धतिरित्यर्थः ॥ ४ ॥

विहायस आकाशादासारो वेगवान् वर्षस्तत्सहिताः शर्करा क्षुद्रपाषाणाः । चक्रवातो मण्डलवायुः ॥ ५ ॥ शं सुखम् ॥६-१०॥ उष्णा गावो यस्य स उष्णगुः सूर्यः ॥११-१३॥ अस्य प्रद्युम्नस्य ॥१४,१५॥ दुरवस्थितं नैकत्र स्थितमभूदिति शेषः ॥ १६ ॥

यत्र यत्रोपलक्ष्येत तस्य सौभस्य सैनिकः । शाल्वस्ततस्ततोऽमुञ्चन् शरान् सात्वतयूथपाः ।।१७।।
शरैरग्न्यर्कसङ्काशैराशीविषदुरासदैः । पीड्यमानः पुरानीकः शाल्वोऽमुह्यत् परैरिति ।। १८ ।।
शाल्वानीकपशस्त्रौघैर्वृष्णिवीरा भृशार्दिताः । न तत्यजू रणे स्वं स्वं लोकद्वयजिगीषवः ।। १९ ।।
शाल्वामात्यो द्युमान्नाम प्रद्युम्नात् प्राक् प्रपीडितः। आसाद्य गदया गुर्व्या व्याहत्य व्यनदद् बली ।।
प्रद्युम्नं गदया शीर्णवक्षःस्थलमरिन्दमम् । अपोवाह रणात् सूतो धर्मविद् दारुकात्मजः ।। २१ ।।
लब्धसञ्ज्ञो मुहूर्तेन कार्ष्णिः सारथिमब्रवीत् । असाध्विदमहो सूत यद् रणान्मेऽपसर्पणम् ।।२२।।
न यदूनां कुले जातः श्रूयते रणविच्युतः । विना मत् क्लीबचित्तेन सूतेन प्राप्तकिल्बिषात् ।। २३ ।।
किं नु वक्ष्येऽभिसङ्गम्य पितरौ रामकेशवौ । युद्धाद् धर्म्यादपक्रान्तः पृष्टस्तत्रात्मनाऽक्षमम् ।।२४।।
व्यक्तं मे कथयिष्यन्ति हसन्त्यो भ्रातृजामयः । क्लैब्यं कथं गतो वीर सहान्यैः कथ्यतां मृधे ।।२५।।

सूत उवाच

धर्मं विजानताऽऽयुष्मन् कृतमेतन्मया विभो । सूतः कृच्छ्रगतं रक्षेद् रथिनं सारथिं रथी ।। २६ ।।
एतद् विदित्वाऽनुभवान्मयाद्यापोहितो रणात् । उपसृष्टः परेणेति मूर्च्छितो गदया हतः ।। २७ ।।

।। इति पञ्चाशीतितमोऽध्यायः ।।

---

तस्य सौभस्य सैनिकः सेनासहितः शाल्वो यत्र यत्रोपलक्ष्येत सात्वतयूथपास्ततः शरानमुञ्चन्नित्यन्वयः ।। १७ ।। इति परैः शरैः प्रपीड्यमानः पुरःस्थितानीकः ।। १८ ।। शाल्वस्यानीकपाः सेनानायकाः । तेषां शस्त्राणामोघैः ।। १९,२० ।।

'रथिनि प्राणसन्दिग्धे सारथी रथमाहरेत् । जीवयेद् युद्धतः साधु युद्धकर्मविशारदः' इति युद्धधर्मवित् ।। २१ ।। अपसर्पणमपसरणम् ।। २२ ।।

कुतोऽसाध्वित्यतस्तदाह– **नेति** । मद्विना ।। २३ ।। धर्मसाधनाद् युद्धादपगतोऽहं पितृभ्यां पृष्टस्तत्र पित्रोरात्मना मया कृतमक्षमं किंनु कथं नु वक्ष्य इत्यन्वयः ।। २४ ।।

किञ्चेदं दुस्सहमित्याह– **व्यक्तमिति** । जामयः सहोदर्यः । कथं कथयन्तीति तत्राह– **क्लैब्यमिति** । हे वीर मृधेऽन्यैः सह कथं क्लैब्यं गतस्तत् कथ्यतामिति ।। २५ ।। कोयं धर्म इति तत्राह– **सूत इति** ।। २६ ।। उपसृष्ट उपद्रुतः ।। २७ ।।

।। इति श्रीमद्भागवतटीकायां विजयध्वजतीर्थकृतायां पदरत्नावल्यां दशमस्कन्धे उत्तरार्धे पञ्चाशीतितमोऽध्यायः ।।

## ॥ अथ षडशीतितमोऽध्यायः ॥

### श्रीशुक उवाच

इति सूतोदितां वाणीमाकर्ण्य यदुनन्दनः । पुनरात्तप्रहरणः सूतमाह रणाङ्गणे ॥ १ ॥
पश्य सूत द्युमानेष दंशितो धृतकार्मुकः । नय मां द्युमतः पार्श्वं वीरस्येत्याह सारथिम् ॥ २ ॥
आद्रवन्तं स्वसैन्यानि द्युमन्तं रुक्मिणीसुतः । प्रतिहत्य रुषाऽविध्यन्नाराचैरष्टभिः स्मयन् ॥ ३ ॥
चतुर्भिश्चतुरो वाहान् सूतमेकेन चाहनत् । द्वाभ्यां च केतुधनुषी द्युमतोऽन्येन वै शिरः ॥ ४ ॥
गदः सात्यकिरक्रूरः साम्बश्च शुकसारणौ । वसुदेवोग्रसेनौ च जघ्नुः सौभपतेर्बलम् ॥ ५ ॥
पेतुः समुद्रे बहवः शाल्वेया भिन्नकन्धराः । एवं यदूनां शाल्वानां निघ्नतामितरेतरम् ॥ ६ ॥
रणं त्रिनवरात्रं तु तुमुलं रोमहर्षणम् । इन्द्रप्रस्थं गतः कृष्ण आहूतो धर्मसूनुना ॥ ७ ॥
राजसूये निवृत्ते च शिशुपाले रणे हते । अलक्षयद् दुःशकुनान् घोरान् सङ्ग्रामशंसिनः ॥ ८ ॥
कुरुवृद्धाननुज्ञाप्य मुनींश्च ब्राह्मणैः सह । अन्वीयमानः सामात्यैः पाण्डवैर्निर्ययौ पुरात् ॥ ९ ॥
स गत्वा किञ्चिदध्वानं स्थापयित्वा पुरौकसः । पृथासुताननुज्ञाप्य प्रणतानश्रुलोचनान् ॥ १० ॥
सुवर्णशिबिकारूढैरवरोधवधूजनैः । गजाश्वरथपादातिसहस्रैरपि संयुतः ॥
अन्वीतराजकटकः प्रतस्थे पश्चिमामुखः ॥ ११ ॥
शाल्वोऽपि कुरुशार्दूल विमानेन खचारिणा । अपावृत्य रणाद् राष्ट्रं स्वमेवाभ्यर्दितो ययौ ॥१२॥
गच्छमानस्य शाल्वस्य साम्बोऽभिद्रुत्य पृष्ठतः । शाल्वामात्यं क्षेमधूर्तिं बाणैर्निन्ये यमक्षयम् ॥१३॥
सेनापतिं विविन्दाख्यं शाल्वस्याखिलवल्लभम् । निरुध्य पथि गच्छन्तं प्रद्युम्नः प्राहरच्छरैः ॥१४॥
प्रद्युम्नेनातिविद्धोऽसौ गृहीत्वा खड्गचर्मणी । ससज्ज रौक्मिणेयेन तदभूद् रणमद्भुतम् ॥ १५ ॥
मण्डलानि विचित्राणि चरतस्तस्य सङ्गरे । कृपाणेन यदुश्रेष्ठः शिरः कायादपाहरत् ॥ १६ ॥
विभ्रष्टमार्गा सा सेना हतप्रवरयूथपा । विदुद्राव यथाकामं प्राणत्राणपरायणा ॥ १७ ॥
देवोऽपि द्वारकामेत्य वेगेन गरुडध्वजः । ददर्श नगरीं भग्नप्रासादाट्टालगोपुराम् ॥ १८ ॥
विशीर्णतोरणां रुग्णतुङ्गसालप्रतोलिकाम् । विध्वस्तोपवनोद्यानां प्रस्तरापूर्णदीर्घिकाम् ॥ १९ ॥

---

यदून् नन्दयतीति यदुनन्दनः ॥ १ ॥ एष द्युमान् दंशितो रणाङ्गणे, आस्ते इति शेषः । ततः किम्? तत्राह– **नयेति** ॥२-६॥ त्रिनवरात्रं सप्तविंशद्रात्रम् । अस्मिन्नवसरे कृष्णागमनं वक्ति– **इन्द्रप्रस्थमिति** ॥७-११॥ रणादपावृत्य रणं विहायेत्यर्थः ॥१२,१३॥ अखिलात् समस्तप्रकृतिजनाद् वल्लभं प्रियतमम् ॥ १४ ॥ ससज्ज सङ्गतः ॥ १५-१८ ॥

सालः प्राकारः । 'प्रतोली विशिखा रथ्या' इति हलायुधः । प्रतोलिरेव प्रतोलिका । प्रस्तरापूर्णदीर्घिकां पाषाणपूरितपरिखाम्, गन्तुमिति शेषः ॥ १९-२८ ॥

निःस्वाध्यायवषट्कारामालोक्य द्वारकां पुरीम् । अपृच्छत् कृतवर्माणं किमेतदिति दुर्मनाः॥२०॥
तेनोक्तं सर्वमाकर्ण्य शाल्वराजविचेष्टितम् । प्रतिजज्ञे यदुपतिः शृण्वतां सर्वसात्वताम् ॥ २१ ॥
अनुद्रुत्य तमद्यैव सौभं हत्वा दुरात्मकम् । सौभं निपात्य जलधौ प्रवेक्ष्ये द्वारकामिति ॥ २२ ॥
स रथं शैव्यसुग्रीवमेघपुष्पबलाहकैः । युक्तं बहुप्रहरणमग्रावस्थितदारुकम् ॥ २३ ॥
आरुह्य भगवान् विष्णुर्गरुडध्वजमुत्तमम् । प्रययौ सौभपदवीं मनोमारुतरंहसा ॥ २४ ॥
तथा गत्वा सुदूरं तमम्भोधेः कुक्षिमाश्रितम् । ददर्श सौभं तन्मध्ये शाल्वं च समलङ्कृतम् ॥२५॥
शाल्वश्च कृष्णमालोक्य हतप्रायबलेश्वरः[1] । प्राहरत् कृष्णसूताय शक्तिं भीमां दृढां मृधे ॥२६॥
तामापतन्तीं नभसि महोल्कामिव रंहसा । भासयन्तीं दिशः शौरिः सायकैः शतधाऽच्छिनत् ॥
तं च षोडशभिर्बाणैर्विद्ध्वा सौभं च खेचरम् । अविध्यच्छरसन्दोहैः खं सूर्य इव रश्मिभिः ॥
शाल्वः शौरेस्ततः सव्यं सशार्ङ्गं शार्ङ्गधन्वनः । बिभेद न्यपतद् हस्ताच्छार्ङ्गमासीत् तदद्भुतम् ॥
हाहाकारो महानासीद् यदूनां तत्र पश्यताम् । विनद्य सौभराडुच्चैरिदमाह जनार्दनम् ॥ ३० ॥
यत् त्वया युधि दुर्बुद्धे भ्रातरौ मे महाबलौ । निहतौ हंसडिभिकौ यमुनायां दुरात्मना ॥
यद् भूयो मूढ नः सख्युर्भार्याऽप्यपहृता त्वया ॥ ३१ ॥
यच्च मन्द सभामध्ये दमघोषसुतः सखा । व्यापादितः क्षत्रियाणां पश्यतां हतचेतसाम् ॥ ३२ ॥
तं त्वाऽद्य निशितैर्बाणैरपराजितमानिनम् । नयाम्यपुनरावृत्तिं यदि तिष्ठेर्ममाग्रतः ॥ ३३ ॥
इति तेनोदितां वाणीमाकर्ण्य मधुसूदनः । प्राहार्दितो बाणगणैः पुनरात्तशरासनः ॥ ३४ ॥
वृथा त्वं कत्थसे मन्द न यस्यास्त्यतिकौतुकम् । पौरुषं दर्शय त्वं नः शूराणां फल्गु भाषणम् ॥
इत्युक्त्वा भगवान् शाल्वं गदया भीमवेगया । तताड जत्रौ संरब्धः स चकम्पे वमन्नसृक् ॥ ३६ ॥
ततः शाल्वः समुत्पत्य खड्गेनानकदुन्दुभेः । उत्कृत्य शिर आदाय खस्थं सौभं समाविशत् ॥३७॥

---

सव्यं हस्तम् ॥२९,३०॥ सख्युर्भार्या शिशुपालस्य संक्लृप्ता रुक्मिणी ॥३१,३२॥ अपुनरावृत्तिं मरणं यमगृहं वा ॥ ३३,३४ ॥

यस्य तवातिकौतुकमिति व्याख्यातं वीर्यं नास्ति स त्वं वृथा कत्थसे । पौरुषमस्ति चेद् दर्शय । शूराणां च भाषणं फल्गु मितं वीर्यप्रकटनं बह्वित्यर्थः । यद्वा शूराणां पौरुषं दर्शय, भाषणं फल्गु तुच्छं विकत्थनमित्यर्थः ॥३५,३६॥ शाल्वस्य शक्तिप्रकटनाय तन्माया-प्रकारमाह– तत इति ॥ ३७ ॥

---

१. हतप्रायं हतभूयिष्ठं यद् बलं तस्येश्वरः -स.

**ततो मुहूर्तात् प्रकृतावुपस्थितस्तत्रानुतिष्ठन् स्वजनानुसङ्गतः ।**
**महानुभावस्तदबुद्धतासुरीं मायां स शाल्वप्रकृतां मयोदिताम् ।। ३८ ।।**

---

श्रीकृष्णः शाल्वसृष्टां मायामवलोक्य किमकरोत्? अत्राह– **तत इति** । ततो वसुदेवशिरोहरणानन्तरं मुहूर्तकालं तत्र युद्धे अनुतिष्ठन् अन्वतिष्ठत् अन्ववर्तत । कीदृशः? प्रकृतौ चिदानन्दघनस्वभावे उपस्थितोऽपि शाल्वमायां जानन्नपि प्रकृतावुप प्रकृतिसमीपे स्थितोऽजानन्निव । पुनः किं चकारेति तत्राह ततो मुहूर्तान्महानुभावः अपरिमितप्रभावः स हरिः स्वजनस्य स्वभक्तजनस्यानुकूलात् सङ्गतः वचनप्रसङ्गात् तद् वसुदेवशिरोहरणमबुध्यत । कथं तद् ? अत्राह– **आसुरीमिति** । शाल्वेन प्रकृतां प्रयुक्ताम् । मूलबलमाह– **मयेति** । मयेनासुररक्षणायोदितामुपदिष्टामित्यर्थः । तदुक्तम्– 'जानन् शाल्वकृतां मायामजानन्निव केशवः । अन्ववर्तत किञ्चित्तु' इति । बुद्ध्वा किं कृतम्? अत्राह– **प्रकृताविति** । कृती च्छेदने इति धातोः बुद्ध्वा मायायाः प्रकृतौ निर्मूलने सम्यक् स्थितः, अभूदिति शेषः । 'ततस्तामाहरद् विभुः' इति वचनात् । अज्ञानप्रकटनं कस्मात्? अत्राह– **प्रकृताविति** । प्रकृतिनिर्मित-शरीरस्थत्वात्(?) असुरजनमोहनार्थत्वाच्च । 'एवमेव तु सर्वत्र परमात्मा सनातनः । विद्धश्च रुधिरस्रावी कथञ्चिदजयत् परम् । इत्यादि दर्शयेद् विष्णुर्मोहयन् मायया जगत्' इति । चिदानन्दघनस्वभाव इत्येतत् कुत इति चेन्न । 'चिदानन्दघनस्यास्य कुतो वेधादि संभवेत्' इत्यस्मात् । स्वजनानुसङ्गत इतीदमपि 'सद्गतेः' इति सिद्धम् । 'यदचरस्तन्वा वावृधानो बलानीन्द्र प्रब्रुवाणो जनेषु । मायेत् सा ते यानि युद्धान्याहुर्नाद्य शत्रुं न पुरा विवित्से' इत्यादिश्रुतिसिद्धोयमित्यर्थः । तथा हि? हे इन्द्र तन्वा वावृधानः स्वरूपेण भृशं वर्धमानस्त्वं बलानि वीर्याणि विक्रमलक्षणानि अचरः अकृतेति यत् स्वजनेषु प्रब्रुवाणः, वर्तस इति शेषः । तस्मात् स्वभावरहस्यं स्वजना जानन्तीत्यर्थः । शाल्वादिशत्रुणा क्रियमाणानि यानि युद्धान्याहुः पुराणादौ एतानि त्वामुद्दिश्य सा मयोदिता माया इत् इन्द्रजाललक्षणैव । त्वं पुरा प्रथमतो मूहूर्तं शत्रुमुखत्रोटनान्मायां न विवित्से न ज्ञातवानसि । अद्याधुना विवित्से । ननु पश्चात् सा सिद्धाऽभूदित्यर्थः[१] (?) ।। ३८ ।।

---

१. अस्पष्टमिदम् । यानि युद्धान्याहुस्तानि मायैव इन्द्रजालविद्यैव, न तु वास्तवयुद्धानि । निस्सीमपौरुषस्य तव प्रतिपक्षाभावात् । अतस्त्वं शत्रुं पुरा न लब्धवान्, अद्य न लभसे भविष्यति च न लप्स्यसे इत्यर्थः।

न तत्र दैत्यं न पितुः कलेवरं प्रबुद्ध आत्मा तदपश्यदच्युतः ।
स्वप्ने यथा चाम्बरचारिणं रिपुं सौभस्थमालोक्य निहन्तुमुद्यतः ॥ ३९ ॥
एवं वदन्ति राजर्षे ऋषयः खेचरान्विताः । यत् स्ववाचो विरुध्यन्ते तन्नूनं ते स्मरन्ति नु ॥४०॥
क्व शोकमोहौ स्नेहो वा भयं वा येऽज्ञसंभवाः । क्व चाखण्डितविज्ञानैश्वर्येश्वरोऽजितः ॥ ४१ ॥
यत्पादसेवार्जितयाऽऽत्मविद्यया हिन्वन्त्यनाद्यात्मविपर्ययग्रहम् ।
लभन्त आत्मीयमनन्तमैश्वरं कुतो नु मोहः परमस्य सद्गतेः ॥ ४२ ॥

---

एतदेव स्पष्टयति– **नेति** । अच्युतो ज्ञानच्युतिरहितः तत् पितुः कलेवरं च नापश्यत् । प्रबुद्धः, मायामिति शेषः । आत्मा परमात्मा । निदर्शयति– **स्वप्न इति** । यथा स्वप्ने करितुरगादीन् पश्यति ततः प्रबुद्धस्तान् पदार्थान् न पश्यति । बुद्ध्वा किं कृतम्? अत्राह– **अम्बरचारिणमिति** ॥ ३९ ॥

तद्द्रष्टृणामृष्यादीनामपि ज्ञानलोपो नास्ति किं पुनर्हरेरिति भावेनाह– **एवमिति** । कथं वदन्तीत्यत्राह– **यत् स्ववाच इति** । स्वस्य स्वतन्त्रस्य हरेर्वाचो वेदलक्षणा यन्मोहादिकं हरिविषयं प्रति विरुध्यन्ते विरोधवन्त्यो भवन्ति, हरे र्मोहादिकं न सहन्त इत्यर्थः, 'अजस्यावक्रचेतसः' इति श्रुतेः । नूनं तार्किका उपक्रमादिवेदतात्पर्यलिङ्गकोविदास्ते वैदिकास्तन्मोहादिकं स्मरन्ति नु किम्? नैव स्मरन्तीत्यर्थः । येषां स्ववाचो विरुध्यन्ते हरेर्मोहादिवादिन्यः परस्परविरोधिन्यः स्युः, ते शास्त्रप्रणेतारः तादृशीर्वाचः स्मरन्ति नु पुराणादौ? नैवेति वा ॥ ४० ॥

प्रत्युत विपरीतमेव वदन्तीत्याह– **क्वेति** । ये शोकादयोऽज्ञानतः सम्भवो येषां ते तथा[1] ॥ ४१ ॥

तदेव दृढयति– **यत्पादेति** । आत्मविद्यया परमात्मज्ञानेन अनादिकालेनात्मविपर्ययग्रहं मनसि स्थितमन्यथाज्ञानं हिन्वन्ति नाशयन्ति । न तावदेव किन्तु हरितत्वं च जानन्तीत्याह– **लभन्त इति** । आत्मीयम् आत्मनः परमात्मनो विद्यमानं तमैश्वरमीश्वरत्वं लभन्ते जानन्ति । यद्वा स्वयोग्यमैश्वरम् ईश्वरानुगृहीतमनन्तं मोक्षं लभन्ते प्राप्नुवन्ति ॥ ४२-४४ ॥

---

१. अज्ञेषु सम्भवाः सम्भावयितुं योग्याः -स.

इति तैरुदितां वाणीमाकर्ण्य कमलेक्षणः । ससौभं हन्तुमारेभे शाल्वं कुरुकुलोद्वह ॥ ४३ ॥
ततो निशातमादाय चक्रं कृष्णः सुदर्शनम् । आग्नेयास्त्रेणाभिमन्त्र्य प्राहिणोत् सौभनाशनम् ॥४४॥
तन्नारायणहस्ताग्र्यान्मुक्तमाग्नेयमन्त्रितम् । जज्वालाब्रह्मसदनं ज्वालामालातिभीषणम् ॥ ४५ ॥
ततो वैमानिकाः सर्वे ते विहाय विहायसम् । सुदर्शनोष्मणा तप्ता दुद्रुवुः सर्वतो दिशम् ॥ ४६ ॥
तदर्कशतसङ्काशं सौभं भित्त्वा द्विधा पुरम् । भूयो नारायणकरं प्राप भूप सुदर्शनम् ॥ ४७ ॥
ततः समुद्रे न्यपतत् पुरं विच्छिन्नबन्धनम् । गदापाणिर्दूराधर्षः साल्वोऽपि प्रत्यदृश्यत ॥
तां प्रेषयामास गदां कृष्णमुद्दिश्य दुर्मतिः ॥ ४८ ॥

ततो रथं दैत्यबलोपनीतं संस्थाय शाल्वो बहुशस्त्रसञ्चयम् ।
अवाकिरन् कृष्णशिरस्यनन्तैर्महायुधैश्च व्यनदद् हरिर्यथा ॥ ४९ ॥

तां गदां प्रेषितां तेन छित्त्वा बाणैस्त्रिधा हरिः । पाञ्चजन्यमुपाध्माय सिंहनादं व्यनीनदत् ॥ ५० ॥

तं शस्त्रपूगैः प्रहरन्तमोजसा शाल्वं शरैः शौरिरमोघविक्रमः ।
विद्ध्वाऽच्छिनद् वर्म धनुः शिरोमणिं रथं च शत्रोर्गदया रुरोज ह ॥ ५१ ॥
तत्कृष्णहस्तेरितया विचूर्णितः पपात तोये गदया सहस्रधा ।
विसृज्य तं भूतलमास्थितो गदामुद्यम्य शाल्वोऽच्युतमभ्यगाद् द्रुतम् ॥ ५२ ॥
आधावतो भीमगदस्य बाहुं भल्लेन च्छित्त्वाऽथ रथाङ्गमद्भुतम् ।
वधाय शाल्वस्य लयार्कसन्निभं बिभ्रद् बभौ सार्क इवोदयाचलः ॥ ५३ ॥
जहार तेनैव शिरः सकुण्डलं किरीटयुक्तं पुरुमायिनो हरिः ।
वज्रेण वृत्रस्य यथा पुरन्दरो बभूव हाहेति वचस्तदा नृणाम् ॥ ५४ ॥

तस्मिन् निपतिते पापे सौभे चाब्धौ निपातिते । देवदुन्दुभयो नेदुर्ववर्षुः पुष्पवृष्टयः ॥ ५५ ॥
स्तूयमानो मुनिगणैः सूतमागधबन्दिभिः । आजगाम वृतः सैन्यैः पुरीं द्वारवतीं हरिः ॥ ५६ ॥

---

आब्रह्मसदनं ब्रह्मलोकपर्यन्तम् ॥४५,४६॥ सौभं नाम पुरम् ॥४७,४८॥ अनन्तैरनेकसंख्यैः। हरिः सिंहः ॥४९,५०॥ शिरोमणिं किरीटम् । रुरोज बिभेद । ह प्रसिद्धम् । 'शतं सहस्रमयुतं नियुतं प्रयुतार्बुदे । न्यर्बुदं शङ्खवृन्दे च निखर्वं खर्वमर्बुदम्' इति यादवः ॥५१-५३॥ पुरुमायिनोऽनेकशतमायावतः ॥५४-५७॥

सम्प्रविश्य पुरीं रम्यां पताकाखण्डमण्डिताम् । अलङ्कृतामलङ्कारैः सिक्तसम्मृष्टचत्वराम् ॥ ५७ ॥
पूजितो यदुभिर्वृद्धैः पौरजानपदैस्तथा । रमयन् व्यष्टसाहस्रमहिषीः प्रेमविह्वलाः ।
उवास देवकीपुत्रः सानन्दं कुरुनन्दन ॥ ५८ ॥

॥ इति षडशीतितमोऽध्यायः ॥

## ॥ अथ सप्ताशीतितमोऽध्यायः ॥

### श्रीशुक उवाच

उपविष्टं सुधर्मायां कदाचित् क्षत्रियैर्वृतम् । विज्ञापयद्[१] वेत्रपाणिर्द्वाःस्थोऽभ्येत्य जनार्दनम् ॥१॥
शक्रप्रस्थाद् द्विजः कश्चिदागत्य द्वारि तिष्ठति । प्रवेशितव्यो वा देव न वेति यदुसत्तम ॥ २ ॥
प्रवेशयेति कृष्णेन द्वाःस्थेनोक्तेन सत्वरः । प्रवेशितः प्रणम्याह ब्राह्मणः पुरुषोत्तमम् ॥ ३ ॥
धर्मजो धार्तराष्ट्रेण मूढेनाधर्मचारिणा । अक्षैः पराजितो यातः सभार्यः सानुजो वनम् ॥ ४ ॥
ब्राह्मणेनोदितां वाणीमित्याकर्ण्य सुदुःश्रवाम् । क्रोधोद्विग्नमनास्तूर्णमुत्तस्थे हरिरासनात् ॥ ५ ॥
स रथं दारुकानीतमारुह्य सह सत्यया । महत्या सेनया सार्धं ययौ यत्र पृथासुताः ॥ ६ ॥
वने वसन्तं राजानं ब्राह्मणैः परिवारितम् । दृष्ट्वाऽनुशोचत्[२] सुभृशं सानुजं यदुनन्दनः ॥ ७ ॥

---

सानन्दम्[३] आनन्दसहितमित्यर्थे विषयानन्दो, न स्वरूपानन्द इत्यर्थः स्यात्, सोऽनुपपन्नः, 'विज्ञानमानन्दं ब्रह्म' इति श्रुतेः ॥ ५८ ॥

॥ इति श्रीमद्भागवतटीकायां विजयध्वजतीर्थकृतायां पदरत्नावल्यां दशमस्कन्धे उत्तरार्धे षडशीतितमोऽध्यायः ॥

नृगस्य कृकलासदेहान्मोक्षकरणमाहात्म्यं हरेर्ब्राह्मणप्रियत्वं चार्थवादरूपेण कथयत्यस्मिन्नध्याये । तत्रादौ युधिष्ठिरस्य राज्यभ्रंशेन वनवासनिमित्तं वक्तुमुपक्रमते– **उपविष्टमित्यादिना** ॥१,२॥

कृष्णेन प्रवेशयेत्युक्तेन द्वाःस्थेन प्रवेशितः ॥३,४॥ इति वाणीम् । सुष्ठु दुःश्रवां श्रोतुमशक्यां कर्णदुःसहामित्यर्थः ॥५,६॥ अनुशोचत् अन्वशोचत् । शुच प्रकाशे इति धातोः शोकं प्राकाशयत्, न तु सत्यशोकः ॥ ७ ॥

---

१. विज्ञापयद् व्यज्ञापयत् -स.   २. अन्वशोचदिति सुपठम् -स.
३. आनन्दसहितं यथा(भवति)तथा पूजितः -स.

व्यसनान्यनुभुक्तानि वर्णयित्वा परस्परम् । उषित्वा तत्र तां रात्रिं पाण्डवैः सह केशवः ॥ ८ ॥
हेतुवाक्यैः समाश्वास्य धर्मराजं युधिष्ठिरम् । भीमसेनार्जुनौ चैव यमौ च यदुनन्दनः ॥ ९ ॥
पाञ्चालीं द्रौपदीं साध्वीं सत्यभामासमन्वितः । आश्वास्यताननुज्ञाप्य ब्राह्मणांश्च सहस्रशः ॥१०॥
सुभद्रामभिमन्युं च रथमारोप्य माधवः । आजगाम वनाद् राजन् पुरीं द्वारवतीं प्रभुः ॥ ११ ॥
स प्रविश्य पुरीं दिव्यां पार्थविश्लेषदुर्मनाः । उवास पालयन् पृथ्वीं धर्मेणान्यांश्च कालयन् ॥ १२ ॥
एकदोपवनं राजन् जग्मुर्यदुकुमारकाः । विहर्तुं साम्बप्रद्युम्नचारुभानुगदादयः ॥ १३ ॥
क्रीडित्वा सुचिरं तत्र विचिन्वन्तः पिपासिताः । जलं निरुदके कूपे ददृशुः सत्त्वमद्भुतम् ॥ १४ ॥
कृकलासं गिरिनिभं वीक्ष्य विस्मितचेतसः । तस्य चोद्धरणे यत्नं चक्रुस्ते कृपयाऽन्विताः ॥१५॥
चर्मभिस्तं तथा पाशैर्बध्द्वा पतितमर्भकाः । नाशक्नुवन् समुद्धर्तुं कृष्णायाचख्युरुत्सुकाः ॥ १६ ॥
तत्र गत्वाऽरविन्दाक्षो भगवान् विश्वभावनः । वीक्ष्योज्जहार वामेन तं करेण स लीलया ॥ १७ ॥

स उत्तमश्लोककराभिमृष्टो विहाय सद्यः कृकलासरूपम् ।
सन्तप्तचामीकरचारुवर्णः स्वर्गोचितालङ्करणाम्बरस्रक् ॥ १८ ॥
भूत्वा मुकुन्दस्य पदारविन्दं ननाम मूर्ध्ना पतितो धरण्याम् ।
पप्रच्छ विद्वानपि तस्य कर्म जनेषु विख्यापयितुं मुकुन्दः ॥ १९ ॥

श्रीभगवानुवाच

कस्त्वं महाभाग वरेण्यरूपो देवोत्तमं त्वां गणयामि नूनम् ।
दशामिमां त्वं कतमेन कर्मणा सम्प्रापितो ह्यतदर्हः सुभद्रः ॥ २० ॥
आत्मानमाख्याहि विवित्सतां नो यन्मन्यसेऽङ्ग क्षममत्र वक्तुम् ॥ २१ ॥
इति स्म राजा सम्पृष्टः कृष्णेनानन्तमूर्तिना । प्रतीतः प्रणिपत्याह किरीटेनार्कवर्चसा ॥ २२ ॥

नृग उवाच

नृगो नाम नरेन्द्रोऽहमिक्ष्वाकुतनयः प्रभो । दानिष्वाख्यायमानेषु यदि ते कर्णमस्पृशम् ॥ २३ ॥

---

अनुभुक्तानि अनुभूतानि अन्योन्यव्यसनानि ॥८॥ हेतुवाक्यैरितिहासविषयैर्वचनैः ॥९॥

सत्यभामया द्रौपदीं समाश्वास्येत्यतः सत्यभामासमन्वित इत्युक्तम् ॥१०,११॥ अन्यान् भूकण्टकान् ॥१२,१३॥ विचिन्वन्तोऽन्वेषणं कुर्वन्तः ॥ सत्त्वं प्राणिनम् ॥ १४ ॥ कृकं लासयति नर्तयतीति कृकलासः । 'शिरःप्राग्रं कृकं विदुः' इति च ॥१५-२०॥ विवित्सतां ज्ञातुकामानाम् । यद् यदि ॥२१,२२॥ तव कर्णमस्पृशं तर्हि ज्ञातुं योग्य इत्यर्थः ॥ २३ ॥

किन्नु तेऽविदितं नाथ सर्वभूतात्मसाक्षिणः । कालेनाव्याहतदृशो वक्ष्येऽथापि तवाज्ञया ॥ २४ ॥
यावन्त्यः सिकता भूमेर्यावन्त्यो दिवि तारकाः । यावन्त्यो वर्षधाराश्च तावतीरददास्म गाः ॥२५॥

पयस्विनीस्तरुणीः शीलरूपगुणोपपन्ना कपिला हेमशृङ्गीः ।
न्यायार्जिता रूप्यखुराः सवत्सा दुकूलमालाभरणा ददावहम् ॥ २६ ॥
स्वलङ्कृतेभ्यो गुणशीलवद्भ्यः सीदत्कुटुम्बेभ्य ऋतव्रतेभ्यः ।
तपःश्रुतब्रह्मवदान्यवद्भ्यः प्रादां युवभ्यो द्विजपुङ्गवेभ्यः ॥ २७ ॥
गोभूहिरण्यायतनाश्वहस्तिनः कन्याः सदासीस्तिलरूप्यशय्याः ।
वासांसि रत्नानि परिच्छदान् रथान् इष्टं च यज्ञैश्चरितं च पूर्तैः ॥ २८ ॥

कस्यचिद् द्विजमुख्यस्य भ्रष्टा गौर्मम गोधने । संसृष्ट्वाऽविदुषा सा च मया दत्ता द्विजातये ॥२९॥
तां नीयमानां तत्स्वामी दृष्ट्वोवाच ममेति तम् । ममेति प्रतिग्राह्याह नृगो मे दत्तवानिति ॥३०॥
विप्रौ विवदमानौ मामूचतुः स्वार्थसाधकौ । भवान् दाताऽपहर्तेति तत् श्रुत्वा मेऽभवद् भ्रमः ॥
अनुनीतावुभौ विप्रौ धर्मकृच्छ्रं गतेन मे । गवां लक्षं प्रगृह्णीतां दास्याम्येषा प्रदीयताम् ॥ ३२ ॥
भवन्तावनुगृह्णीतां किङ्करस्याविजानतः । समुद्धरत मां कृच्छ्रात् पतन्तं निरयेऽशुचौ ॥ ३३ ॥
नान्यां प्रतीच्छे वै राजन्नित्युक्त्वा स्वाम्यपाक्रमत् । नान्यं गवामप्ययुतमिच्छामीत्यपरो ययौ ॥
ततोऽहं कालयोगेन मृतः परममायया । एतस्मिन्नन्तरे याम्यैर्दूतैर्नीतो यमक्षयम् ॥ ३५ ॥
यमेन पृष्टस्तत्राहं देवदेव जगत्पते । त्वं पूर्वमशुभं भुङ्क्ष्व उताहो नृपते शुभम् ॥ ३६ ॥
नान्तं दानस्य धर्मस्य पश्य लोकांश्च भास्वतः । पूर्वमेवाशुभं भुञ्जे इति प्राह पतेति सः ॥ ३७ ॥

---

अन्यथाऽपि ज्ञातुं शक्य इत्याह– **किन्विति** ॥ २४ ॥

सिकता रजांसि । अददास्म अददाम् । दा दाने इति धातुः[१] । सुडागमश्छान्दसः ॥२५-२८॥
भ्रष्टा अभ्यस्तदेशं विहायान्यदेशं गता । संसृष्टा सङ्कुलिता । अविदुषा अजानता ॥ २९ ॥
तस्या गोः स्वामी पूर्वतनो नाथः । अन्यः प्रतिग्रहीता ममेति प्रतिगृह्याब्रवीत् ॥ ३० ॥

विवदमानौ विप्रतिपद्यमानौ । भासनोपसम्भाषाज्ञानयत्नविमत्युपमन्त्रणेषु वद इत्यत आत्मनेपदम् । भ्रमः सम्भ्रमः ॥ ३१-३३ ॥ अपाक्रमदपगतवान् ॥ ३४ ॥ याम्यैर्यमस्य विद्यमानैः ॥३५॥ भुंक्ष्व भोक्ष्यसे ॥३६॥ तव दानस्य धर्मस्यान्तं नास्ति तज्जन्यलोकान् पश्येत्युक्तोऽहं प्रागशुभं भुञ्जे इत्यवदम् । इत्युक्ते स यमस्तर्हि पतेति मां प्राह ॥३७-३९॥

---

१. दद दाने इति धातुः -ग.

तावदद्राक्षमात्मानं कृकलासं पतन् प्रभो । ब्रह्मण्यस्य वदान्यस्य तव दासस्य केशव ॥ ३८ ॥
स्मृतिर्नाद्यापि विध्वस्ता तव सन्दर्शनार्थिनः । देव देव जगन्नाथ गोविन्द पुरुषोत्तम ॥ ३९ ॥
नारायण हृषीकेश पुण्यश्लोकाच्युताव्यय । अनुजानीहि मां कृष्ण यातुं देवगतिं प्रभो ॥ ४० ॥
यत्र क्वापि सतश्चेतो भूयान्मे त्वत्पदास्पदम् ॥ ४१ ॥
नमस्ते सर्वभावाय ब्रह्मणेऽनन्तशक्तये । कृष्णाय वासुदेवाय गोपानां पतये नमः ॥ ४२ ॥
इत्युक्त्वा तं परिक्रम्य पादौ स्पृष्ट्वा स्वमौलिना । अनुज्ञातो विमानाग्र्यमारुहत् पश्यतां नृणाम् ॥
कृष्णः परिजनं प्राह भगवान् देवकीसुतः । ब्रह्मण्यदेवो धर्मात्मा राजन्याननुशिक्षयन् ॥ ४४ ॥
दुर्जरं बत ब्रह्मस्वं भुक्तमग्नेर्मनागपि । तेजीयसोऽपि किमुत राज्ञामीश्वरमानिनाम् ॥ ४५ ॥
नाहं हालाहलं मन्ये विषं यस्य प्रतिक्रिया । ब्रह्मस्वं हि विषं प्रोक्तं नास्य प्रतिविधिर्भुवि ॥ ४६ ॥
हिनस्ति विषमत्तारमग्निरद्भिः प्रशाम्यति । कुलं समूलं दहति ब्रह्मस्वारणिपावकः ॥ ४७ ॥
ब्रह्मस्वं दुरनुज्ञातं भुक्तं हन्ति त्रिपूरुषम् । प्रसह्यातिबलाद् भुक्तं दशपूर्वान् दशावरान् ॥ ४८ ॥
राजानो राजलक्ष्म्याश्च नात्मपातं प्रचक्षते । निरये येऽभिमन्यन्ते ब्रह्मस्वं साधु बालिशाः ॥ ४९ ॥
गृह्णन्ति यावतः पांसून् रुदतामश्रुबिन्दवः । विप्राणां हृतवित्तानां वदान्यानां कुटुम्बिनाम् ॥५०॥
राजानो राजकुल्याश्च तावन्तोब्दा निरङ्कुशाः । नरके तु विपच्यन्ते ब्रह्मदायापहारिणः ॥ ५१ ॥
स्वदत्तां परदत्तां वा ब्रह्मवृत्तिं हरेत यः । षष्टिवर्षसहस्राणि विष्ठायां जायते कृमिः ॥ ५२ ॥
न मे ब्रह्मधनं भूयाद् यज्जग्ध्वाऽल्पायुषो नृपाः । पराजिताश्च्युताः स्थानाद् भवन्त्युद्वेजिता नृपाः॥
विप्रं कृतागसमपि नैव द्रुह्यत मामकाः । घ्नन्तं बहु शपन्तं वा नमस्कुरुत नित्यशः ॥ ५४ ॥

---

देवगतिं स्वर्गम् ॥ ४० ॥ यत्र क्वापि योनिविशेषे सतः सम्भवतः ॥ ४१ ॥ सर्वभावाय सम्पूर्णैश्वर्याय, सर्वोत्पादनकर्त्रे वा, अखण्डलीलाय वा ॥४२,४३॥ परिजनं परित उपासमानं जनम् ॥ ४४ ॥

अग्नेरपि दुर्जरं जीर्णीकर्तुमशक्यम् । मनागल्पमपि । किं पुनरन्यस्येत्यर्थः ॥ ४५ ॥ प्रतिविधिः प्रतिक्रिया नास्ति ॥ ४६ ॥

ब्रह्मस्वाख्यारणिजन्यपावकः ॥ ४७ ॥ दुरनुज्ञातमनुज्ञां विना भुक्तमननुज्ञातं वा । प्रसह्य अविचार्य ॥ ४८ ॥

राज्यलक्ष्म्या राजश्रियः पातं निरये आत्मपातं च न प्रचक्षते न पश्यन्ति । ये ब्रह्मस्वं साधु मन्यन्ते ते बालिशाः ॥ ४९-५२ ॥ यद् ब्रह्मस्वं जग्ध्वाऽल्पायुषो भवन्ति ॥ ५३ ॥ न द्रुह्यत द्रोहं न कुरुत ॥ ५४-५६ ॥

यथाऽहं प्रणमे विप्रान् सर्वकालं समाहितः । तथा नमत यूयं च योऽन्यथा मे स दण्डभाक् ॥५५॥
ब्राह्मणार्थो ह्यपहृतो हर्तारं पातयत्यधः । अजानन्तमपि ह्येनं नृगं ब्राह्मणगौरिव ॥ ५६ ॥
एवं विश्राव्य भगवान् मुकुन्दो द्वारकौकसः । पावनः सर्वलोकानां विवेश निजमन्दिरम् ॥ ५७ ॥

श्रीशुक उवाच

सद्भिः समागमो राजन् कदाचिन्नाफलो भवेत् । विमुक्तो नरकाद् राजा नृगः साधुसमागमात् ॥
साधूनां दर्शनं स्पर्शं [१] कीर्तनं स्मरणं तथा । तीर्थानामिव पुण्यानां सर्वमेव हि पावनम् ॥ ५९ ॥
एतत् श्रुत्वा त्वया सन्तः सदोपास्याः परन्तप । ब्रह्मस्वं नैव हर्तव्यं यदीच्छसि परां गतिम् ॥६०॥

॥ इति सप्ताशीतितमोऽध्यायः ॥

---

## ॥ अथ अष्टाशीतितमोऽध्यायः ॥

श्रीशुक उवाच

बलभद्रः कुरुश्रेष्ठ भगवान् रथमास्थितः । सुहृद्दिदृक्षुरुत्कण्ठः प्रययौ नन्दगोकुलम् ॥ १ ॥
परिष्वक्तश्चिरोत्कण्ठैर्गोपैर्गोपीभिरेव च । रामोऽभिवाद्य पितरावाशीर्भिरभिनन्दितः ॥ २ ॥
चिरं नः पाहि दाशार्ह सानुगो जगदीश्वर । इत्यारोप्याङ्कमालिङ्ग्य नेत्रैः सिषिचतुर्जलैः ॥ ३ ॥
गोपवृद्धांश्च विधिवद् यविष्ठैरभिवादितः । यथावयो यथासख्यं यथासम्बन्धमात्मनः ॥ ४ ॥

---

सर्वलोकानां पावनः शुद्धिकर्ता ॥ ५७-६० ॥

॥ इति श्रीमद्भागवतटीकायां विजयध्वजतीर्थकृतायां पदरत्नावल्यां दशमस्कन्धे उत्तरार्धे सप्ताशीतितमोऽध्यायः ॥

---

भगवत्सितकेशाविष्टस्य शेषावतारस्य बलभद्रस्य हरिमाहात्म्याविनाभूतं माहात्म्यं वर्णयत्यनेन प्रारिप्सितेनाध्यायत्रयेण । तत्र प्रथमे यमुनामदहरणलक्षणं विक्रमं वक्तुं बलस्य गोकुलगमनं वक्ति । द्वितीये द्विविदवधलक्षणं तृतीये कौरवगर्वनिर्वापणार्थं तत्पुराकर्षणलक्षणं वक्तुं दुर्योधनसुताहरणं वक्ति । पितरौ यशोदानन्दगोपौ ॥ १-२ ॥

इति समाप्ताभिवादनादिकर्माणं तं राममङ्कमारोप्य नेत्रैश्चक्षुर्नाडीनिर्गतैः । 'नेत्रं नाड्यां तरोर्मूले' इति यादवः ॥ ३ ॥ यविष्ठैः कनिष्ठैः ॥ ४ ॥

---

१. स्पर्शः -स. स्पर्शमिति पाठे लिङ्गाशिष्यता शरणम् -स.

**तमुपेत्याथ गोपाला हास्यहस्तग्रहादिभिः। विश्रान्तं सुखमासीनं पप्रच्छुः पर्युपासिताः ॥ ५ ॥**

**पृष्टश्चाकथयत् स्वेषु प्रेमगद्गदया गिरा। कृष्णे कमलपत्राक्षे संन्यस्ताखिलराधसः ॥ ६ ॥**

**कच्चिन्नो बान्धवा राम सर्वे कुशलमासते। कच्चित् स्मरथ नो राम यूयं दारसुतान्विताः ॥ ७ ॥**

**दिष्ट्या कंसो हतः पापो दिष्ट्या मुक्ताः सुहृज्जनाः। निहत्य निर्जित्य रिपून् दिष्ट्या दुर्गं समास्थिताः ॥**

**गोप्यो हसन्त्यः पप्रच्छू रामसन्दर्शनादृताः। कच्चिदास्ते सुखं कृष्णः पुरस्त्रीजनवल्लभः ॥ ९ ॥**

**कच्चित् स्मरति वा बन्धून् पितरं मातरं च सः। अपि वा स्मरतेऽस्माकमनुसेवां महाभुजः ॥१०॥**

**मातरं पितरं भ्रातॄन् पतीन् पुत्रान् स्वसॄरपि। यदर्थे हिन्म दाशार्ह दुस्त्यजान् स्वजनान् प्रभो ॥**

**ता नः सद्यः परित्यज्य गतः सञ्छिन्नसौहृदः। कथं नु तादृशं स्त्रीभिर्न श्रद्धीयेत भाषितम् ॥१२॥**

**कथं नु गृह्णन्त्यनवस्थितात्मनो वचः कृतघ्नस्य मुधा परस्त्रियः।**
**कृष्णस्य वैचित्रकथस्य सुन्दरस्मितावलोकोच्छ्वसितस्मरातुराः ॥ १३ ॥**

**किं नस्तत्कथया गोप्यः कथाः कथयतापराः। यात्यस्माभिर्विना कालो यदि तस्य तथैव नः ॥१४॥**

---

हास्येन मन्दस्मितेन। हस्तग्रहेण। आदिशब्देन परिरम्भणादिकं गृह्यते ॥ ५ ॥ संन्यस्ताखिलराधसः समर्पितसमस्तसम्पदः ॥ ६-८ ॥ रामसन्दर्शनेनादृता जातबहुमानाः ॥ ९ ॥

अस्माकमनुसेवां स्मरते नवा ॥ १० ॥ यस्य कुष्णस्यार्थे दृढस्नेहनिमित्तं मात्रादीन् स्वजनान् हिन्म अत्याक्ष्म। छान्दसप्रयोगः ॥ ११ ॥

स्त्रीभिस्तादृशं गुडजिह्विकालक्षणं भाषितं कथं नु न श्रद्धीयेत श्रद्धेयमेवेत्यर्थः ॥ १२ ॥ अस्मदन्या नैव श्रद्धधत इत्याहुः– **कथमिति**। परस्त्रियोऽस्मदन्यस्त्रियः। अन्यत्र उत्तमस्त्रियः। अनवस्थितात्मनश्चञ्चलमनसः। अन्यत्र सङ्गरहितस्य। कृतघ्नस्यानुपकारिणः। अन्यत्र कारिणो विनाशिनः। कृष्णस्य पुमधीनस्य। अन्यत्र पूर्णानन्दस्य। मुधा वचः कथं न गृह्णन्ति। अन्यत्र वचो मुधा कथं न गृह्णन्तीत्यर्थः। वैचित्रा नानाविधाः कथाः वाक्यप्रबन्धा यस्य स तथा तस्य। उभयत्र समम्। कीदृश्यः? सुन्दरस्मितावलोकेनोच्छ्वसितेनोद्धतेन स्मरेणातुराः। अन्यत्र निरन्तरस्मरणपरवत्यः ॥ १३ ॥

हरये प्रेम्णा कम्पन्त्यो मिथो जल्पन्ति– **किं न इति**। हे गोप्यः अपराः कथाः कथयत। तस्य कृष्णस्य कथया नः किं प्रयोजनम्? तस्य कृष्णस्य यद्यस्माभिर्विना कालो याति तथा तर्हि तेन विना नः कालोऽपि यातीत्यन्वयः ॥ १४ ॥

श्रीशुक उवाच

इति प्रहसितं शौरेर्जल्पितं चानुवीक्षितम् । गतिं प्रेमपरिष्वङ्गं स्मरन्त्यो रुरुदुः स्त्रियः ॥ १५ ॥
सङ्कर्षणस्ताः कृष्णस्य सन्देशैर्हृदयङ्गमैः । सान्त्वयामास भगवान् नानानुनयकोविदः ॥ १६ ॥
द्वौ मासौ तत्र चावात्सीन्मधुं माधवमेव च । रामः क्षपासु भगवान् गोपीनां रतिमावहन् ॥१७॥
पूर्णचन्द्रकरामृष्टे कौमुदीगन्धवायुना । यमुनोपवने रेमे सेविते स्त्रीगणैर्वृतः ॥ १८ ॥
वरुणप्रेषिता देवी वारुणी वृक्षकोटरात् । पतन्ती तद्वनं सर्वं सौरभेणाध्यवासयत् ॥ १९ ॥
तं गन्धं मधुधाराया वायुनोपहृतं बलः । आघ्रायोपगतस्तत्र ललनाभिः पपौ समम् ॥ २० ॥
नेदुर्दुन्दुभयो व्योम्नि ववृषुः कुसुमैर्मुदा । गन्धर्वा मुनयो रामं तद्वीर्यैरीडिरे मुदा ॥ २१ ॥
उपगीयमानचरितो वनिताभिर्हलायुधः । वनेषु व्यचरत् क्षीबो माहेन्द्र इव वारणः ॥ २२ ॥
शुभैककुण्डलो मत्तो वैजयन्त्या च मालया । बिभ्रत् स्मितमुखाम्भोजं स्वेदप्रालेयभूषितम् ॥२३॥
स चाजुहाव यमुनां जलक्रीडार्थमीश्वरः । निजवाक्यमनादृत्य मत्त इत्यापगां बलः ॥ २४ ॥
अनागतां हलाग्रेण कुपितो विचकर्ष ह । पापे त्वं मामवज्ञाय यन्नायासि मयाऽऽहुता ॥ २५ ॥
नेष्ये त्वां लाङ्गलाग्रेण शतधा कामचारिणीम् । एवं निर्भर्त्सिता भीता यमुना यदुनन्दनम् ॥२६॥
उवाच चकिता वाचं पतित्वा पादयोर्नृप ॥ २७ ॥

यमुनोवाच

राम राम महाबाहो न जाने तव विक्रमम् । यस्यैकांशेन विधृता जगती जगतः पते ॥ २८ ॥
परं भावं भगवतो भगवन् मामजानतीम् । मोक्तुमर्हसि विश्वात्मन् प्रपन्नां भक्तवत्सल ॥ २९ ॥
ततो व्यमुञ्चद् भगवान् याचितो यमुनां बलः । विजगाह जलं स्त्रीभिः करेणुभिरिवेभराट् ॥३०॥
कामं विहृत्य सलिलादुत्तीर्णायासिताम्बरे । भूषणानि विचित्राणि ददौ कान्तिमतीं स्रजम्[१] ॥३१॥

---

शुकः स्त्रीणां धैर्यशिथिलं वचनं वज्रधारोपममिति लोकसिद्धमित्याशयेनाह– इतीति । इत्थमुक्त्वा शौरेः कृष्णस्य प्रहसितादि च स्मरन्त्यो रुरुदुरित्यन्वयः ॥ १५,१६ ॥

मधुं माधवं वसन्तर्तुम् ॥ १७ ॥ कौमुदी कुमुद्वती तस्या गन्धेन सम्पृक्तेन वायुना सेविते ॥ १८ ॥ अध्यवासयत् संस्कारोपेतमकरोत् ॥ १९,२० ॥ ईडिरे तुष्टुवुः ॥ २१ ॥

क्षीबो मद्यपानमत्तः ॥ २२ ॥ स्वेदप्रालेयेन घर्महिमजलेन भूषितम् ॥ २३,२४ ॥ हे पापे आहुता आहूता ॥ २५-२८ ॥ भावमभिप्रायं माहात्म्यं वा ॥ २९,३० ॥

---

१. ददौ कान्तिः शुभां स्रजमित्यपि पाठः । तत्र कान्तिर्लक्ष्मीः । यथोक्तं विष्णुपुराणे– 'वरुणप्रहितां चास्मै मालामम्लानपङ्कजाम् । समुद्राभे तथा वस्त्रे नीले लक्ष्मीरयच्छत' इति -स.

वसित्वा वाससी नीले मालामाधाय काञ्चनीम् । रेजे स्वलङ्कृतस्ताभिर्महेन्द्र इव वारणः ॥ ३२ ॥
अद्यापि दृश्यते राजन् यमुनाऽऽकृष्टवर्त्मना । बलस्यानन्तवीर्यस्य वीर्यं सूचयतीव हि ॥ ३३ ॥
एवं सर्वा निशा याता एकेव रमतो व्रजे । रामस्याक्षिप्तचित्तस्य माधुर्यैर्व्रजयोषिताम् ॥ ३४ ॥

॥ इति अष्टाशीतितमोऽध्यायः ॥

## ॥ अथ एकोननवतितमोऽध्यायः ॥

राजोवाच

भूयोऽहं श्रोतुमिच्छामि रामस्याद्भुतकर्मणः । अनन्तस्याप्रमेयस्य यदन्यत् कृतवान् प्रभुः ॥ १ ॥

श्रीशुक उवाच

नरकस्य सखा कश्चिद् द्विविदो[1] नाम वानरः। सुग्रीवसचिवः सोऽथ भ्राता मैन्दस्य वीर्यवान् ॥ २ ॥
सख्युः सोऽपचितिं कुर्वन् वानरो राष्ट्रविप्लवम् । पुरग्रामाकरान् घोषानदहद् वह्निमुत्सृजन् ॥ ३ ॥
क्वचित् स शैलानुत्पाट्य तैर्देशान् समचूर्णयत् । आनर्तान् सुतरामेत्य यत्रास्ते शत्रुहा हरिः ॥ ४ ॥
क्वचित् समुद्रमध्यस्थो दोर्भ्यामुद्धृत्य तज्जलम् । देशान् नागायुतप्राणो वेलाकूलानमज्जयत् ॥ ५ ॥
आश्रमानृषिमुख्यानां कृत्वा भग्नवनस्पतीन् । अदूषयच्छकृन्मूत्रैरग्नीन् वैतानिकान् खलः ॥ ६ ॥
पुरुषान् योषितो दृप्तः क्ष्माभृद्द्रोणीगुहासु सः । निक्षिप्य चाप्यधाच्छृङ्गैः पेशस्कारीव कीटकम् ॥७॥
तं देशं विप्रकुर्वन् वै धर्षयंश्च कुलस्त्रियः । श्रुत्वा सुललितं गीतं गिरिं रैवतकं ययौ ॥ ८ ॥

---

असिताम्बरे नीलवस्त्रे ददौ, यमुनेति शेषः ॥ ३१,३२ ॥ आकृष्टेन वर्त्मना मार्गेण दृश्यते ॥ ३३ ॥ एका निशेव । व्रजस्त्रीणां माधुर्यैः सौन्दर्यैः कर्णरम्यवचनैराक्षिप्तमाकृष्टं चित्तं यस्य स तथा तस्य ॥ ३४ ॥

॥ इति श्रीमद्भागवतटीकायां विजयध्वजतीर्थकृतायां पदरत्नावल्यां दशमस्कन्धे उत्तरार्धे अष्टाशीतितमोऽध्यायः ॥

अनन्तस्य शेषस्य । एन विष्णुना प्रमेयस्य ज्ञेयस्य ॥ १,२ ॥

सख्युर्नरकस्यापचितिं निष्कृतिम् ॥ ३,४ ॥ वेलया समुद्रजलाभिवृध्या कूलान् नीचभूमीः। समुद्रतीरनिकटवर्तिदेशाननाशयदित्यर्थः ॥ ५ ॥ वैतानिकान् यज्ञसम्बन्धिनः ॥ ६ ॥ क्ष्माभृद्द्रोणीगुहासु पर्वतनितम्बगुहासु ॥ ७-९ ॥

---

१. द्विविदो विविद इति नामनी । तत्र यथा वृत्ताविच्छित्ति ते ज्ञेये -स.

तत्रापश्यद् यदुपतिं रामं पुष्करमालिनम्। सुदर्शनीयसर्वाङ्गं ललनायूथमध्यगम्॥ ९ ॥
गायन्तं मदिरां पीत्वा मदविह्वललोचनम्। विभ्राजमानं वपुषा प्रभिन्नमिव वारणम्॥ १० ॥
दुष्टः शाखामृगः शाखामारूढः कम्पयन् द्रुमान्। चक्रे किलकिलाशब्दमात्मानं सम्प्रदर्शयन्॥११॥
तस्य धाष्टर्चं कपेर्वीक्ष्य तरुण्यो जातिचापलम्। हास्यप्रिया विजहसुर्बलदेवपरिग्रहाः॥ १२ ॥
ता हेलयामास कपिर्भ्रूक्षेपैः सम्मुखादिभिः। सन्दर्शयन् गुदं तासां रामस्य च निरीक्षतः॥ १३ ॥
तं ग्राव्णा प्राहरत् क्रुद्धो बलः प्रहरतां वरः। स वञ्चयित्वा ग्रावाणं मदिराकलशं कपिः॥ १४ ॥
गृहीत्वा हेलयामास धूर्तस्तं कोपयन् भृशम्। भृशं निर्भिद्य कलशं वासांस्यास्फालयन् बलात्॥१५॥
कदर्थीकृत्य बलवान् विप्रचक्रे मदोद्धतः। तस्याप्यविनयं दृष्ट्वा देशांश्च तदुपद्रुतान्॥ १६ ॥
क्रुद्धो मुसलमादत्त हलं चारिजिधांसया। द्विविदोऽपि महावीर्यः शैलपुत्पाट्य पाणिना॥ १७ ॥
अभ्येत्य तरसा तेन बलं मूर्धन्यताडयत्। तं तु सङ्कर्षणो मूर्ध्नि पतन्तमचलं रुषा॥ १८ ॥
प्रतिजग्राह भगवान् मुसलेनाहनच्च तम्। मुसलाहतमस्तिष्को विरेजे रक्तधारया॥ १९ ॥
गिरिर्यथा गैरिकया प्रहारं नान्वचिन्तयत्। पुनरन्यं समुत्पाट्य कृत्वा निष्पत्रमोजसा॥ २० ॥
तेनाहनत् सुसंक्रुद्धस्तं बलः शतधाऽरुजत्। ततोऽन्यमुत्पाट्य जघ्ने तं चापि शतधाऽच्छिनत्॥२१॥
एवं युद्ध्यन् भगवता भग्नेभग्ने पुनः पुनः। आकृष्य सर्वतो वृक्षान् निर्वृक्षमकरोद् वनम्॥ २२ ॥
ततोऽमुञ्चच्छिलावर्षं बलस्योपर्यमर्षितः। तत् सर्वं चूर्णयामास लीलया मुसलायुधः॥ २३ ॥
स बाहू तालसङ्काशौ मुष्टीकृत्य कपीश्वरः। आसाद्य रोहिणीपुत्रं दोर्भ्यां वक्षस्यरूरुजत्॥ २४ ॥
यादवेन्द्रोऽपि तं दोर्भ्यां त्यक्त्वा मुसललाङ्गलौ। जत्रावताडयत् क्रुद्धः सोऽपतद्[1] रुधिरं वमन्॥२५॥
चकम्पे तेन पतता सकण्टकवनस्पतिः[2]। पर्वतो नृपशार्दूल वायुना नौरिवाम्भसि॥ २६ ॥
जयशब्दो नमःशब्दः साधुसाध्विति चाम्बरे। सुरसिद्धमुनीन्द्राणामासीत् कुसुमवर्षिणाम्॥२७॥
एवं निहत्य द्विविदं जगद्व्यतिकरावहम्। संस्तूयमानो भगवान् जनैः स्वपुरमाविशत्॥ २८ ॥

॥ इति एकोननवतितमोऽध्यायः ॥

---

प्रभिन्नं मदजलस्राविणम्॥ १०,११ ॥ कपिजातिचापलं दृष्ट्वा॥ १२ ॥

हेलयामास अवज्ञाताश्चक्रे। सम्मुखादिभिः पुरः स्थित्यादिभिः॥ १३-१८ ॥ गैरिकया गिरिधातुरसधारया॥ १९,२० ॥ अरुजत् चूर्णयामास॥ २१-२५ ॥ सकण्टका वनस्पतयो यस्मिन् स तथा॥२६,२७॥ जगद्व्यतिकरं नाशमावहति करोतीति जगद्व्यतिकरावहस्तम्॥२८॥

॥ इति श्रीमद्भागवतटीकायां विजयध्वजतीर्थकृतायां पदरत्नावल्यां दशमस्कन्धे उत्तरार्धे एकोननवतितमोऽध्यायः ॥

---

१. अपतत् पपात मृत इति यावत् -स. २. सकण्टका वनस्पतयो यस्मिन् स पर्वतश्चकम्पे -स.

## ॥ अथ नवतितमोऽध्यायः ॥

### श्रीशुक उवाच

दुर्योधनसुतां राजन् लक्षणां समितिञ्जयः । स्वयंवरस्थामहरत् साम्बो जाम्बवतीसुतः ॥ १ ॥
कुरवः कुपिता ऊचुर्दुर्विनीतोऽयमर्भकः । कदर्थीकृत्य नः कन्यामकामामहरद् बलात् ॥ २ ॥
बध्नीतैनं दुर्विनीतं किं करिष्यन्ति वृष्णयः । येऽस्मत्प्रसादोपचिता दत्तां नो भुञ्जते महीम् ॥ ३ ॥
निगृहीतं सुतं श्रुत्वा यद्येष्यन्तीह वृष्णयः । भग्नदर्पाः शमं यान्ति शीर्णदन्ता इवाहयः ॥ ४ ॥
इति कर्णः समालोक्य[1] भूरिश्रवसुयोधनौ । सदुःशासनगान्धारौ दुर्मन्त्रैकान्तशीलिनौ ॥ ५ ॥
एतेऽतिक्रम्य विदुरं गान्धारीं च यशस्विनीम् । साम्बमारेभिरे बद्धुं कुरुवृद्धैरसङ्गताः ॥ ६ ॥
दृष्ट्वाऽनुधावतः साम्बो धार्तराष्ट्रान् महारथः । प्रगृह्य रुचिरं चापं तस्थौ सिंह इवैकलः ॥ ७ ॥
ते तं जिघृक्षवः क्रुद्धास्तिष्ठतिष्ठेति वादिनः । आसाद्य धन्विनो बाणैः कर्णमुख्याः समाकिरन् ॥८॥
सोऽतिबद्धः कुरुश्रेष्ठ कुरुभिर्यदुनन्दनः । नामृष्यत् तत्परिभवं दण्डाहत इवोरगः ॥ ९ ॥
विस्फार्य सुमहच्चापं सर्वान् विव्याध सायकैः । कर्णादीन् स हयाग्रण्यांस्तावद्भिर्युगपत् पृथक् ॥१०॥
चतुर्भिश्चतुरो वाहानेकैकेन च सारथीन् । रथिनश्च महेष्वासास्तस्य तत् तेऽभ्यपूजयन् ॥ ११ ॥
तं तु ते विरथं चक्रुश्चत्वारश्चतुरो हयान् । एकस्तु सारथिं जघ्ने चिच्छेदान्यः शरासनम् ॥ १२ ॥

---

समितिशब्देन सङ्गरसभे गृह्येते, उभे अपि शस्त्रेण वाचा जयतीति समितिञ्जयः । खश्प्रत्ययो मुमागमोऽनुस्वारश्च । 'समितिः सङ्गरसभयोः' इत्यभिधानम् ॥ १ ॥

अकामां कुमारकामविधुराम् ॥ २ ॥ अस्मत्प्रसादोपचिताः संवर्धिताः अत एव नो महीं भुञ्जते । दत्ताम्, अस्माभिरिति शेषः ॥ ३ ॥ निगृहीतं बद्धम् । शीर्णदन्ता भग्नदन्ताः ॥४,५॥

एते इत्यवलोक्य साम्बं बद्धुमारेभिरे । असङ्गता विनाभूताः ॥६॥ एकलोऽपुरुषद्वितीयः ॥७॥ जिघृक्षवः ग्रहीतुकामाः ॥ ८,९ ॥ हयानामग्रण्यमग्रणीभवं कर्म तेन सह वर्तन्त इति सहयाग्रण्याः, तान् । यावन्तस्तावद्भिः शरैः ॥ १० ॥

एतदेव विवृणोति– **चतुर्भिरिति** । साम्बस्य तत् कर्म सन्दृश्य कुरवः किमकुर्वन्? अत्राह– **महेष्वासा इति** ॥ ११ ॥

अत्र साम्बस्य पराजयो नास्तीति भावेनाह– **चत्वार इति** ॥ १२ ॥

---

१. भूरिश्रवश्शब्दपर्यायोऽयमकारान्तो भूरिश्रवशब्दः -स.

ते तथा विरथं कृत्वा कृच्छ्रेण कुरवो युधि । कुमारं गृह्य कन्यां च स्वपुरं जयिनोऽविशन् ॥१३॥
तत् श्रुत्वा नारदोक्तेन राजन् सञ्जातमन्यवः । कुरून् प्रत्युद्यमं चक्रुरुग्रसेनप्रचोदिताः ॥ १४ ॥
सान्त्वयित्वा तु तान् रामः सङ्क्रुद्धान् वृष्णिपुङ्गवान् । नैच्छत् कुरूणां वृष्णीनां कलिं कलहशङ्कितः॥
जगाम हास्तिनपुरं रथोनादित्यवर्चसा । ब्राह्मणैः कुलवृद्धैश्च वृतश्चन्द्र इव ग्रहैः ॥ १६ ॥
गत्वा गजाह्वयं रामो बाह्योपवनमाश्रितः । उद्धवं प्रेषयामास धृतराष्ट्राय शान्तये ॥ १७ ॥
सोऽभिवाद्याम्बिकापुत्रं भीष्मं द्रोणं च बाह्लिकम् । दुर्योधनं च विधिवदब्रवीद् राममागतम् ॥१८॥
तेऽपि प्रीताः समाकर्ण्य प्राप्तं रामं सुहृत्तमम् । तमर्चयित्वाऽभिययुः सर्वे मङ्गलपाणयः ॥ १९ ॥
तं सङ्गम्य यथान्यायं गामर्घ्यं च न्यवेदयन् । तेषां ये तत्प्रभावज्ञाः प्रणेमुः शिरसा बलम् ॥ २० ॥
बन्धून् कुशलिनः श्रुत्वा पृष्ट्वा शिवमनामयम् । परस्परमथो रामो बभाषेऽविक्लवं वचः ॥ २१ ॥
उग्रसेनः क्षितीशेशो यद् व आज्ञापयत् प्रभुः । तदव्यग्रधियः श्रुत्वा कुरुध्वं मा विलम्बितम् ॥२२ ॥
यद् यूयं बहवस्त्वेकं जित्वाऽधर्मेण धार्मिकम् । अबध्नीताथ तन्मृष्ये बन्धूनामिष्टकाम्यया ॥२३॥
वीर्यशौर्यबलोन्नद्धमात्मशक्तिसमं वचः । कुरवो बलदेवस्य निशम्योचुः प्रकोपिताः ॥ २४ ॥
अहो महच्चित्रमिदं कालगत्या दुरत्ययम् । आरुरुक्षत्युपानद् वै शिरो मुकुटसेवितम् ॥ २५ ॥
एते यौनेयसम्बन्धाः सहशय्यासनाशनाः । वृष्णयस्तुल्यतां नीता अस्मद्दत्तनृपासनाः ॥ २६ ॥
चामरव्यजने शङ्खमातपत्रं च पाण्डुरम् । किरीटमासनं मह्यं भुञ्जन्त्यस्मदुपेक्षया ॥ २७ ॥

अलं यदूनां नरदेवलाञ्छनैर्दातृप्रतीपैः फणिनामिवामृतैः ।
येऽस्मत्प्रसादोपचिता हि यादवा आज्ञापयन्त्यद्य गतत्रपा बत ॥ २८ ॥

---

गृह्य गृहीत्वा । जयिनो जेतुकामा एव न तु लब्धजया इति तात्पर्यार्थः ॥ १३ ॥ नारदोक्तेन नारदवचनेन ॥ १४ ॥ कलिं विरोधम् ॥ १५-२० ॥ परस्परं शिवं सुखम् । अनामयमारोग्यम् । अविक्लवं धाष्टर्चयुक्तम् ॥ २१,२२ ॥ अधर्मेणावध्नीत बन्धनमकार्ष्ट । मृष्ये सहेयम् ॥ २३,२४ ॥ आरुरुक्षति आरोढुमिच्छति ॥ २५ ॥

यौनेयेन योनिनिमित्तेन सम्बन्धो येषान्ते । ततः किम्? अत्राह– **सहेति** ॥ २६ ॥

अस्मद्दत्तेत्युक्तं विवृणोति– **चामरेति** । मह्यं महनीयमासनं भुञ्जन्ति भजन्ति, अन्योपद्रवमन्तरेण रक्षन्ति । भुजोऽनवन इति पाणिनिः ॥ २७ ॥

दातॄणामस्माकं प्रतीपैर्विरोधिभिः । दत्तैरमृतैः क्षीरादिरसैर्विषात्मना परिणतैर्दातॄणां मरणप्रदत्वेन प्रतीपैः ॥ २८ ॥

कथमिन्द्रोऽपि कुरुभिर्भीष्मद्रोणार्जुनादिभिः । अदत्तमवरुन्धीत सिंहग्रस्त इवोरणः ।। २९ ।।

श्रीशुक उवाच

जन्मबन्धुश्रियोन्नद्धमदास्ते भरतर्षभ । आश्राव्य रामं दुर्वाक्यैरटव्यां पुर आविशन् ।। ३० ।।
दृष्ट्वा कुरूणां दौःशील्यं श्रुत्वा वाच्यातिवाच्यताम् । अवोचत् कोपसंरब्धो दुष्प्रेक्ष्यः प्रहसन् मुहुः ।।
नूनं नाम मदोन्नद्धाः शान्तिं नेच्छन्त्यसाधवः । तेषां हि प्रशमो दण्डः पशूनां लगुडो यथा ।।३२।।
अहो यदून् सुसंरब्धान् कृष्णं च कुपितं शनैः । सान्त्वयित्वाऽहमेतेषां शममिच्छन्निहागतः ।।३३।।
त इमे मन्दमतयः कलहातिरताः खलाः । तस्मात् तं मामवज्ञाय दुर्भाषां मानिनोऽब्रुवन् ।।३४।।
नोग्रसेनः किल विभुर्भोजवृष्ण्यन्धकेश्वरः । शक्रादयो लोकपाला यस्यादेशानुवर्तिनः ।। ३५ ।।
सुधर्माऽऽक्राम्यते येन पारिजातोऽमराङ्घ्रिपः। आनीय भुज्यते सोऽसौ न किलाध्यासनार्हकः ।।३६।।
यस्य पादयुगं साक्षाच्छ्रीरुपास्तेऽखिलेश्वरी । स नार्हति किल श्रीशो नरदेवपरिच्छदान् ।। ३७ ।।

यस्याङ्घ्रिपङ्कजरजोऽखिललोकपालमौल्युत्तमैर्धृतमुपासिततीर्थतीर्थम् ।
ब्रह्मा भवोऽहमपि यस्य कलाकलांशाः श्रद्धामहे सुचिरमस्य नृपासनं क्व ।। ३८ ।।

भुज्यते कुरुभिर्दत्तं भूखण्डं वृष्णिभिः किल । उपानहः किल वयं स्वयं तु कुरवः शिरः ।। ३९ ।।
अहो ऐश्वर्यमत्तानां मत्तानामिव मानिनाम् । असम्बद्धगिरो रूक्षाः कः सहेतानुशासिता ।। ४० ।।
अद्य निष्कौरवीं पृथ्वीं करिष्यामीत्यमर्षितः । गृहीत्वा हलमुत्तस्थौ दहन्निव जगत्त्रयम् ।। ४१ ।।
लाङ्गलाग्रेण नगरमुद्विदार्य गजाह्वयम् । विचकर्ष स गङ्गायां प्रहरिष्यन्नमर्षितः ।। ४२ ।।
जलयानमिवाघूर्णं गङ्गायां नगरं पतत् । आकृष्यमाणमालोक्य कौरवा जातसम्भ्रमाः ।। ४३ ।।
तमेव शरणं जग्मुः सकुटुम्बा जिजीषवः[१] । सलक्षणं पुरस्कृत्य साम्बं प्राञ्जलयोऽब्रुवन् ।।४४।।
रामरामाखिलाधार प्रभावं न विदामहे । मूढानां नः कुटुम्बीनां क्षन्तुमर्हस्यधीश्वर ।। ४५ ।।

---

अवरुन्धीत प्राप्नोति । सिंहग्रस्तोरणः अविर्यथा कवलं न गृह्णाति । सिंहग्रस्तमिति पाठे कवलमादातुं न शक्तः (इत्यर्थः) ।। २९ ।। अटव्यामुपवने स्थितं रामम् ।। ३० ।।

वाच्यातिवाच्यतामपवादातिशयितामपवादताम्[२] ।। ३१ ।। प्रशमः शान्तिकरः । लगुडो यष्टिः ।। ३२-३५ ।। सोऽसौ कृष्णः ।। ३६,३७ ।। श्रद्धामहे आकाङ्क्षामहे । सर्वैरुपासितं निषेवितं तीर्थं भागीरथी, अस्या अपि शुद्धिकरम् । अस्य कृष्णस्य ।। ३८,३९ ।। अनुशासिता शिक्षाकरः ।। ४०-४४ ।। कुटुम्बीनामिति दीर्घश्छान्दसः ।। ४५ ।।

---

१. छन्दश्छेदभिया विकारलोपः, जिजीविषवः -स. २. अपवादातिशयितमपवादमिति सरलम् ।

स्थित्युत्पत्तिलयानां त्वमेको हेतुर्निराश्रयः । लोकान् क्रीडनकानीश वहतस्ते वदन्ति हि ॥ ४६ ॥

त्वमेव मूर्ध्नीदमनन्त लीलया भूमण्डलं बिभर्षि सहस्रमूर्धन् ।
अन्ते च यः स्वात्मनिरुद्धविश्वः शेषेऽद्वितीयः परिशिष्यमाणः ॥ ४७ ॥

कोपस्तेऽखिलशिक्षार्थं न द्वेषान्न च मत्सरात् । बिभ्रतो भगवान् स त्वं स्थितिपालनतत्परः ॥४८॥

नमस्ते सर्वभूतात्मन् सर्वशक्तिधराव्यय । विश्वकर्मन् नमस्तेऽस्तु त्वां वयं शरणं गताः ॥ ४९ ॥

एवं प्रपन्नैः संविग्नैर्वेपमानायनैर्बलः । प्रसादितः सम्प्रसन्नो मा भैष्टेत्यभयं ददौ ॥ ५० ॥

दुर्योधनः पारिबर्हं कुञ्जरान् षष्टिहायनान् । ददौ द्विदशसाहस्रान् नियुतानि तुरङ्गमान् ॥ ५१ ॥

रथानां षट्सहस्राणि रौक्माणां सूर्यवर्चसाम् । दासीनां निष्ककण्ठीनां सहस्रं दुहितृवत्सलः ॥५२॥

प्रतिगृह्य तु तत्सर्वं भगवान् सात्वतर्षभः । ससुतः सस्नुषः प्रायात् सुहृद्भिरभिवन्दितः ॥ ५३ ॥

ततः प्रविष्टः स्वपुरीं हलायुधः समेत्य बन्धूननुरक्तचेतसः ।
शशंस सर्वं यदुपुङ्गवानां मध्ये सभायां कुरुषु स्वचेष्टितम् ॥ ५४ ॥

अद्यापि वः पुरं ह्येतत् सूचयद् रामविक्रमम् । समुन्नतं दक्षिणतो गङ्गायां ननु दृश्यते ॥ ५५ ॥

॥ इति नवतितमोऽध्यायः ॥

---

क्रीडनकान् क्रीडासाधनानि ॥४६॥ अन्ते जगत्संहारे परिशिष्यमाणोऽद्वितीयः शेषे ॥४७॥

जगद् बिभ्रतस्ते कोपोऽखिलशिक्षार्थम् । स त्वं स्थित्यादितत्परः । सद्भिरत्र हलधरे यथोचितं ग्राह्यमनुचितमन्तर्यामिविषयमिति तात्पर्यमवगन्तव्यम् ॥ ४८ ॥

विश्वस्य प्रपञ्चस्यानुग्रहार्थं कर्म विक्रमलक्षणो व्यापारो यस्य स तथा । तस्य सम्बुद्धिः हे विश्वकर्मन् ॥ ४९ ॥

संविग्नैर्भयसन्त्रस्तैः । वेपमानानां कम्पमानानामङ्गोपाङ्गानामयनैराश्रयैः ॥ ५०,५१ ॥ रौक्मानि हेमचितान्याभरणानि एषां सन्तीति रौक्मिणस्तेषाम् ॥ ५२-५४ ॥

रामविक्रमो जलरेखावन्नश्वरो न किन्तु सर्वचक्षुर्विषय इत्याह– **अद्यापीति** । रामविक्रमं सूचयत् गङ्गायां दक्षिणतः समुन्नतं दृश्यत इत्यन्वयः ॥ ५५ ॥

॥ इति श्रीमद्भागवतटीकायां विजयध्वजतीर्थकृतायां पदरत्नावल्यां दशमस्कन्धे उत्तरार्धे नवतितमोऽध्यायः ॥

## ।। अथ एकनवतितमोऽध्यायः ।।

### श्रीशुक उवाच

**वृष्णिष्वासीद् यदुश्रेष्ठः श्रुतदेव इति श्रुतः । कृष्णैकभक्त्या पूर्णार्थः शान्तः कविरलम्पटः ।। १ ।।**
**स उवास विदेहेषु मिथिलायां गृहाश्रमे[1] । अनीहयाऽऽगताहार्यो निवर्तितजपक्रियः ।। २ ।।**
**यावन्मात्रं त्वहरहर्दैवादुपनमत्ययम् । नाधिकं तपसा तुष्टः क्रियाश्चक्रे यथोचिताः ।। ३ ।।**
**तथा तद्राष्ट्रपालोऽभूद् बहुलाश्व इति श्रुतः । मैथिलो निरहम्मान उभावप्यच्युतप्रियौ ।। ४ ।।**
**तयोः प्रसन्नो भगवान् दारुकेणाहृतं रथम् । आरुह्य सहितो विप्रैर्नियतैः ब्रह्मवादिभिः ।। ५ ।।**
**सहितः सात्वतश्रेष्ठो मुनिभिस्तत्वदर्शिभिः । कदाचित् कौरवश्रेष्ठ विदेहान् प्रययौ प्रभुः ।। ६ ।।**
**नारदो वामदेवोऽत्रिः कृष्णो रामोऽसितोऽरुणिः । अहं बृहस्पतिः कण्वो मैत्रेयश्च पराशरः ।**
**वसिष्ठः कश्यपश्चैव भरद्वाजोऽथ गौतमः ।। ७ ।।**
**तत्र तत्र समायान्तं पौरा जानपदान्विताः । उपतस्थुः सार्घ्यहस्ता लोकाः सूर्यमिवोदितम् ।। ८ ।।**
**आनर्तधन्वकुरुजाङ्गलटङ्कमत्स्यपाञ्चालकुन्तिमधुकैकयकोशलार्णाः[2] ।**
**अन्ये च तन्मुखसरोजमुदारहासस्निग्धेक्षणं नृप पपुर्दृशिभिर्नृनार्यः ।। ९ ।।**

---

यमैवेष वृणुते तेन लभ्य इत्यादिश्रुत्यर्थदृढीकरणाय हरेर्भक्तिप्रियत्वमाहात्म्यं वक्ति । तत्र श्रुतदेवबहुलाश्वविषयमितिहासं शुको वदति– **वृष्णिष्विति** । भक्तिमन्तरेणान्यमर्थमनाकाङ्क्षमाणः पूर्णार्थ इत्युच्यते । कृष्णविषयगाथारचनात् कविः । अलम्पटः शब्दादिविषयेच्छारहितः ।। १ ।।

मिथिलायां नगर्यां गृहाश्रमे स्थितः सभार्य इत्यर्थः । अनीहया अप्रयत्नेन आगताहार्यः प्राप्तप्राप्तव्यः प्राप्तभोज्यो वा । नितरां वर्तिता सहस्रनामादिजपक्रिया येन स तथा । 'नित्यं नामनिकाययोः'[3] इति यादवः ।। २ ।।

ननु प्रयत्नाभावे कथं शरीरयात्राऽस्येत्यत्राह– **यावदिति** । अनुदिनं यावन्मात्रमुपनमति दैवात् प्राप्तं भवति, अयं ततोऽधिकं नाकाङ्क्षते । तर्हि केनालम्बुद्धिः? अत्राह– **तपसेति** ।।३।।

यथा श्रुतदेवः ।।४।। ततः किमायातम्? अत्राह– **तयोरिति** । नियतैरेकान्तभक्तैः ।।५,६।।

मुनीनां नामानि निर्दिशति– **नारद इत्यादिना** ।। ७ ।। त उपतस्थुर्निषेवयाञ्चक्रुः ।।८,९।।

---

१. गृहाश्रमी -स.पाठः । २. टङ्कोऽपि देशविशेषः । अर्णो दशार्णः । तत्पदेन तत्स्था ग्राह्याः -स.
३. नित्यं माननिकाययोः -ग । कोशोदाहरणप्रयोजनं त्वस्पष्टम् ।

तेभ्यः स्ववीक्षणविनष्टतमिस्रदृग्भ्यः क्षेमं त्रिलोकगुरुरर्थदृशं च यच्छन् ।
शृण्वन् दिगन्तधवलं स्वयशोऽशुभघ्नं गीतं सुरैर्नृभिरयाच्छनकैर्विदेहान् ॥ १० ॥
तेऽच्युतं प्राप्तमाकर्ण्य पौरा जानपदा नृप । अभ्ययुर्मुदिता तस्मै गृहीतार्हणपाणयः ॥ ११ ॥
दृष्ट्वा तमुत्तमश्लोकं प्रीत्युत्फुल्लामलाशयाः । उद्धृताञ्जलिभिर्नेमुः श्रुतपूर्वं यथा मुनीन् ॥ १२ ॥
स्वानुग्रहाय सम्प्राप्तं सत्यभूतं जगद्गुरुम् । मैथिलः श्रुतदेवश्च पादयोः पेततुः प्रभोः ॥ १३ ॥
निमन्त्रयेतां दाशार्हमातिथ्येन सह द्विजैः । मैथिलः श्रुतदेवश्च युगपत् सन्नताञ्जली ॥ १४ ॥
भगवांस्तदभिप्रेत्य तयोः प्रियचिकीर्षया । उभयोरविशद् गेहं रूपाभ्यां तदलक्षितः ॥ १५ ॥
श्रोतुमप्यसतां दूरान् जनकः स्वगृहागतान् । आनीतेष्वासनार्घ्येषु सुखासीनान् महामनाः ॥१६॥
प्रवृद्धभक्त्युरूत्कर्षहृदयास्राविलेक्षणः । नत्वा तदङ्घ्रीन् प्रक्षाल्य तदपो लोकपावनीः ॥ १७ ॥
सकुटुम्बोऽवहन् मूर्ध्नि पूजयाञ्चक्र ईश्वरम् । गन्धमाल्याम्बराकल्प धूपदीपार्घ्यगोवृषैः ॥ १८ ॥
वाचा मधुरया प्रीणन्निदमाहान्नतर्पितान् । पादावङ्कगतौ विष्णोरामृजन् शनकैर्मुदा ॥ १९ ॥

राजोवाच

भवान् वै सर्वभावानामात्मा साक्षी सुहृद् विभुः। अथ नस्त्वत्पदाम्भोजं स्मरतां दर्शनं गतः ॥२०॥
स्ववचस्तद् ऋतं कर्तुमस्मद्दृग्गोचरो भवान् । यदा ह्येकान्तभक्तानामात्माऽनन्तोऽरजाः प्रियः ॥

---

सेवाफलमाह– **तेभ्य इति** । स्ववीक्षणेन दर्शनेन विनष्टं तमिस्रं यस्याः सा तथा । विनष्टतमिस्रा निरस्ताज्ञाना दृक् ज्ञानं येषां ते तथा तेभ्यः पौरेभ्यः क्षेमं यच्छन्, अर्थदृशम-परोक्षज्ञानं च ददत् । एकस्मिन् दिगन्तेऽप्यनन्यथागीयमानत्वाद् दिगन्तधवलम् ॥ १०,११ ॥

कधृताञ्जलिभिरिति पाठे के मूर्ध्नि धृताञ्जलिपुटैरित्यर्थः ॥ १२ ॥ सत्यभूतं निर्दोषानन्द-ज्ञानघनम् ॥ १३ ॥ निमन्त्रयेतां भोजनार्थं क्षणं कृतवन्तौ । आतिथ्येन अतिथियोग्येन कर्मणा ॥ १४ ॥ तदलक्षितः ताभ्यां रूपाभ्यामलक्षितः, अज्ञातरूपद्वय इत्यर्थः ॥ १५ ॥

अथ बहुलाश्व ईश्वरं पूजयाञ्चक्र इत्यन्वयः । तान् नत्वा । कीदृशान्? श्रोतुमपि दूरान् कर्णाविषयान् ॥ १६ ॥

अतिवृद्धभक्त्युत्कर्षहृदयश्चास्राविलेक्षणश्च स तथा । अस्रं नेत्रजलम् ॥ १७ ॥ कैः साधनैः? अत्राह– **गन्धेति** ॥ १८ ॥ आमृजन् संवाहनं कुर्वन् ॥ १९ ॥ सुहृदिति यदथ तस्मात् ॥ २० ॥

दर्शने हेतुमाह– **स्ववच इति** । भवान् 'प्रियो हि ज्ञानिनोऽत्यर्थमहं स च मम प्रियः' इति यत् स्ववचः तद् ऋतं कर्तुमस्मद्दृग्गोचरोऽभूदित्यन्वयः । भक्तेनापि कृतज्ञेन भाव्यमिति

**को नु त्वच्चरणाम्भोजमेवंविद् विसृजेत् प्रभो । निष्किञ्चनानां शान्तानां मुनीनां यस्त्वमात्मदः ॥**
**योऽवतीर्य यदोर्वंशे नृणां संसरतामिह । यशो वितेने तच्छान्त्यै त्रैलोक्यविकृतापहः ॥ २३ ॥**
**नमस्तुभ्यं भगवते कृष्णायाकुण्ठमेधसे । नारायणाय ऋषये स्वशान्ततप ईयुषे ॥ २४ ॥**
**दिनानि कतिचिद् भूमन् गृहे नो निवसन् निजैः। समेतः पादरजसा पुनीहीदं निमेः कुलम् ॥२५॥**
**इत्युपामन्त्रितो राज्ञा भगवान् लोकभावनः । उवास कुर्वन् कल्याणं मिथिलानरयोषिताम् ॥२६॥**
**श्रुतदेवोऽच्युतं प्राप्तं स्वगृहं जनको यथा । मत्वा मुनींश्च सन्तुष्टो धुन्वन् वासो ननर्त ह ॥ २७ ॥**
**तृणपीठे सशिष्यांस्तानास्तृतेषूपवेश्य सः । स्वागतेनाभिवन्द्याङ्घ्रिं सभार्योऽवनिजे मुदा ॥२८॥**
**तदम्भसा महाभाग आत्मानं स्वगृहान्वयम् । स्नापयाञ्चक्र उद्धर्षो लब्धसर्वमनोरथः ॥२९॥**

**सिद्धार्हणोशीरशिवामृताम्भसा मृदा सुरभ्या तुलसीकुशाम्बुजैः ।**
**आराधयामास यथोपपन्नया सपर्यया सत्वविवर्धमानया ॥ ३० ॥**
**स तर्कयामास कुतो ममापतत् गृहान्धकूपे पतितस्य सङ्गमः ।**
**यः सर्वतीर्थास्पदपादरेणुभिः कृष्णेन चाध्यात्मनिकेतभूसुरैः ॥ ३१ ॥**

---

भावेनाह– **यदेति** । आत्मा स्वामी । अनन्तोऽन्तत्रयहीनः । अरजाः सात्विकः । त्वमेकान्तभक्तानां प्रिय इति यदा यस्मात् तस्मात् ॥ २१ ॥

एवंविदुक्तार्थज्ञः कोनु पुरुषो त्वच्चरणाम्भोजं विसृजेत् । कृतज्ञश्चेन्न मुञ्चतीत्यर्थः। एकान्तभक्तप्रियोऽयं किं ददातीति तत्राह– **निष्किञ्चनानामिति** ॥ २२ ॥

लोकोपकारायावतारो न तु स्वार्थयेत्याह– **य इति**। तच्छान्त्यै संसारोन्मूलनाय । त्रैलोक्यस्य विकृतान् विरोधिनोऽपहन्तीति त्रैलोक्यविकृतापहः । विकृतं दुष्कृतम् ॥ २३ ॥

शान्तं सुखपूर्तिः, तपोज्ञानं निर्दोषपूर्णानन्दज्ञानम् ईयुषे प्राप्तवते[1] ॥ २४ ॥ राजा स्वगृहनिवासाय भगवन्तं प्रार्थयते– **दिनानीत्यादिना** ॥ २५ ॥ मिथिलायां विद्यमानानां नरयोषिताम् ॥ २६ ॥ तत्र श्रुतदेवेन किं नु कृतम्? अत्राह– **श्रुतदेव इति** । स्वगृहान् प्राप्तमच्युतं मत्वा ज्ञात्वा ॥ २७ ॥ तृणपीठे कटे । अवनिजे प्रक्षालयामास ॥ २८,२९ ॥

सिद्धार्हणं सर्षपः । उशीरं वालव्यजनम्, जया वा । शिवा श्रेयसी, अमृता प्रसिद्धा, एताभिर्युक्तेन जलेन[2] । सुरभ्या सुगन्धया मृदा । सत्वेनात्मशक्त्या विवर्धमानया ॥ ३० ॥

---

१. सुशान्ततप ईयुषे इति टीकसम्मतः पाठः स्यात् । सु इत्यस्य निर्दोषेति व्याख्यानमुपपन्नं भवति ।
२. सिद्धार्हणं सितसर्षपः । शिवा आमलकी । अमृताम्भसा मधुरोदकेन -स.

**सूपविष्टान् कृतातिथ्यान् श्रुतदेव उपस्थितः । सभार्यस्वजनापत्य उवाचाङ्घ्र्यभिमर्शनम् ॥ ३२ ॥**

**श्रुतदेव उवाच**

**अद्य नो दर्शनं प्राप्तः परः परमपूरुषः । य इदं शक्तिभिः सृष्ट्वा विभजत्यत्मसत्तया ॥ ३३ ॥**

**यथा शयानः पुरुषो मनसा चात्ममायया । सृष्ट्वा लोकं परं स्वाप्नमवरुध्यावभासते ॥ ३४ ॥**

**शृण्वतां गदतां शश्वद् दर्शिनामभिनन्दताम् । नृणां संवसतां नित्यं हृदिस्थो योऽमलात्मनाम् ॥३५॥**

**हृदिस्थोऽप्यथ दूरस्थः कर्मविक्षिप्तचेतसाम् । आत्मशक्तिभिरग्राह्यो ह्यर्थाकारोऽगुणात्मकः ॥३६॥**

---

सर्वतीर्थानामास्पदपादरेणुभिः आश्रयचरणरेणुभिः । सह कृष्णेन । अध्यात्मा परमात्मा निकेतो निलय आश्रयो येषां ते अध्यात्मनिकेताः । तैर्भूसुरैर्ब्राह्मणैश्च यः सङ्गमः स गृहान्धकूपे पतितस्य मम कुतोऽपतत्? तस्मात् त्वत्पुण्यादभूदिति[1] तर्कयामास अचिन्तयदित्यन्वयः ॥३१॥

अङ्घ्र्यभिमर्शनं पादसम्मर्दनं कुर्वन् ॥ ३२ ॥

किमाहेत्याशङ्क्य कृष्णनामा वेदान्तप्रतिपाद्यः साक्षान्नारायण एव न देवदत्तादिष्वेक इति भावेनाह– **अद्येति** । यः सत्वादिगुणसृष्टाभिः शक्तिभिर्महदादिभिरिदं जगत् सृष्ट्वा आत्मसत्तया[2] ब्रह्मव्यतिरिक्तेन विविधाकारेण विभजति । 'तत् सृष्ट्वा तदेवानुप्राविशत्' इति श्रुतेः । स एवं परमपुरुषः श्रीकृष्णोऽद्य नो दर्शनं प्राप्तः, नान्य इति शेषः ॥ ३३ ॥

ननु सन् घटः सन् पट इति सदनुविद्धतया प्रतीतेर्ब्रह्मव्यतिरिक्तं जगन्नास्तीत्याशङ्क्य सदृष्टान्तं परिहरति– **यथेति** । यथा शयानः स्वपन् पुरुष आत्मनः परमात्मनो माययेच्छया प्रबोधितेन स्वमनोगतकरितुरगादिसंस्कारेणैव परं स्वव्यतिरिक्तं स्वाप्नं लोकं सृष्ट्वा अवरुध्य स्वविषयीकृत्य अवभासते पृथक् प्रकाशते[3] तथा भवान् जगति स्थितोऽपि ततो व्यतिरिक्त-मात्मानं प्रकाश्य तिष्ठतीत्यर्थः ॥ ३४ ॥

अलौकिकसिद्धवस्तुसत्तायां किं प्रमाणमिति तत्राह– **शृण्वतामिति** । यः स्वकथां शृण्वतां गदतां हृदिस्थ इत्यनेन श्रवणवचने प्रमाणत्वेन ज्ञातव्ये इति दर्शितम् । शश्वद्दर्शिनामभिनन्दतां संवसताममलात्मनां नृणां नित्यं हृदिस्थ इत्यनेन प्रत्यक्षप्रमाणं दर्शितमिति[4] ॥ ३५ ॥

---

१. त्वदनुग्रहादभूदित्यर्थः । भगवतः पुण्यपापलेपाभावात् । २. तत्तद्वस्तुस्वरूपभूतेन सत्वेनेत्यर्थः ।

३. अवरुध्य अयं गजादिरिति विषयीकृत्य अवभासते दृश्यवैलक्षण्येन द्रष्टृत्वेनावभासते -स.

४. अस्पष्टमिदम् ।

**नमोऽस्तु तेऽध्यात्मविदां परात्मने सर्वात्मने स्वात्मविभक्तमूर्तये ।**
**सकारणाकारणलिङ्गमीयुषे स्वमाययाऽसंवृतदृष्टये नमः ।। ३७ ।।**
**स त्वं शाधि स्वभृत्यान् नः किं चेश करवाम ते । एतदन्तो नृणां क्लेशो यद् भवानक्षगोचरः ।।३८।।**

**श्रीशुक उवाच**

**तदुक्तमित्युपाकर्ण्य भगवान् प्रणतार्तिहा । गृहीत्वा पाणिना पाणिं प्रहसन् तमुवाच ह ।। ३९ ।।**

**श्रीभगवानुवाच**

**ब्रह्मंस्तेऽनुग्रहार्थाय सम्प्राप्तान् विद्ध्यमून् मुनीन् । सञ्चरन्ति मया लोकान् पुनन्तः पादरेणुभिः ।।**
**देवाः क्षेत्राणि तीर्थानि दर्शनस्पर्शनार्चनैः । लोकान् पुनन्ति कालेन तदप्यर्हत्तमेक्षया ।। ४१ ।।**

---

नन्वेवं तर्हि कस्मान्मादृशानां तज्ज्ञानाभाव इत्याशङ्क्योपासनाभावादुपासनं च कर्मप्रतिबद्धमिति भावेनाह– **हृदिस्थ इति** । उपासकैरपि न स्वप्रयत्नेन ज्ञेयः किन्तु स्वप्रसादेनैवेत्याशयवानाह– **आत्मेति** । आत्मनां जीवानां शक्तिभिः प्रयत्नादिलक्षणाभिरग्राह्यो न ज्ञेयः । मुह्यन्ति यं सूरय इत्यादि स्वोक्तिं स्मारयति हिशब्देन । देवदत्तवत्त् शरीरी चेत् कथमग्राह्य इत्यत्राह– **अर्थाकार इति** । अर्थ्यत इत्यर्थ आनन्दः । ऋ गताविति धातुः । यद्वाऽर्थशब्देन ज्ञानं च । ज्ञानानन्ददेह इत्यर्थः । अर्थो वस्तु अप्रतिहतं तदाकार इति वा । कुत एवमङ्गीकार इत्यत्राह– **अगुणात्मक इति** । सत्वादिगुणनिर्मितदेहवान् न भवति । एवंविधस्त्वमस्माकं दर्शनं प्राप्त इति पूर्वेणान्वयः ।। ३६ ।।

एवंविधत्वान्मम नमनमन्तरेण त्वदुपासनं दुस्साध्यमिति भावेनाह– **नम इति** । अध्यात्मविदां परमात्मादितत्वज्ञानिनां परात्मने अशेषपुरुषार्थदात्रे । सर्वात्मने सर्वव्यापिने । स्वात्मविभक्तमूर्तये स्वात्मनैव विभक्तस्वरूपाय । सकारणं जगत्, अकारणलिङ्गम् अकारणं[१] कारणान्तरशून्यस्वरूपं प्रधानमेवं द्वे ईयुषे व्याप्तवते । स्वमायया स्वसामर्थ्येन असंवृत-दृष्टयेऽव्यवहितज्ञानाय ।। ३७ ।।

यद् यदा भवानक्षगोचरः स्यात्, एतदन्तोऽयमवधिर्यस्य स तथा । नृणां क्लेशः परिश्रमः ।।३८,३९ ।। ब्रह्मन् तपस्विन् ।। ४० ।।

देवादिभ्यो यच्छुद्धत्वं तदर्हत्तमानां पूज्यानां ब्राह्मणादीनामीक्षया दर्शनेन । अपिशब्दोऽवधारणार्थः ।। ४१,४२ ।।

---

१. अकारणमिति गकोशे नास्ति । इदं पदमधिकमिति भाति ।

ब्राह्मणा जन्मतः श्रेष्ठाः सर्वेषामेव प्राणिनाम् । तपसा विद्यया तुष्ट्या किमु मत्कथया पुनः ॥
न ब्राह्मणान्मे दयितं रूपमेतच्चतुर्भुजम् । सर्ववेदमयो विप्रः सर्वदेवमयो ह्यहम् ॥ ४३ ॥
दुष्प्रज्ञा अविदित्वैनमवजानन्त्यसूयवः । गुरुं मां विप्रमात्मानमर्चादाविति दृष्टयः ॥ ४४ ॥
चराचरमिदं विश्वं भावये चास्य दैवतम् । मद्रूपाण्येभिरेतस्यां धत्ते विप्रो मदीक्षया ॥ ४५ ॥
तस्माद् ब्रह्मऋषीनेतान् ब्रह्मज्ञान् श्रद्धयाऽर्चय । एवंविदाऽर्चितोऽस्म्यद्धा नान्यथा सुविभूतिभिः॥

श्रीशुक उवाच

स इत्थं प्रभुणाऽऽदिष्टः सहकृष्णान् द्विजोत्तमान् । आराध्यैकान्तभावेन मैथिलश्चापतुर्गतिम् ॥
एवं स्वभक्तयो राजन् भगवान् भक्तभक्तिमान् । उषित्वाऽऽदिश्य सन्मार्गं पुनर्द्वारवतीमगात् ॥

॥ इति एकनवतितमोऽध्यायः ॥

---

ब्राह्मणभक्तिजननार्थमर्थवादमाह– **न ब्राह्मणादिति** । ब्राह्मणस्योत्तमत्वे हेतुमाह– **सर्वेति** । एवमप्यावयोर्विशेषोऽस्तीति हि शब्देनाह ॥ ४३ ॥

असूयवो गुणेषु दोषाविष्करणशीला दुष्प्रज्ञा एवं गुरुं विप्रं मत्सन्निधानपात्रमविदित्वा अवजानन्ति । आत्मानं मामर्चादाववजानन्ति । कथम्? अर्चैव हरिरितिदृष्टयः ॥ ४४ ॥

ब्राह्मणपूजया सर्वमपि पूजितं स्यादिति भावेनाह– **चराचरमिति** । इदं चराचरं विश्वं भावये कल्पये, ब्रह्मणीति शेषः[1] । अस्य ब्राह्मणस्य दैवतम्, अहमिति शेषः । विप्रस्य सर्ववेदमयत्वमुक्तं स्पष्टयति– **मद्रूपाणीति** । विप्रो मदीक्षया मत्प्रतिमाप्रतिपादकत्वज्ञानेन एतस्यां, 'सर्वे वेदा यत्पदमामनन्ति' इत्यादि श्रुत्यां, 'वायुना वै गौतम सूत्रेणायं च लोकः परश्च लोकः सर्वाणि च भूतानि सन्दब्धानि भवन्ति' इति श्रुतिसिद्धैरेभिश्चराचरैः सह मद्रूपाणि धत्ते[2] ॥ ४५ ॥ प्रतिपादनच्छलेन फलितमाह– **तस्मादिति** ॥ ४६,४७ ॥ भक्तेषु प्रसादलक्षणस्नेहवान् ॥ ४८ ॥

॥ इति श्रीमद्भागवतटीकायां विजयध्वजतीर्थकृतायां पदरत्नावल्यां दशमस्कन्धे उत्तरार्धे एकनवतितमोऽध्यायः ॥

---

१. ब्रह्मणीत्यस्य विप्रे इत्यर्थः ।

२. एतस्यां स्वतनुरूपश्रुतौ एभिर्भूतैः सह विप्रो मेधावी मदीक्षया ''सर्वत्र वर्तते हरि''रितीक्षा मदीक्षा तया मद्रूपाणि धत्ते तत्प्रतिपाद्यत्वेनानुसन्धते -स.

## ॥ अथ द्विनवतितमोऽध्यायः ॥

**राजोवाच**

**देवासुरमनुष्येषु ये भजन्त्यशिवं शिवम् । प्रायस्ते धनिनो ब्रह्मन् न तु लक्ष्मीपतिं हरिम् ॥ १ ॥**

**एतद् वेदितुमिच्छामि सन्देहोऽत्र महान् हि नः । विरुद्धशीलयोः प्रभ्वोर्विरुद्धां भजतोर्गतिम् ॥२॥**

**श्रीशुक उवाच**

**शिवः शक्तियुतः शश्वत् त्रिलिङ्गो गुणसंवृतः । वैकारिकस्तैजसश्च तामसश्चेत्यहं त्रिधा ॥ ३ ॥**

---

शिवं भजन् तामसाद्यन्यतमो विष्णुं निषेवमाणः सात्विक एव, शिवस्याप्यन्यापरिहार्यापत्तिसमुच्छित्तिकरो नारायणः, किमुतेतरेषामित्यर्थसारं वृकासुराख्यायिकया ख्यापयति । तत्र राजा आख्यायिकामुत्थापयितुं पृच्छति– **देवासुरेति** । दिगम्बरत्वेन लोकदृष्ट्या अशिवमशुद्धत्वेन प्रतीयमानम् । निर्धनं वा । 'शिवो लोके पद्मरागे हरे काले शिवे जले' इत्यतः पद्मरागराहित्येन निर्धनत्वं लक्ष्यते । अशिवमलीकमनर्गलम्, सर्ववरप्रदमित्यर्थः । लक्ष्मीपतिमित्यनेन धनित्वमुपलक्षयति । तथापि तद्भक्ता धनिनो न भवन्ति ॥ १ ॥

एतत् धनित्वाधनित्वतत्त्वम् । सन्देहे तन्निरासप्रयत्नो घटते तदभावे व्यर्थ इत्यत्राह– **सन्देह इति** । न चायमौपचारिक इत्याह– **महानिति** । सन्देहबीजान्तरमाह– **विरुद्धेति** । श्मशाने पिशाचगणैः परिवृतत्वेनाटनशीलं रुद्रस्य, इन्द्रादिदेवैः परीतत्वेनावस्थानम् हरेः, असुरादीनामपि वरदानेच्छावत्त्वेन गतित्वमाश्रयत्वम् ईशानस्य, देवादीनां समृद्धिचिकीर्षुत्वेन हरेः[1] । तथा चात्र प्रभ्वोः समर्थयोर्विषये महानस्माकं सन्देहोऽस्ति । हि यस्मात् । तन्निरसनप्रयासः सार्थक इत्यर्थः ॥ २ ॥

जीवानां त्रैविध्यं केनाप्यनभिभूतं प्रमितं देवासुरमनुष्येष्वित्यनेन सूचितम् । तत्र शिवः स्वल्पसम्पृक्तसत्वेन बहुलेन तमसा रजसा च स्पृष्टत्वेन तदनुसृतस्वभावत्वेन हरिनियतप्रकृतिबद्धत्वेन तत्तत्प्राणिस्वभावसेवानुगुणफलदानक्लृप्तत्वेनावश इव तादृशं फलं वितरति । हरिस्तु स्वाधीनसत्वादिगुणत्वेन तत्प्रवर्तकत्वेन तच्छक्त्यनुपहतशक्तित्वेन प्रकृतिपरत्वेन तन्निर्मितशरीररहितत्वेन तत्स्वभावाभावेन कूटस्थत्वेन नित्यनिर्दोषज्ञानानन्दतनुत्वेन स्वसेवकेभ्यः स्वानुगुणं फलं प्रयच्छतीति भावेन परिहरति– **शिव इत्यादिना** । शक्तियुतः प्रकृतिसम्बद्धः । अत एव शश्वत् त्रीणि लिङ्गानि वैकारिकादीनि यस्य स तथा । ननु

---

१. हरिहरयोर्विरुद्धशीलताप्रदर्शनमिदम् ।

**ततो विकारा अभवन् षोडशामीषु पञ्चसु । उपाधावन् विभूतीनां सर्वासामश्नुते फलम् ॥ ४ ॥**
**हरिस्तु निर्गुणः साक्षात् पुरुषः प्रकृतेः परः । स सर्वदृगुपद्रष्टा तं भजन् निर्गुणो भवेत् ॥ ५ ॥**
**निवृत्तेष्वश्वमेधेषु राजा युष्मत्पितामहः । शृण्वन् भगवतो धर्मानपृच्छदिदमच्युतम् ॥ ६ ॥**
**स शाह भगवांस्तस्मै प्रीतः शुश्रूषवे प्रभुः । नृणां निःश्रेयसार्थाय योऽवतीर्णो यदोः कुले ॥ ७ ॥**

**श्रीभगवानुवाच**

**यस्याहमनुगृह्णामि हरिष्ये तद्धनं शनैः । ततोऽधनं त्यजन्त्यस्य स्वजना दुःखदुःखितम् ॥ ८ ॥**
**स यदा वितथोद्योगो निर्विण्णः स्याद् धनेहया । मत्परैः कृतमैत्रस्य करिष्ये तदनुग्रहम् ॥ ९ ॥**

---

प्रकृतेरेकत्वेन तत्सम्बन्धेनैकविध्यमेवोचितं न त्रैविध्यम् । अन्यथा चातुर्विध्यं किं न स्यादित्यत उक्तम्– **गुणसंवृत इति** । गुणानां त्रित्वात् तत्सम्बन्धेन त्रित्वं युक्तं न चातुर्विध्यादिकम् । सूचितं त्रैविध्यं स्पष्टयति– **वैकारिक इति** । अहम् अहङ्कारात्मको रुद्रः ॥ ३ ॥

ततोऽहङ्कारात् षोडश विकाराः, अभवन्निति शेषः । पञ्चभूतानि दशेन्द्रियाण्येकं मनः । ननु किमायातं प्रकृत इति तत्राह– **अमीष्विति** । यो भूतानां मध्ये अमीषु पञ्चस्वाकाशादिष्वधिष्ठानप्रकारेषु निधाय्य शिवमुपाधावन् सेवमानो भवति स पुरुषस्तस्मात् सर्वासां विभूतीनां गतिं सेवानुसारेण फलमश्नुते । अत्र ग्रन्थबाहुल्यभयाद् विशेषविशदीकरणादुपरम्यते ॥ ४ ॥

तुशब्देन सत्वादिगुणराहित्यमेव नतु ज्ञानादिगुणराहित्यं विवक्ष्यते । तथात्वे सर्वदृगित्याद्यनुपपन्नं स्यात् । हरिरविनश्वरं फलं ददाति रुद्रस्त्वनित्यं दुःखोदर्कं ददातीत्यादि विशेषं वा दर्शयति । उपद्रष्टा साक्षी, सर्वेभ्यो द्रष्टृभ्योऽधिकं द्रष्टा वा । नान्योऽतोऽस्ति द्रष्टेति श्रुतेः॥५॥

न धनित्वं फलं ददातीत्यस्य कथं परिहार आगतः? तं वक्तुमुपक्रमते– **निवृत्तेष्विति** ॥६॥

भूभारहरणाय प्रवृत्तेन धर्मकथनं कोपयुज्यत इत्यत्राह– **नृणामिति** । अनेन न केवलमवतारप्रयोजनं भूभारहरणमपि तु नृणां संसारनिर्मूलनलक्षणनिःश्रेयसं चेत्युक्तं भवति ॥ ७ ॥

अनुग्रहं कर्तुं शनैः यावद्यावत् प्रेम वर्धते तावत्तावद् धनं हरिष्ये । धनस्य मदहेतुत्वादेतद्धरणम् । तत्फलमाह– **तत इति** । अस्याधनस्य स्वजना दुःखदुःखितं दुःखातिशयोपेतमेनमधनं त्यजन्ति ॥ ८ ॥

ततो धनाभावात् स यदा धनेहया वितथोद्योगो निर्विण्णः स्यात् तदा मत्परैः कृतमैत्रस्य तस्यानुग्रहं मुक्तिलक्षणं करिष्य इत्यन्वयः ॥ ९ ॥

तद् ब्रह्म परमं सूक्ष्मं चिन्मात्रं सदनन्तकम् । अतो मां सुदुराराध्यं हित्वाऽन्यान् भजते पुनः ॥१०॥
ततस्त आशुतोषेभ्यो लब्धराज्यश्रियोद्धताः । प्रमत्ता वरदान् देवान् विस्मरन्त्यवजानते ॥ ११ ॥

श्रीशुक उवाच

शापप्रसादयोरीशा ब्रह्मविष्णुशिवादयः । सद्यः शापप्रसादोऽङ्ग शिवो ब्रह्मा च नाच्युतः ॥ १२ ॥
अत्रैवोदाहरन्तीममितिहासं पुरातनम् । वृकासुराय गिरिशो वरं दत्त्वाऽऽप सङ्कटम् ॥ १३ ॥
वृको नामासुरः पुत्रः शकुनेः पथि नारदम् । दृष्ट्वाऽऽशुतोषं पप्रच्छ देवेषु त्रिषु दुर्मतिः ॥ १४ ॥
स आदिदेश गिरिशमुपाधावस्व सिद्धये । सोऽल्पाभ्यां गुणदोषाभ्यामाशु तुष्यति कुप्यति ॥१५॥
दशास्यबाणयोस्तुष्टः स्तुवतोर्बन्दिनोरिव । ऐश्वर्यमतुलं दत्त्वा तत आप सुसङ्कटम् ॥ १६ ॥
इत्यादिष्टस्तमसुर उपाधावत् सुयन्त्रितः । केदार आत्मक्रव्येण जुह्वन्नग्निमुखं हरम् ॥ १७ ॥
देवोपलब्धिमप्राप्य निर्वेदात् सप्तमेऽहनि । शिरो जिहीर्षुरसिना स तीर्थक्लिन्नमूर्धजः ॥ १८ ॥

तदा महाकारुणिकः स धूर्जटिर्यथाऽवयव्यग्निरिवोत्थितोऽनलात् ।
निगृह्य दोर्भ्यां भुजयोर्न्यवारयत् तत्स्पर्शनाद् भूय उपाकृताकृतिः ॥ १९ ॥
तमाह चाङ्गालमलं वृणीष्व मे यथानिकामं वितरामि ते वरम् ।
शिवेन जीवेन नृणां प्रपद्यतामहो त्वयाऽऽत्मा भृशमर्द्यते वृथा ॥ २० ॥

---

यतोऽहं भजमानस्य धनं हरिष्यामि अतस्तत् परमं ब्रह्म वेदान्तवेद्यं सूक्ष्मं नित्याव्यक्तं चिन्मात्रं प्रकृतिप्राकृतवैकृतज्ञानशून्यं[१] सत् प्रशस्तमनन्तकमन्तत्रयवर्जितं सुदुराराध्यं मां हित्वा अन्यान् भजते । परमब्रह्मत्वादयः सुदुराराध्यत्वे हेतवः ॥ १० ॥

अन्योपासकास्ते मद्वानवत् तान् देवानपि जहतीति भावेनाह– **तत इति** । यतो मामवज्ञायान्यानुपासते, अत एव दोषात् ॥ ११ ॥

देवेषु के शापप्रसादसमर्थास्तत्रापि सद्यःशापप्रसादाःक इति तत्राह– **शापेति** ॥ १२ ॥

शिवः सद्यःशापप्रसाद इत्येतत् कथमित्यत्रेतिहासं वक्ति– **अत्रेति** ॥१३-१६॥ अग्निमुखमुद्दिश्य । जुह्वन्निति च्छान्दसः । जुहन् होमं कुर्वन् ॥ १७ ॥ देवोपलब्धिं देवदर्शनम् । असिना शिरो हर्तुकामोऽभूत् ॥ १८ ॥ करचरणाद्यवयवी । उपाकृताकृतिरुत्पन्नस्वरूपः[१] ॥ १९ ॥

---

१. प्रकृतिशून्यं प्राकृतवैकृतज्ञानशून्यं चेत्यर्थः । २. वृक्णाङ्गसम्पत्तिमान् वृकोऽभूदिति भावः -स.

देवात् स वव्रे पापीयान् वरं भूतभयावहम् । यस्य पुंसः करं शीर्ष्णि धास्ये स म्रियतामिति ॥२१॥
तत् श्रुत्वा भगवान् रुद्रो दुर्मना इव भारत । ओमिति प्रहसंस्तस्मै ददौ वरमृतं यथा ॥ २२ ॥
स तद्वरपरीक्षार्थं शम्भोः शीर्ष्णि वृकासुरः । स्वहस्तं दातुमारेभे सोऽबिभेत् स्वकृताच्छिवः ॥२३ ॥
तेनोपसृष्टः सन्त्रस्तः पराधावत् सवेपथुः । यावदन्तं दिवो भूमेः कोष्ठानामधरं भुवः ॥ २४ ॥
अजानन्तः प्रतिविधिं तूष्णीमासन् सुरेश्वराः । ततो वैकुण्ठमगमद् भास्वरं तमसः परम् ॥ २५ ॥
यत्र नारायणः साक्षान्न्यासिनां परमा गतिः । शान्तानां न्यस्तदण्डानां यतो नावर्तते गतः ॥२६॥
तं तथाव्यसनं दृष्ट्वा भगवान् वृजिनार्दनः । दूरात् प्रत्युदितो भूप दारको योगमायया ॥ २७ ॥
मेखलाजिनदण्डाद्यैस्तेजसाऽग्निरिव ज्वलन् । अभिवादयामास च तं कुशपाणिर्विनीतवत्[1] ॥२८॥

श्रीभगवानुवाच

शाकुनेय भवान् व्यक्तं श्रान्तः किं दूरमागतः । क्षणं विश्रम्यतां पुंस आत्माऽयं सर्वकामधुक् ॥२९॥
यदि नः श्रवणायालं युष्मद्व्यवसितं विभो । भण्यतां पुरुषः साधो पुम्भिरर्थितमीमहे[2] ॥ ३० ॥

---

यथानिकामं नितरां काममनतिक्रम्य । नृणां यत् प्रियतरं वस्तु स जीवः जीवनं प्राणधारणं तेन जीवेन प्रपद्यतां प्रपन्नो भवतु, भवानिति शेषः । केनेत्यत उक्तम्– **शिवेनमयेति**[3] । किञ्च जीवोऽसुधारणतत्परः[4] । अनेन 'पूर्वमायुः परीक्षेत पश्चाल्लक्षणमादिशेत्' इति वचनाज्जीवनं सर्वस्मादभीष्टमित्युक्तं भवति । किञ्चात इति तत्राह– **अहो इति** । आत्मा शरीरम् अर्द्यते हिंस्यते । अहो यस्मात् तस्मात् ॥ २०,२१ ॥

ओमित्युक्त्वा प्रहसन् आत्मनो दैन्यमप्रकाशयन् ॥ २२ ॥ अबिभेद् भीतवान् ॥ २३ ॥

उपसृष्ट उपद्रुतः । दिवोऽन्तमवसानम् । यावदस्ति भूमेः कोष्ठानां विवराणामवसानं च यावद् भुवोऽधरमधःस्थलं पातालं च यावत् तावत्पर्यन्तं पराधावत् ॥ २४ ॥

तल्लोकवासिनः शून्यप्रायाः किम्? अत्राह– **अजानन्त इति** । प्रतिविधिं प्रतिक्रियाम् ॥ २५,२६ ॥ दारको बालब्रह्मचारी ॥ २७,२८ ॥ आत्मा शरीरम् ॥ २९ ॥ पुम्भिरर्थितम्[5] ॥ ३०,३१ ॥

---

१. तं वृकं कुशपाणिर्विनीतवदभिवादयामास -स.

२. पुम्भिः स्वार्थं समीहते -इति स.पाठः । पुरुषः कार्यकर्ता पुम्भिः सहकारिभिः स्वार्थमुभयोः कलहे सति समीहते -स.

३. शिवेनेति प्रतीकं मयेति व्याख्यानम् । ४. अस्पष्टमिदम् ।

५. पुम्भिः स्वार्थः समीहते इत्येव टीकासम्मतः पाठः स्यात् । अन्यथा पुरुष इत्यस्य निरन्वयापत्तेः । पुम्भिरर्थितं पुरुषार्थभूतं स्वार्थं समीहत इति व्याख्यानम् ।

श्रीशुक उवचा

एवं भगवता पृष्टो वचसाऽमृतवर्षिणा । गतक्लमोऽब्रवीत् तस्मै यथापूर्वमनुष्ठितम् ।। ३१ ।।

श्रीभगवानुवाच

एवं चेत् तर्हि तद्वाक्यं वयं न श्रद्दधीमहि । यो दक्षशापात् पैशाच्यं प्राप्तः प्रेतपिशाचराट् ।। ३२ ।।
रुषाऽऽक्रान्तशरीरोऽसौ न सत्यं वदते हरः । क्रोधयुक्ते कुतः सत्यं मूढोऽसि त्वं महासुर ।।३३।।
यदि वस्तत्र विश्रम्भो दानवेन्द्र जगद्गुरौ । तर्ह्यङ्गापि स्वशिरसि हस्तन्यासः प्रदीयताम् ।। ३४ ।।
यद्यसत्यं वचः शम्भोः कथञ्चिद् दानवर्षभ । तदैनं जह्यसद्वाचं न च वक्ताऽनृतं पुनः ।। ३५ ।।
इत्थं भगवतश्चित्रैर्वचोभिश्च सुपेशलैः । भिन्नधीर्विस्मृतः शीर्ष्णि स्वहस्तं कुमतिर्व्यधात् ।। ३६ ।।
अथापतद् भिन्नशिरा वज्राहत इव क्षणात् । जयशब्दो नमःशब्दः साधुशब्दोऽभवद् दिवि ।।३७।।
मुमुचुः पुष्पवर्षाणि हते पापे वृकासुरे । देवर्षिपितृगन्धर्वा मोचितः सङ्कटाच्छिवः ।। ३८ ।।
मुक्तं गिरिशमप्याह भगवान् पुरुषोत्तमः । अहो देव महादेव पापोऽयं स्वेन पाप्मना ।। ३९ ।।
हतः कोनु कुतश्चापि जन्तुर्वै कृतकिल्बिषः । क्षेमी स्यात् किमु विश्वशे कृतपापो जगद्गुरौ ।।४०।।

य एवमव्याकृतशक्त्युदन्वतः परस्य साक्षात् परमात्मनो हरेः ।
गिरीशमोक्षं कथयेत् श्रुणोति वा विमुच्यते संसृतिभिस्तथाऽरिभिः ।। ४१ ।।

।। इति द्विनवतितमोऽध्यायः ।।

---

## ।। अथ त्रिनवतितमोऽध्यायः ।।

श्रीशुक उवाच

सरस्वत्यास्तटे राजन् ऋषयः सत्रमासत । वितर्कः समभूत् तेषां त्रिष्वधीशेषु को महान् ।। १ ।।

---

तस्य रुद्रस्य वाक्यम् । पैशाच्यं कर्म ,श्मशानाटनलक्षणम् ।। ३२,३३ ।। जगुद्गुरौ जगद्गिरणशीले ।। ३४-४० ।। आख्यायिकाकथनादिफलमाह– **य इति** । अव्याकृतनित्यशक्तिसमुद्रस्य । संसृतिभिः पुत्रमित्रादिबन्धलक्षणाभिः ।। ४१ ।।

।। इति श्रीमद्भागवतटीकायां विजयध्वजतीर्थकृतायां पदरत्नावल्यां दशमस्कन्धे उत्तरार्धे द्विनवतितमोऽध्यायः ।।

---

विष्णोः समोऽधिको (वा) अस्तीति संशयनिरासाय तस्य भक्तानुकम्पित्वप्रकटनाय च मुमुक्षुभिः क्षमागुण एवापाद्यस्तत्प्रसादजनक इति द्योतनाय च तस्मिन् निरतिशयभक्तिजननाय चास्याध्यायस्य प्रारम्भः । तत्रादौ मुनीनां सत्रसमये जिज्ञासाप्रकारं वक्ति– **सरस्वत्या इति** । वितर्को जिज्ञासा । त्रिषु ब्रह्मादिष्वधीशेषु अधिकेश्वरेषु को महानुत्तमः ।। १ ।।

**तस्य जिज्ञासया ते वै भृगुं ब्रह्मसुतं नृप। तज्ज्ञस्यै प्रेषयामासुः सोऽभ्यगाद् ब्रह्मणः सभाम् ॥२॥**
**न तस्मै ब्रह्मणे स्तोत्रं चक्रे सत्वपरीक्षया। तस्मै चुक्रोध भगवान् प्रज्वलन् स्वेन तेजसा ॥ ३ ॥**
**स आत्मन्युत्थितं मन्युमात्मजायात्मनः प्रभुः। अशीशमद् यथा वह्निं शमयेद् वारिणा प्रभुः ॥४॥**
**ततः कैलासमगमत् स तं देवो महेश्वरः। परिरब्धुं समारेभे उत्थाय भ्रातरं मुदा ॥ ५ ॥**
**नैच्छत् तमशुभाचारं इति देवश्चुकोप ह। शूलमुद्यम्य तं हन्तुमारेभे तिग्मलोचनः ॥ ६ ॥**
**पतित्वा पादयोर्देवी शमयामास तं गिरा। इति कृच्छ्रात् ततो मुक्तः कैलासाद् रजताचलात् ॥७॥**
**मुनिर्जगाम वैकुण्ठं यत्र देवो जनार्दनः। शयानं श्रिय उत्सङ्गे पदा वक्षस्यताडयत् ॥ ८ ॥**
**तत उत्थाय भगवान् सह लक्ष्म्या सतां गतिः। स्वतल्पादवरुह्याशु ननाम शिरसा मुनिम् ॥ ९ ॥**
**आह ते स्वागतं ब्रह्मन् निषीदात्रासने क्षणम्। अजानतामागसं नः क्षन्तुमर्हसि मानद ॥ १० ॥**
**पुनीहि सहलोकं मां लोकपालांश्च मद्गतान्। पादोदकेन भवतस्तीर्थानां तीर्थकारिणा ॥ ११ ॥**
**अद्याहं भगवन् लक्ष्म्या आसमेकान्तभाजनम्। वत्स्यत्युरसि नो भूतिर्भवत्पादहतांहसि ॥ १२ ॥**
**श्रीवत्समिति नामापि जायतां पादलक्षणम् ॥ १३ ॥**

---

तस्याधिकस्य। वा इत्यनेन लोकसंशयनिरासाय मन्दाधिकारिणां दृढनिश्चयाय, न स्वार्थं, परिज्ञातवेदान्तार्थत्वात् स्वेषामिति निर्धारयति ॥ २,३ ॥

आत्मनः स्वस्यात्मनि मनसि आत्मजाय भृगवे उत्थितं मन्युमशीशमत् शान्तं कृतवान्। प्रभुः समर्थः। प्रभुः भृगोः पितृत्वेन स्वामी ॥ ४ ॥

महेश्वर इति साङ्केतिकं नाम। अन्वर्था (अन्वर्थत्वा?)ङ्गीकारे प्रकृतानुपपत्तेः। भ्रातरं मुदेति भ्रातृशब्दप्रयोगाच्च ॥ ५ ॥ श्मशानवासित्वेनाशुभाचार इति मत्वा ॥ ६-९ ॥

ते तुभ्यम्। निषीद उपविश। आगसमपराधम् ॥ १० ॥ अहमेव गतं गतिराश्रयो येषां ते मद्गतास्तान्। तीर्थकारिणा शुद्धिकारिणा। 'तीर्थं शास्त्रेऽम्भसि पावने' इति यादवः ॥ ११ ॥

असुरजनमोहनायाह– **अद्येति**। अद्याहं लक्ष्म्याः श्रिय एकान्तेन नियमेन भाजनं पात्रमासम्। भूतिर्लक्ष्मीः। 'भूतिः श्रीजन्मभस्मसु' इति च। नित्यकृतवासाऽपि अद्यप्रभृति वत्स्यति स्पष्टवासं करिष्यति। भवता नित्यशक्तेन पादेन ज्ञानेन हतं नष्टमंहो यस्मिंस्तत् तथा। नित्यसत्वज्ञानात्मकत्वेन दोषरहितमिति वा तस्मिन्निति तथा बाह्यार्थः। कथा यदि वाक्यार्थः[1] ॥ १२ ॥

---

१. अस्पष्टमिदम्। तस्मिन्निति कथाबाह्यार्थ इत्येव ग.पाठः

श्रीशुक उवाच

एवं ब्रुवाणे वैकुण्ठे भृगुस्तत्सार्द्रया गिरा । निर्वृतस्तर्पितस्तूष्णीं भक्त्युत्कण्ठोऽश्रुलोचनः ॥१४॥
पुनः स्वसत्रमासाद्य मुनीनां ब्रह्मवादिनाम् । स्वानुभूतमशेषेण राजन् भृगुरवर्णयत् ॥ १५ ॥
तं निशम्याथ मुनयो विस्मिता मुक्तसंशयाः । भूयांसं श्रद्दधुर्विष्णुं यतः शान्तिर्यतोऽभयम् ॥१६॥
धर्मः साक्षाद् यतो ज्ञानं वैराग्यं च चतुर्विधम् । ऐश्वर्यं चाष्टधा यस्माद् यशश्चात्ममलापहम् ॥१७॥
मुनीनां न्यस्तदण्डानां शान्तानां समचेतसाम् । अकिञ्चनानां साधूनां यमाहुः परमां गतिम् ॥१८॥
सत्वं यस्य प्रिया मूर्तिर्ब्राह्मणास्त्विष्टदेवताः । भजन्त्यनाशिषः शान्ता यं वा निपुणबुद्धयः ॥१९॥
त्रिविधा मूर्तयस्तस्य राक्षसा असुराः सुराः । गुणास्तन्मायया सृष्टाः सत्वं तत्रार्यदर्शनः ॥ २० ॥

श्रीशुक उवाच

इत्थं सारस्वता विप्रा नृणां संशयनुत्तये । पुरुषस्य पदाम्भोजसेवया तद्गतिं गताः ॥ २१ ॥

इत्येतन्मुनितनयस्य पद्मगर्भपीयूषं भवभयभित् परस्य पुंसः ।
सुश्लोकैः श्रवणपुटैः पिबन्नभीक्ष्णं पान्थोऽथ भ्रमणपरिश्रमं जहाति ॥ २२ ॥

॥ इति त्रिनवतितमोऽध्यायः ॥

---

श्रिया सहितवत्समुरः श्रीवत्सम् । 'उरो वत्सं च वक्षश्च भुजान्तरमुदीर्यते' इत्युत्पलमालाभिधानम् । पादलक्षणं पादाङ्कः श्रीवत्समिति नाम जायतामित्यन्वयः ॥१३-१५॥

भूयांसमत्युत्तमम् । यतो यस्माद् हरेः शान्तिर्मोक्षो मङ्गलं वा, पुंस इति शेषः ॥ १६ ॥
एकान्तभक्तानां धर्मादिष्वनपेक्षालक्षणं वैराग्यमात्मनो मनसो मलनाशनम् ॥१७,१८॥ यस्य हरेः सत्वं गुणः प्रिया मूर्तिः प्रेष्ठप्रतिमा । यस्येष्टदेवता ब्राह्मणाः। अनाशिषो निष्कामाः॥१९॥

तत्र तेषु गुणेषु सत्वं नाम गुणः आर्यं सर्वपूज्यं हरिं दर्शयतीत्यार्यदर्शनः, तद्विषयज्ञानोत्पादकः ॥ २० ॥

यत् फलावसायि तदेव प्रमाणपदवीमध्यास्ते इति भावेन फलमाह– **इत्थमिति** । सारस्वताः सरस्वतीतीरवासिन इत्थं नृणां संशयनिरासाय प्रवृत्ताः पुरुषस्य हरेर्मतिं ज्ञानं तेन वैकुण्ठं गताः ॥ २१ ॥

आख्यानफलमाह– **इतीति** । मुनितनयस्य पद्मगर्भपीयूषं मुखकमलोदरनिःसृतसुधाधारोपचितं परस्य पुंसः सुश्लोकैराकलितमेतदाख्यानं श्रवणपुटैः अभीक्ष्णं पिबन् यो वर्तते अथ स पान्थः पथिक इदं सुखसाधनमदो वेति परिभ्रमणेनेतस्ततः पर्यटनेन प्राप्तं परिश्रमं जहातीत्यन्वयः ॥ २२ ॥

॥ इति श्रीमद्भागवतटीकायां विजयध्वजतीर्थकृतायां पदरत्नावल्यां दशमस्कन्धे उत्तरार्धे त्रिनवतितमोऽध्यायः ॥

## ।। अथ चतुर्नवतितमोऽध्यायः ।।

**राजोवाच**

**ब्रह्मन् ब्रह्मण्यनिर्देश्ये निर्गुणे गुणवृत्तयः । कथं चरन्ति श्रुतयः साक्षात् सदसतः परे ।। १ ।।**

**श्रीशुक उवाच**

**बुद्धीन्द्रियमनःप्राणान् जनानामसृजत् प्रभुः । मात्रार्थं च भवार्थं च आत्मने कल्पनाय च ।। २ ।।**

---

यदनन्तनिगमनिकरनिरूपितगुणगणाकरं ब्रह्म तदेव कृष्णनाम्नाऽवतीर्णं नान्यदित्यतो मुमुक्षुभिरत्र भक्तिरितरत्र विरक्तिमूला कर्तव्येति विधीयतेऽस्मिन्नध्याये ।

तत्र नारदनारायणसंवादलक्षणमितिहासमुत्थापयितुं शुकं परीक्षित् पृच्छति **ब्रह्मन्नित्यादिना** । हे ब्रह्मन् पूर्णकाम । सर्वे वेदा यत्पदमामनन्तीति श्रूयते । तत्र श्रुतयः साक्षादामनन्ति उत लक्षणया वा? तत्र न प्रथम इत्याह– **कथमिति** । साक्षाच्चरन्ति वर्तन्ते, वाचकत्वेनेति शेषः। तस्य काऽनुपपत्तिः? अत्राह– **अनिर्देश्य इति** । यत् तदद्रेश्यमिति श्रुतेः । न द्वितीय इत्याह– **निर्गुण इति**[१] । 'केवलो निर्गुणश्च' इति श्रुतेः । गुणैः प्रवर्तमानस्य कथं निर्गुणत्वमुपपद्यत इत्यत्राह– **सदसत इति** । निर्गुणे गुणसमर्पकत्वेन श्रुतीनां सञ्चरणं कथमिति दौर्घट्यमापादयितुं शक्यते, यादृग् वस्तु तादृशावेदकत्वेन न कोऽपि विरोध इति तत्राह– **गुणवृत्तय इति**। गुणार्पकत्वेन गुणवृत्तिर्यासां तास्तथा । 'तुविग्रीवो वपोदरः सुबाहुरन्धसो मदे,' 'गुणाः श्रुताः सुविरुद्धाश्च देवे' इत्यादि श्रुतेः । अत एव नः संशयं छिन्धीति वाक्यशेषः ।। १ ।।

श्रुतयः सत्वादिगुणराहित्येन निर्गुणे ज्ञानानन्दादिगुणगणमणिमालालङ्कृतविग्रहे ब्रह्मणि साक्षाद् वर्तन्त इति परिहारमभिप्रेत्य पीठिकामारचयति– **बुद्धीति** । बुध्यादिसर्जनेन किं प्रयोजनम्? अत्राह– **मात्रार्थमिति** । 'मात्रा परिच्छेदे[२] देशे प्रवृत्तौ कर्णभूषणे' इत्यतो मात्रा प्रवृत्तिः, शब्दानामिति शेषः । तदर्थम् । 'मनसा वाऽग्रे सङ्कल्पयत्यथ वाचा व्याहरति' इति श्रुतेः । किमतः? अत्राह– **भवार्थं चेति** । 'भवो भद्रे हरे प्राप्तावित्यतः भवो भद्रं कल्याणम्, पुण्यमिति यावत् । तदर्थम् । 'स्वाध्यायप्रवचने एवेति नाको मौद्गल्यः । तद्धि तपस्तद्धि तपः' इति श्रुतिः । चशब्दौ समुच्चयार्थौ । बुध्यादीन्द्रियपूर्विका शाब्दी प्रवृत्तिरपि न स्वर्गादिविषया

---

१. ब्रह्म अनिर्देश्यं सर्वथाशब्दागोचरम् । कुतः? निर्गुणत्वात् । गुणेत्युपलक्षणम् । गुणादिशून्ये न शक्तिः सम्भवति । तन्निमित्तत्वात् तस्याः । सर्वथा शक्त्यविषये लक्षणापि न संभवतीति भावः ।

२. परिच्छदे इति स्यात् ।

**सैषा ह्युपनिषद् ब्राह्मी पूर्वेषां पूर्वजैर्धृता । श्रद्धया धारयेद् यस्तां क्षेमं गच्छेदकिञ्चनः ॥ ३ ॥**
**अत्र ते वर्णयिष्यामि गाथां नारायणोदिताम् । नारदस्य च संवादमृषेर्नारायणस्य च ॥ ४ ॥**
**एकदा नारदो लोकान् पर्यटन् भगवत्प्रियः । सनातनमृषिं द्रष्टुं ययौ नारायणाश्रमम् ॥ ५ ॥**
**योऽसौ भारतवर्षेऽस्मिन् क्षेमाय स्वस्तये नृणाम् । धर्मज्ञानशमोपेतः साकल्यादास्थितस्तपः ॥६॥**

---

किन्तु परमात्मविषयैव पुण्यसाधनमित्यभिप्रायेणाह– **आत्मन इति** । सन्ध्यकरणात् सदसद्विलक्षण एवात्मा, तमात्मानमुद्दिश्य शब्दराशेः प्रवृत्तिरिति भावः । ततः परमप्रयोजनमाह– **कल्पनाय चेति** । कल्पनाय परमात्मज्ञानाय । 'सत्येन लभ्यस्तपसा ह्येष आत्मा सम्यग्ज्ञानेन ब्रह्मचर्येण नित्यम्' इति श्रुतेः । चशब्देन मोक्षायेति सूचयति । 'तमेवं विद्वानमृत इह भवति,' 'ज्ञानेनामृतीभवति' इति श्रुतेः । अनेन वक्तृविवक्षापूर्विका शब्दप्रवृत्तिरित्यतो बुद्धीन्द्रियादिमत एव सुप्रयुक्तशब्देन ज्ञातपरब्रह्मतत्वगुणोपसंहारज्ञानप्रसन्नभगवत्सारूप्यादिमोक्षप्राप्तेः शब्दानां श्रीहरिविषयत्वं साक्षादङ्गीकर्तव्यमित्युक्तं भवति ॥ २ ॥

शब्दमात्रस्य हर्येकविषयत्वमुक्त्वाऽधुना 'वेदान्तविज्ञानसुनिश्चितार्थाः' इति वचनादुपनिषद्भागस्य तद्गुणगणावेदकत्वेन मुख्यवृत्त्या विषयत्वमिति[1] भावेनाह– **सैषेति** । हिशब्दो हेतौ । ईशबुद्धिस्थिताः सदेति वचनाद् या श्रीनारायणबुद्धिस्थिता सैषोपनिषद् वेदान्तापरपर्याया पूर्वेषां पूर्वजैर्ब्रह्मादिभिर्धृता अध्ययनरूपेण । न तु कृता नित्यवाक्यत्वात् । नित्ययाऽनित्यया स्तौमीत्यादेः । हि यस्मात् तस्माद् यस्तां श्रद्धया धारयेत् स क्षेमं मोक्षं गच्छेत् । ब्रह्मज्ञानलभ्यो मोक्षः कथं श्रुतिधारणया स्यादित्यत्राह– **ब्राह्मीति** । 'अथ कस्मादुच्यते ब्रह्मेति बृहन्तो ह्यस्मिन् गुणाः' इति श्रुतेर्ब्रह्मगुणावेदकत्वेन तज्ज्ञानद्वारा मुक्तिहेतुत्वोपपत्तेः । ज्ञानं च विरक्त्यादिमत एव स्यादिति भावेनाह– **अकिञ्चन इति** ॥ ३ ॥

भवच्छिष्यत्वेन मम भवदुक्तिः प्रमाणमस्तु, इतरेषां कथमिति शङ्का मा भूदिति भावेनाह– **अत्रेति** । अत्र श्रुतयः कथं चरन्तीत्यस्मिन्नर्थे । गाथां त्रिषट्पादलक्षणप्रबद्धां कथाम् । नारायणोदितां नारायणेन कथिताम् ॥ ४ ॥ नारायणेन सङ्गमः कथमभून्नारदस्येत्यत्राह– **एकदेति** ॥ ५ ॥

कस्मिन् खण्डे नारायणाश्रमः, तत्र किं कुर्वन् किंप्रयोजन आस्त इति तत्राह– **योऽसाविति** । तपसोऽङ्गवैकल्यपरिहाराय साकल्यादित्युक्तम् । धर्मः सुकृतं विहिताचारो वा । ज्ञानं स्वपरपदार्थावगाहि । शमो निष्ठा । एतैरुपेतः । लोकदृष्ट्यैतदुक्तम् ॥ ६ ॥

---

१. तद्विषयत्वमिति यावत् ।

**तत्रोपविष्टमृषिभिः कलापग्रामवासिभिः । परीतं प्रणतोऽपृच्छदिदमेव कुरूद्वह ॥ ७ ॥**
**तस्मा अवोचद् भगवान् ऋषीणां शृण्वतामिमाम् । यो ब्रह्मवादः पूर्वेषां जनलोकनिवासिनाम् ॥८॥**

**श्रीभगवानुवाच**

**स्वायम्भुवं ब्रह्मसत्रं जनलोकेऽभवत् पुरा । तत्रत्यानां मानसानां मुनीनामूर्ध्वरेतसाम् ॥ ९ ॥**
**श्वेतद्वीपं गतवति त्वयि द्रष्टुं तमीश्वरम् । ब्रह्मवादः सुसंवृत्तः श्रुतयो यत्र शेरते ॥ १० ॥**
**तत्राप्ययमभूत् प्रश्नस्त्वं मां यदनुपृच्छसि । तुल्यव्रततपःशीलास्तुल्यस्वीयारिमध्यमाः ॥ ११ ॥**
**अपि चक्रुः प्रवचनमेकं शुश्रूषवोऽपरे ॥ १२ ॥**

**सनन्दन उवाच**

**स्वसृष्टमिदमापीय शयानं सहशक्तिभिः । तदन्ते बोधयाञ्चक्रुस्तल्लिङ्गैः श्रुतयः परम् ॥ १३ ॥**

---

तत्राश्रमे उपविष्टं तम् ॥ ७ ॥ तस्मै नारदायेमां गाथामवोचत् । गाथां विशिनष्टि– **य इति** । पूर्वेषां सनकादीनाम् । ब्रह्मवादो ब्रह्मविषयको वादः । तामिमामिति सम्बन्धः ॥ ८ ॥

पुरा तत्रत्यानां जनलोकस्थितानां मानसानामूर्ध्वरेतसां मुनीनां स्वायम्भुवं स्वयम्भुपुत्रैः क्रियमाणं ब्रह्मसत्रं ब्रह्मविचारलक्षणो यज्ञो जनलोकेऽभवदित्यर्थः ॥ ९ ॥

यत्र श्वेतद्वीपे ब्रह्मणि श्रुतयः शेरते अन्यबोधकत्वव्यापारमन्तरेण तद्गुणबोधनपरा एव सन्ति । तं श्वेतद्वीपं त्वयि गतवति ब्रह्मवादः सम्प्रवृत्त इत्यन्वयः ॥ १० ॥

कथम्? अत्राह– **तत्रेति** । मुनयः कीदृशा इत्यत्राह– **तुल्येति** । अरिः शत्रुः ॥ ११ ॥

एकं प्रवचनं प्रकृष्टं वचनं यस्य स तथा, प्रवक्ता व्याख्यातेत्यर्थः, तम् (चक्रुः) । अपरे शुश्रूषवः श्रोतारः । योऽत्र प्रवक्ता स (न?) श्रेष्ठ इत्यत्र तात्पर्यं ज्ञातव्यम् । 'सनकाद्याः समाः सर्वे तत्र श्रेष्ठः कुमारकः' इति वचनात् ॥ १२ ॥

स एकः कथं प्रावोचत्? अत्राह– **स्वसृष्टमिति** । ब्रह्मलये स्वसृष्टमिदं जगदापीय स्वशक्तिभिः श्रीभूदुर्गाख्याभिर्विभक्तप्रकृतिमूर्तिभिः सह शयानं योगनिद्रां कुर्वाणं परं परमात्मानं तदन्ते ब्रह्मप्रलयावसाने श्रुतयः तल्लिङ्गैः संसारनिर्मूलनादिब्रह्मलक्षणैः बोधयाञ्चक्रु-रित्यन्वयः । अत्रेदं तात्पर्यम् । मूलप्रकृतिः श्रीभूरूपाभ्यां विष्णुना सह शेते । श्रुतिनाम्ना दुर्गारूपेण विष्णुं स्तौति जयजयेति । पुंशक्तिविषयबोधनवचनं[1] दुर्गाख्याया अपि तादृक्

---

१. बोधनवचनात् -ग.पाठः

**यथा शयानं सम्राजं बन्दिनस्तत्पराक्रमैः । प्रत्यूषेऽभ्येत्य सुश्लोकैर्बोधयन्त्यनुजीविनः ॥ १४ ॥**

**श्रुतयः ऊचुः**

**जयजय जह्यजामजित दोषगृहीतगुणां त्वमसि यदात्मना समवरुद्धसमस्तभगः ।**
**अज जगदात्मनामखिलशक्त्यवबोधक ते क्वचिदजयाऽऽत्मनाऽनुचरतोऽनुचरेन्निगमः ॥१५॥**

---

शक्तिमत्त्वात् तदर्थत्वेन भगवदाज्ञया गृहीतविग्रहत्वाच्च । श्रुतीनामनन्तत्वेनाधिगन्तुमशक्यत्वाद् दुर्गानाम्नोऽपि तथात्वाच्च । काली भद्रेत्यादि बहुरूपत्वप्रतीतेश्च । श्रुतेश्चानन्तत्वेन वाक्यभेदात् श्रुतय इति बहुवचनं च युज्यते । तदुक्तम्– 'श्रीर्भूरिति रूपाभ्यां प्रकृतिर्विष्णुना सह । शेते श्रुतिस्वरूपेण स्तौति ब्रह्मलये हरिम् । एकाऽप्यनन्तरूपा सा वाक्यभेदात् सरस्वती । अनादिनिधना नित्या स्तौति नारायणं प्रभुम्' -इति । अनेन इदं पौरुषेयं वाक्यत्वादितरवाक्यवदिति प्रत्युक्तम् । 'यावद् ब्रह्म विष्ठितं तावती वाक्'' इति श्रुतेः । त्रिरूपाया रमायाः शक्तिशब्दाभिधेयत्वं वेदापरपर्यायायाः[1] शक्तेश्चेतनाभिधेयत्वं[2] विष्णोः स्वरूपभूतशक्तेः शक्यत्वगुणयोगेन युज्यते । नित्याव्यवधानादिविशेषशक्तित्वाच्च । 'विष्णोः स्वरूपशक्तेः सा शक्यत्वाच्छक्तिरेव तु । नित्याव्यवहितत्वाच्च विशेषाच्छक्तिनामका' इति वचनात् सामान्यवाचिनोऽपि शक्तिशब्दस्य विशेषनिष्ठत्वं पङ्कजादिशब्दवद् युज्यते । पङ्काज्जातं पङ्कजमिति शैवालादिषु वृत्तिसंभवेऽपि पद्मे एव वर्तते (पङ्कजशब्दः) । विप्रादावपि ब्रह्मशब्दवृत्तियोगेऽपि चतुर्मुख एव (ब्रह्मशब्दः) । रुद्रशब्दस्य रौद्रगुणयोगेनातपे शङ्कर एव (वृत्तिः)। आदित्यशब्दस्यादितिपुत्रसामान्यवाचित्वसंभवेऽपि सूर्य एव (वृत्तिः) इत्याद्यूह्यम् । 'यथैव पङ्कजं ब्रह्मा रुद्र इत्यादिकं पदम्' इति वचनात् । उमाशच्यादीनामपि प्रकृतिशब्द-वाच्यत्वेन प्रसिद्धेः कथं (रमाया एव ग्रहणम्)? उच्यते । अपरप्रकृतित्वं तासां, लक्ष्म्या एव परमप्रकृतित्वम् । तदुक्तम्– 'श्रीः परा प्रकृतिः प्रोक्ता ब्रह्माणी त्ववरा ततः । उमाशचीमुखास्तस्या अवराः सम्प्रकीर्तिताः' इति ॥ १३ ॥

नित्यबुद्धस्य हरेः कादाचित्कबोधनं विडम्बनमात्रं न तु सत्यमिति हृदि कृत्वा लौकिकमतमनुसरति– **यथेति** । अनुजीविन इत्यनेन वेदान्तानां तदेकनिष्ठत्वं सूच्यते । 'राज-वज्जयशब्दाद्या नित्यबुद्धस्य बोधनम् । विडम्बमात्रं कैवास्य निद्रा विद्यापतेर्हरेः' इति च ॥१४॥

---

१. बलापरपर्यायायाः -ग.पाठः

२. शक्तिशब्दस्य चेतनवाचित्वमित्यर्थः । चेतनोऽभिधेयो यस्येति व्युत्पत्त्या ।

श्रुतयोऽपि लक्ष्मीविभूतयः। पुराणस्य स्त्रीशूद्रादिश्रुतिगोचरत्वेन श्रुत्यर्थ एव गृह्यते न तु शब्द इत्यभिप्रेत्य कथितम्– **श्रुतय ऊचुरिति । जयजयेति**[१] ।

नित्यविजयाधिकरणस्य हरेर्लोटि (लोटा?) एष्यत्कालविजयो नाशास्यते किन्तु विजयप्रकाशनम् । भक्तानुकम्पित्वेन जयं प्रकाशयेत्यर्थः । 'सर्वदा जयतो विष्णोर्जयस्तस्य प्रकाशनम्' इत्यादि । अत्र राजवद् दिशां जयो न प्रार्थ्यते किन्तु दुस्तरप्रकृत्यादे-रित्याशयवानाह– **जहीति** । हे अजित । दोषैर्जन्मदुःखाज्ञानादिभिरानंदज्ञानादयो जीवगुणा गृहीता संवृता यया सा दोषगृहीतगुणा तामजाम् । अज गतिक्षेपणयोरिति धातोर्जीव-गुणाक्षेपिकां[२] जहि हन । तथा परमाच्छादिकां जहि गमय, अपसारयेति यावत् । एते अपि प्रकृतिशब्दवाच्ये । 'अथान्ये प्रकृती दुष्टे नृषु प्रातिस्विकं स्थिते' इत्यादेः । एतेन जयजयेत्यारभ्य संवृताऽधिसंवृतेत्यन्ता श्रुतिर्गृहीता[३] । अरतिं तन्द्रीम्[४] । प्रकृत्याच्छन्न-

---

१. इयं स्तुतिः श्रुतिगीतेति विख्याता । श्रुतिगीताश्लोकाः सर्वेऽप्युदाहृत्यैव व्याख्याताः । न तथाऽन्ये भागवतश्लोकाः । श्रुतिगीताव्याख्याने श्लोकानां मूलभूताः श्रुतयोऽप्याचार्यैरुदाहृताः । यद्यप्येताः श्रुतयो विजयध्वजतीर्थैः नोदाहृताः न व्याख्याताश्च । तथाप्येकत्रैव सर्वविषयलाभाय सुबोधत्वाय ताः श्रुतीरुदाहृत्य तासामर्थोऽपि निवेशितमस्माभिरधस्तनटिप्पणेषु ।

२. जीवाच्छादिकामित्यर्थः ।

४. शाण्डिल्यश्रुतिस्थपदविवरणमिदम् ।

३. 'जयजय हनहन प्रकृतिं द्रावय भिन्धिभिन्धि दुःखं तमोऽरतिमजित परम परमेशान वासुदेव वैकुण्ठ नारायण हृषीकेशानया हि जीवगुणा विसंवृता अधिसंवृताः । एष ह्यानन्दोऽजरोऽमरोऽधि-शक्तिमांस्त्वदाभासस्त्वया तथाऽधिसंभाव्यो यतः परः परमेश्वरः परज्ञानः परानन्दः परश्रीः परयशाः परप्रवृत्तिर्नित्यमेव स्वतोऽसि त्वं रमायास्त्वं विरिञ्चस्य रुद्रेन्द्रसोमसूर्यमुखानामदभ्रशक्तिदोऽसि प्रवर्तकोऽसि निवर्तकोऽस्यनोऽस्यनन्तोऽसि सृजतो हि ते श्रुतयोऽनुवर्तन्ते नैवासृजतः किं विदधते किंवा निषेधन्ति स्तुतिमात्रा एव ते स्युः प्रभो विभो समास्व व्यास्वोत्तिष्ठ प्रचर विचर सन्धिनु सन्धिनु मा ते क्षणोऽत्यगान्मा ते क्षणोऽत्यगात्' इति शाण्डिल्यश्रुतिः ।

तदर्थः ॥ हे परम सर्वोत्तम अत एवाजित केनापि पराभवरहित विष्णो जय जयं प्रकाशय । आदराद् द्विरुक्तिः । एवमुत्तरत्रापि । हे ईश सर्वनियामक वैकुण्ठलोकप्रापकत्वाद् विकुण्ठपुत्रत्वाद्वा वैकुण्ठ प्रकृतिं द्विविधां प्रकृतिं द्रावय हन । द्विविधायाः प्रकृतेस्तमोयोग्यत्वादुभयं तमसि पातय । 'सततं दुःखितेऽपि च' इत्युक्तेः प्रकृतिद्वयस्यापि तमोयोग्यत्वं द्रष्टव्यम् । हे नारायण गुणपूर्णत्वादिरूप दुःखं तमः अज्ञानम् अरतिं भगवति रत्यभावं च भिन्धि विदारय । भिदृ्‌लृ विदारण इति धातोः । अज

त्वाविशेषाज्जीवात्मनोः को विशेष इति तत्राह– **त्वमसीति** । त्वं यद् यस्मादात्मना स्वत एवासम्भिन्नोऽत एवावरुद्धः अनपगतः समस्तः पूर्णो भग ऐश्वर्यादिगुणो यस्य स तथा । अनपगतपूर्णैश्वर्यादिगुणोऽसीत्यर्थः । 'भगो योन्यां भगोपस्थे यशोवीर्यार्कभूतिषु । कान्तीच्छाज्ञानवैराग्यधनैश्वर्यतपस्सु च' इति यादवः । अतस्त्वत्प्रतिबिम्बभूतस्य जीवस्य प्रकृत्याच्छादितत्वात् त्वत्प्रसादमन्तरेणैश्वर्याद्या गुणा न प्रकाशन्ते । अनेन ह्येष आनन्द इत्यारभ्य स्वतोऽसि त्वमित्यन्ता गृहीता । इतोऽपि विशेषोऽस्तीत्याह– **अजेति** । अज हे विष्णो जगदोकसां जगदाश्रयभूतानां श्रीब्रह्मादीनां सृष्ट्याद्यखिलशक्त्यवबोधक । रमाया इत्यारभ्यानन्तोऽसीत्यन्ताऽनेन सूचिता । इदानीं गुणवृत्तयः श्रुतयो निर्गुणे कथं चरन्तीत्यस्य परिहारमाह–

---

अनाश । प्रार्थने कारणमुच्यते– **अनयेति** । प्रकृत्या हि यस्माज्जीवगुणा ज्ञानानन्दादयो विसंवृता विशेषाकारेण संवृता आच्छादिताः, अधिसंवृता अधिकमत्यन्तमाच्छादिताः । जीवस्य गुणाः सन्तीति कुतो येनावृतत्वमित्यत उक्तम्– **एष हीति** । आनन्द आनन्दरूपः, अजरो जरारहितः, अमरः स्वरूपतो मरणरहितः, अधिशक्तिमान् स्वावराधिकशक्तिमान् । कुत उक्तरूपत्वमित्यत उक्तम्– **त्वदाभास इति** । त्वत्प्रतिबिम्बत्वात् त्वयैव तथा आनन्दरूपत्वेनाधिसंभाव्यः सम्यक् सम्भावनीयः । भगवत्प्रतिबिम्बत्वेऽपि जीवस्य गुणाः कुत इत्यतो भगवति गुणानाह– **यत इति** । यतः परः परमात्मा परमेश्वरः सर्वोत्तमः । पॄ पालनपूरणयोरिति धातोः । परज्ञान इत्यादेः पूर्णज्ञानः पूर्णानन्दः पूर्णशक्तिः पूर्णश्रीः पूर्णयशा इत्यर्थः । नित्यं स्वत एव परप्रवृत्तिः परा उत्कृष्टा प्रवृत्तिर्जगदुत्पत्त्यादिविषये चेष्टा यस्य स तथोक्तः । तव जीवस्य च साम्यं किम् ? नेत्याह– **नित्यमिति** । त्वं नित्यं सर्वदा स्वतः स्वातन्त्र्येणैव पूर्णज्ञानादिमानसि जीवस्तु त्वदधीनज्ञानादिमानित्यर्थः । त्वं रमा विरिञ्चादेरदभ्रशक्तिदोऽसि यथायोग्यं पूर्णशक्तिदोऽसि सृष्ट्यादौ प्रवर्तकोऽसि तस्मान्निवर्तकोऽसि अनोऽसि चेष्टकोऽसि अनन्तोऽसि अन्तत्रयविधुरोऽसि । सृजतो हि ते श्रुतयो विधिनिषेधरूपा अनुवर्तन्ते । असृजतस्ते नैवानुवर्तन्ते, जीवं प्रतीति शेषः । किंवा विधत्ते? श्रुतिसमुदाय इति शेषः । किं वा निषेधति? सर्वस्यापि जीवस्य शरीरादिरहितत्वादिति भावः । असृजतस्ते श्रुतयः स्तुतिमात्रा एव स्युः। प्रभो प्रकर्षेण भवनशील विभो विविधभवनशील समास्व वासुदेवादिरूपेण सङ्क्षेपतो विभक्तो भव व्यास्व अनन्तरं मत्स्यादिरूपेण विस्तारतो विभक्तो भव । यद्वा आदौ समास्व संक्षेपेण सृष्टिं कुरु व्यास्व पश्चाद् विस्तारेण सृष्टिं कुरु । समासः सङ्क्षेपो व्यासो विस्तारः । तदर्थमुत्तिष्ठ नित्यजाग्रत्त्वं प्रकाशय प्रचर प्रकृष्टं व्यापारं कुरु विचर विविधव्यापारं कुरु । सन्धिनु धिनु धीङ् पुष्टाविति धातोः सृष्टिं कृत्वा सम्यक् पोषय । इतः परं ते तव क्षणः क्षणमात्रकालोऽपि सृष्ट्याद्यर्थं मा अत्यगात् अतिक्रान्तो मा भूत् । क्षणमालस्यं मा कुर्विति भावः । अथवा ते क्षणः त्वद्विषयोऽवकाशः मा अत्यगादतिक्रान्तो मा भूत् । सदा त्वद्विषयश्रवणादिव्यापारो भूयादिति । अन्ते द्विरुक्तिरवधारणार्था -छलारी ।

बृहदुपलब्धमेतदवशेषतया यत उदगास्तमस्यविकृतेऽविकृतः ।
अत ऋषयो दधुस्त्वयि मनोवचनाचरितं कथमयथा भवन्ति भुवि दत्तपदानि नृणाम्[१] ॥१६॥

---

**कचिदिति** । निगमस्तत्वनिश्चायको वेदः कचित् सृष्टिकाले आत्मना जीवेन अजया प्रकृत्या चानुचरतः प्रवर्तमानस्य ते तवानुचरेत् चित्तानुवर्तित्वेन विधिनिषेधरूपेण वर्तते । हरेस्तदगोचरत्वाल्लये केवलं स्तुतिरूपेण । जीवानां निर्देहकत्वेन तत्प्रयोजनको नेति शेषः । 'लयस्य त्वष्टमो भागो सृष्टिकाल उदाहृतः । तत्रैव वेदसञ्चारो ह्यन्यदा स्तुतिमात्रकाः' इति स्मृतिः । यस्माद् विधिनिषेधविषयो जीवस्तस्मात् सृष्टिं कृत्वा वेदैर्जीवान् बोधयित्वा तदुक्त-मनुष्ठाय स्वज्ञानमुत्पाद्य त्वं प्रसन्नः तत्स्थां पिशाचवद् वर्तमानामजां जहीति । अनेन सृष्टिकाल एव गुणमये जगति वर्तमानाः सदा निर्गुणे परमेश्वर एव वर्तन्त इति प्रश्नपरिहारो दर्शितः । यजेत न हन्तव्य इत्यादिविधिनिषेधानां स्तुतिपरत्वं युक्तम् । कथम्? यत्प्राप्त्यर्थं यन्नियमाद् विधिनिषेधा वर्तन्ते स त्वमजां जहीति योजनोपपत्तेः । 'विध्यादीनां नियन्ता च पूज्यः प्राप्यश्च तद्वताम् । इत्यादिस्तुतिरूपेण विध्यादिश्रुतयोऽपि तु । हरिं वदन्ति सर्वेषां तन्नामत्वादथापि च' इति स्मृतेः । अस्य सृजतो हि त इति प्रभृति मा ते क्षणोऽत्यगादितिपर्यन्तं मूलश्रुतिरियम् । हन हिंसायामिति धातुः । पृथक्श्रुतित्वान्न पूर्वापरसम्बन्धः । उपलक्षणत्वादनन्तत्वात् श्रुतीनां सर्वश्रुत्यर्थोपबृंहितत्वाच्च तेषां श्लोकानां न सर्वश्रुतीनां पृथगुक्तिः । 'सर्वश्रुत्यर्थसम्पन्नान् श्लोकान् सत्यवतीसुतः । एकैकशाखाश्रुत्यर्थान् जगौ सर्वोपलक्षणान् । बबन्ध तान् भागवते प्रतिश्लोकं पृथक् श्रुतिः' इत्याचार्यैरेवोक्तत्वान्नास्माभिर्मिथः सम्बन्धार्थं प्रपञ्च्यते ॥ १५ ॥

**बृहदुपलब्धमिति** । तथाहि । अविकृते तमसि, 'तम आसीत् तमसा गूळ्हमग्रे' इति श्रुतेः, नित्यतमोविषये त्वमुदगा उत्कृष्टत्वं गतः । मूलप्रकृतेरपि त्वमधिकोऽसि यतोऽतो बृहत्त्वेन बृह वृद्धाविति धातोः पूर्णत्वेन एतत् त्वत्स्वरूपम् उपलब्धं वेदेषु दृष्टम् । कथम्? अत्राह–

---

१. बृहद्धि दृष्टमवशेषितं यत् स्वरूपमीशस्य तमोऽधिकस्य । सर्वाधिकत्वेन तमो हि दुर्गा ततस्तथैनं विबुधा यथाऽगुः -इति उद्दालकायनश्रुतिः ।

तदर्थः ॥ हि यस्मात् कारणात् तमोऽधिकस्य तमसः सकाशादधिकस्योत्कृष्टस्येशस्य यत् स्वरूपं तदवशेषितमवधित्वेनावशिष्टम् । तस्मात् कारणाद् वेदेषु बृहत् पूर्णं दृष्टमुपलब्धम् । तमः केत्यत आह– **तमो हीति** । हिशब्देन तम आसीदिति श्रुतिप्रसिद्धिं सूचयति । ततः सर्वोत्तमत्वेनोपलब्धत्वाद् विबुधा ब्रह्मादिज्ञानिन एनमीशं सर्वोत्तमत्वेन प्रकारेण यथा स्वयोग्यतानुसारेण अगुर्ज्ञातवन्तः -छ.

**इति सूरयस्त्र्यधिपतेऽखिललोकमलक्षपणं तव कथामृताब्धिमवगाह्य तपांसि जहुः ।
किमुत पुनः स्वधामविधुताशयकालगुणाः परम भजन्ति ये पदमजस्रसुखानुभवम्[1] ॥१७॥**

---

**अवशेषतयेति** । इत इदमधिकमितोऽपीदमधिकमिति सर्वाधिकत्वेन ततोऽधिकाभावेनावशेषितत्वेन परिशेषप्रमाणसिद्धत्वेनेत्यर्थः । 'स एष रसानां रसतमः परमपरार्ध्योऽष्टमो यदुद्गीथः' इति श्रुतिः । 'द्वितीयार्थे तृतीयार्थे पञ्चम्यर्थे च सप्तमी । चतुर्थ्यर्थे च सम्प्रोक्ता विषयेऽपि च तां विदुः' इति महाव्याकरणवचनाद् विषयपञ्चम्यौ[2] युज्येते । कीदृशस्त्वम्? अविकृतो विकाररहितः । अत ऋषयो ब्रह्मादिज्ञानिनस्त्वं सर्वोत्तम इत्येतदर्थपराणि त्वयि तानि मनोवचनाचरितमित्येकवद्भावविवक्षयैकवचनं मनोवचनाचरितानि अदधतामिति[3] दधुः शिक्षां[4] धृतवन्तः । पुंसां त्वयि तानि मनआदीनि कथमयथा अतद्विषयाणि भवन्तीति दधुः । तत्र दृष्टान्तः– **नृणां पदमिति** । भूमौ निक्षिपामीति प्रवर्तमानानां दत्तानि निहितानि पदानि यथा भूमेरन्यत्र न भवन्ति तथेत्यर्थः । जलवृक्षादेराधारशक्तिमत्त्वेऽपि भूम्यन्तर्भावान्न पृथगुक्तिः । अतस्तथा बृहत्त्वेन दधुरिति वा । 'अतश्शब्दश्च हेत्वर्थे तथेत्यर्थे च वर्तते । उभयार्थे च भवति यथा शब्दविदो विदुः' इति वचनात् । अनिर्देश्यमप्येकदेशेन निर्दिष्टं भवतीत्युक्तं कथमयथा भवन्तीत्यनेन । यथा सर्वां भूमिमसञ्चरन्नप्येकदेशसञ्चारेण भूसञ्चारी भवति तथेति । 'निरपेक्षबृहत्त्वस्य ज्ञानाज्ज्ञानं भवेत् परम् । बृहत्त्वमेव तु गुणैः सर्वैरुद्दिश्यते यतः' इति मान्यसंहितायाम् ॥ १६ ॥

इति शब्दो हेत्वर्थः । पुनरवधारणार्थः । 'पुनरप्रथमे प्रश्ने व्यावृत्ताववधारणे' इति । हे परम परावरेशेश ते तव अजस्रसुखानुभवम् अजस्रमनारतं सुखं परानन्दः अनुभवो ज्ञानं यस्य तत् तथा तत्पदं स्वरूपं भजन्ति । अनन्याश्रयत्वात् स्वधामा परमस्तेन विधुता आशयगुणा

---

१. त्यजन्ति तापं य उ ते भवत्कथा इति स्म मुक्ताः किमु ते स्वरूपगाः । परावरेशेश पदं भजन्तः परं परानन्दमनारतं ते -इतीन्द्रद्युम्नश्रुतिः ।
तदर्थः ॥ हे परावरेशेश परा मुक्तियोग्या अवरा मुक्त्ययोग्या नित्यसंसारिणस्तमोयोग्याश्चेति त्रिविधानां जीवानामीशेश अतिशयेन नियामक । यद्वा परावराणामीशा लक्ष्मीस्तस्या ईश । उशब्दोऽप्यर्थे । ये भवत्कथा भवतः कथा येषां ते तथोक्तास्ते तव कथामृताब्धिमग्नाः संसारिणोऽपि इति यस्मात् कारणात् तापं त्यजन्ति स्म, तदा ये स्वरूपगाः स्वरूपाविर्भावं प्राप्ताः परानन्दं परानन्दप्रदं परमुत्तममनारतं नित्यं भजन्तस्ते मुक्तास्तापं त्यजन्तीति किमु वक्तव्यमिति -छ.

२. विषयत्वार्थे पञ्चम्यर्थे च तमसीति सप्तमी युज्यत इति यावत् । ३,४. अस्पष्टमिदम् ।

**दृतय इवोच्छ्वसन्त्यसुहृदो यदि ते महदहमादयोऽण्डमसृजन् यदनुग्रहतः ।**
**पुरुषविधान्वयोऽत्र चरमोत्तममध्यमादिषु यस्तव सदसतः परं प्रथयेदविशेषमृतम्[1] ॥ १८ ॥**

---

दुःखाद्याः कालगुणा उत्पत्त्यादयो यैस्ते मुक्तास्तपांसि तापान् जहुरिति किमुत पुनर्वक्तव्यमेव? हे त्र्यधिपते त्रिलोकीनाथ सूरयो दर्शनादिभाषाविचक्षणाः अखिललोकस्य मलं क्षपयतीत्य-खिललोकमलक्षपणस्तस्य तव कथामृताब्धिमवगाह्यापि तपांसि जहुरिति यस्मादिति शेषः ॥ १७ ॥

महदहमादयो ब्रह्मरुद्राद्यभिमन्यमानानि महदहङ्कारादितत्वानि यस्यानुप्रवेशलक्षणानुग्रहतो ब्रह्माण्डमसृजन् तस्यात्यन्तोपकारकस्य ते तव यदि असुहृदः सर्वमिथ्यात्ववादिनस्तर्हि ते दृतयः कारुशालयामग्निधमनार्थं निर्मितचर्मविशेषा इव उच्छ्वसन्ति तमसि प्रविष्टा दुःखभराक्रान्तत्वाद् विनष्टप्राणबला दीर्घश्वासं कुर्वन्ति । अत्र चरमोत्तममध्यमादिषु चरमा मनुष्योत्तमा उत्तमा इन्द्रादिदेवा मध्यमा ऋषिगन्धर्वा आदिर्मुक्तसमुदाये[2] प्रथमो ब्रह्मा एषु पुरुषेषु यस्तवाजस्रम् ऋतमेकप्रकारं, नित्यमिति यावत्, अनन्तसुखमविशेषं विषयविशेषनिमित्तक्षणभङ्गुरसुखमन्तरेण स्वरूपभूतापरिमितानन्दपूर्णं सदसतः परं प्रथयेत् जानाति शिष्यादिषूपदिश्य प्रख्यापयति च, स पुरुषविधस्य जीवदेहगतत्वेन तदाकारस्य तवान्वयोऽनुकूला प्राप्तिर्यस्य (स) तथा । 'असक्तो देहपुर्येष जीववद् देहगोऽपि यत् । अथवा पुंविधातृत्वात् पुंविधः पुरुषोत्तमः' इति वचनात् । तादृशं त्वामाप्नोतीत्यर्थः । प्रथयतीति प्रथनः ॥ १८ ॥

---

१. अनिशमनुश्वसनत्यसुखोद्धरितास्तव रिपवो दृतिवत् तमसि प्रविष्टाः । तव गुणप्रथनाः परिहाय तमः परियान्ति ते पदमजस्रमनन्तसुखम्– इति पैङ्गिश्रुतिः.

हे स्वामिन् तव रिपवस्तमसि प्रविष्टाः सन्तोऽसुखोद्धरिता असुखरूपिणः सन्तः, सुखलेशोऽपि नास्तीति सूचनायासुखेत्युक्तम्, दृतिवद् भस्त्रवदनिशं निरन्तरमुच्छ्वसन्ति दीर्घश्वासं कुर्वन्ति । श्वाससुखमपि तेषां नास्तीति भावः । तव गुणप्रथनाः त्वद्गुणानां सार्वज्ञादीनां विचारकर्तारः तमः संसारकारणीभूताविद्यां परिहाय अजस्रं नित्यम् अनन्तसुखं पूर्णसुखं ते पदं स्वरूपं परियान्ति सायुज्यादिलक्षणां मुक्तिं प्राप्नुवन्तीत्यर्थः -छ.

२. मुक्तियोग्यसमुदाये इति स्यात् ।

**उदरमुपासते यर्हि वर्त्मनि सूक्ष्मदृशः परिसरपद्धतिं हृदयमारुणयो दहरम् ।**
**तत उदयाच्च नन्दनपथाऽथ शिरः परमं पुनरिह यत् समेत्य न पतन्ति कृतान्तमुखे[१] ॥ १९ ॥**

---

'शर्करा क्षुद्रपाषाणे सुसूक्ष्मे खण्डिते गुडे' इति, 'शर्करा तु शिलाभेदे ऋग्भेदाल्प-कपालयोः' (इति), 'शर्करं तत्र देशेषु सितायां शकले गुडे' इति च (अभिधानम्) । अतः शर्कराक्षाः सूक्ष्मदृष्टयस्तेषु ख्याता शार्कराक्षास्त एव ब्रह्मणि सूक्ष्मदृष्टयो हरेरशेषविशेषान् विजानन्तो यर्हि यस्मात् प्राणं प्रत्युरु गृणीहीत्यब्रवीदिति वचनादुदरनामकं ब्रह्मोपासते । उदरं पूर्णं ब्रह्म । उद्गतोऽरः परिच्छेदो यस्मात्तदुदरं पूर्णमित्येकार्थत्वात् । यस्माच्चारुणयो हृद्यनाद् हृदयनामकं ब्रह्मोपासते । यस्माच्चेतरे माण्डूकेयादयो दहरमाकाशादप्यतिसूक्ष्मं (ब्रह्मोपासते) । परिसरो मुख्यप्राणः पद्धतिर्मार्गो यस्य स तथा । परिसरस्य पद्धतिर्वा । तदुपासते तद् ब्रह्म । ततो हृदो नन्दनपथा ब्रह्मनाडीद्वारा शिरः प्रत्युदगात् । अथ यत् परमं ब्रह्म पुनरिह हृदयादिषु स्थितमुपास्य तत्समीपमुपेत्य कृतान्तमुखे संसारे न पतन्तीत्यन्वयः ॥ १९ ॥

---

१. 'तं प्रपदाभ्यां प्रापद्यत ब्रह्मेमं पुरुषं यत् प्रपदाभ्यां प्रापद्यत ब्रह्मेमं पुरुषं तस्मात् प्रपदे तस्मात् प्रपदे इत्याचक्षते शफाः खुरा इत्यन्येषां पशूनाम् । तदूर्ध्वमुदसर्पत् तावूरू अभवतामुरुगृणीहीत्यब्रवीत् तदुदरमभवदुर्वेव मे कुर्वित्यब्रवीत् तदुरोऽभवदुदरं ब्रह्मेति शार्कराक्षा(क्ष्या) उपासते हृदयं ब्रह्मेत्यारुणयो ब्रह्मा हैव ताइ । ऊर्ध्वं त्वेवोदसर्पत् तच्छिरोऽश्रयत यच्छिरोऽश्रयत तच्छिरोऽभवत् तच्छिरसः शिरस्त्वं ता एताः शीर्षन् श्रियः श्रिताश्चक्षुः श्रोत्रं मनो वाक् प्राणः । श्रयन्तेऽस्मिन् श्रियो य एवमेतच्छिरसः शिरस्त्वं वेद' -इत्यैतरेयोपनिषत्.

तदर्थः ॥ ब्रह्म परमात्मा तमिमं पुरुषं पुरुषाकारं चतुर्मुखाद्यधिष्ठितं देहं प्रपदाभ्यां पादाग्रद्वयसंयोगेन प्रापद्यत प्रविवेश । यद् यस्माद् ब्रह्म इमं पुरुषं चतुर्मुखं प्रपदाभ्यां प्रापद्यत तस्मात् परमात्मप्रवेशहेतुत्वात् चतुर्मुखपादाग्रे प्रपदे प्रपदनामके अभवताम् । तस्मात् चतुर्मुखाकार-वत्त्वान्मनुष्यादीनां पादाग्रे अपि प्रपदे इत्याचक्षते जनाः । अन्येषां चतुर्मुखाकाररहितानां पशूनां गवादीनां पादाग्राणि शफाः खुरा इत्याचक्षते । तदूर्ध्वं ताभ्यां प्रपदाभ्यामूर्ध्वं ब्रह्मोपसर्पत् प्राप । ऊरू इति शेषः । तौ ऊर्ध्वावयवौ ऊरूनामकावभवताम् । ततः किञ्चिदूर्ध्वं गत्वा स्वेन सहागतं वायुं तद् ब्रह्म उरु गृणीहीति उत्कृष्टत्वेन मत्स्तोत्रं कुर्विति अब्रवीत् । वायुश्च तत्रोर्ध्वस्थाने उत्कृष्टत्वेन तुष्टाव । तत् स्थानमुदरं तन्नामकमभवत् । तत्र स्थितं तद् ब्रह्माप्युदरनामकमभूत् । ततः किञ्चिदूर्ध्वं गत्वा उर्वेव विस्तृतमेव मे निवासस्थानं कुर्विति तद् ब्रह्म वायुमब्रवीत् । वायुश्च तथा चकार । तत् स्थानमुरोनामकमभवत् । उरोमध्ये हृदयमस्तीत्यपि ज्ञेयम् । शर्कराक्षाः सूक्ष्मदृष्टयस्तेषु ख्याता

**स्वकृतविचित्रयोनिषु विशन्निव हेतुतया भरतमतश्चकास्स्यनलवत् स्वकृतानुकृतिः ।**
**अपि वितथास्वमूष्ववितथोरुविधं मनसि निकटधियो नयन्त्यभिविपत्य तव[१] ॥ २० ॥**

---

शार्कराक्षनामकाः केचिदृषय उदरम् उदरस्थमुदरनामकं ब्रह्मेत्युपासते । आरुणयः अरुण उद्यदादित्यवद् रक्तवर्णो नारायणः, तदुपासकत्वादारुणिनामकाः केचिदृषयो हृदयं हृदि नियामकत्वेनायनाद् हृदयस्थं हृदयनामकं रूपं ब्रह्मेत्युपासते । ता इ हृदुदरगते द्वे रूपे ब्रह्मैव ह प्रसिद्धम् । तदूर्ध्वस्थानात् तद् ब्रह्म तु मुख्यप्राणेन देवैश्च सह उरसोऽप्यूर्ध्वमपसर्पत् उदगच्छत् । ततस्तद् ब्रह्म शिरः शिरःस्थानमश्रयत । यद् यस्माद् ब्रह्म शिरःस्थानमश्रयत तत् तस्माद् ब्रह्माश्रयणस्थानत्वात् तत् स्थानं शिरोनामकमभवत् । ता एताः श्रयन्त इति श्रीनामकाः चक्षुः श्रोत्रं मनो वाक् प्राण इति भगवत्परिवारतया गता देवताः । शीर्षन् शीर्ष्णि श्रिता इति यद् देवताश्रयत्वं तदेव शिरसः शिरस्त्वं शिरःशब्दप्रवृत्तिनिमित्तमित्यर्थः । शिरःशब्दप्रवृत्तिनिमित्तमौपचारिकं न भवतीत्यभिप्रायेण तद्वेत्तुः फलमाह– **श्रयन्तेऽस्मिन्निति** । योऽधिकारी एवमुक्तप्रकारेण तच्छिरसः शिरस्त्वं शिरःशब्दप्रवृत्तिनिमित्तं वेद अस्मिन् ज्ञानिनि श्रिय ऐहिकामुष्मिकसम्पदः श्रयन्त आश्रयन्त इत्यर्थः -छ.

'कस्मिन् न्वहमुत्क्रान्त उत्क्रान्तो भविष्यामि कस्मिन् वा प्रतिष्ठिते प्रतिष्ठास्यामीति । स प्राणमसृजत' इति षट्प्रश्नोपनिषत् ।

स पुरुषः कल्पादौ कलाः सृजामीति ईक्षाञ्चक्रे चिन्तितवान् । पुनश्च कस्मिन् पुरुषे शरीरादुत्क्रान्तेऽहमुत्क्रान्तो भविष्यामि, कस्मिन् वा तत्र प्रतिष्ठितेऽहमपि प्रतिष्ठास्यामि प्रतिष्ठितो भविष्यामि, को नु मद्वशीकरणक्षमभक्तिज्ञानादिसम्पन्नो यं निमित्तीकृत्याहं कलाः सृजामीत्येवमीक्षित्वा तादृशः प्राण एवेति निश्चित्य स पुरुषः प्राणं जीवकलाभिमानिनमसृजत -इति श्रीराघवेन्द्रतीर्थाः ।

'प्राण एवैनमनुप्रविशति प्राणमितरा देवता न प्राणादपरः परमनुप्रविशति प्राण एवैनमनुभुङ्क्ते प्राणमितरा देवता न प्राणादपरः परमनुभुङ्क्ते प्राण एवैनमन्वानन्दीभवति प्राणमितरा देवता न प्राणादपरः परमन्वानन्दी भवति तस्मादाहुः प्राणपद्धतिरिति' -इति हिरण्यनाभश्रुतिः ।

प्राण एवैनमनुप्रविशति तत्तदिन्द्रियप्रविष्टस्वेन्द्रियैर्विषयभोगार्थमिति शेषः । साक्षादिति (च) शेषः । तदनन्तरमनुभुङ्क्ते अनु अनन्तरं विशिष्टस्वेन्द्रियैर्विषयाननुभवति । अन्वानन्दीभवति तस्य सुखाभिव्यक्त्यनन्तरमस्य सुखाभिव्यक्तिर्भवतीति भावः । तथा च तस्य प्राणस्य सुखाभिव्यक्तौ विष्णुर्मार्ग इत्यनया श्रुत्योच्यते । तथा च प्राणपद्धतिरित्यत्र बहुव्रीहिः षष्ठी तत्पुरुषश्च समास इत्युक्तं भवति– व्यासाचार्याः

१. 'यो जीववद् योनिषु भात्यनन्तो मूढैस्तमोगैर्भरताधिगम्यः । निचाप्य तं शाश्वतमात्मसंस्थं तदिच्छवो त्मन् न्यदधुर्महान्तः'' -इति कमठश्रुतिः

**प्रक्रमवत् स्वसत्कृतं पुरुषेषु धीषु तु बहिरन्तरसञ्चरणे। तव पुरुष वदन्त्यखिलशक्तिधृतः स्वकृतम्[१] ॥**

---

स्वकृतविचित्रयोनिषु स्वनिर्मितसुरनरादिनानाविधशरीरेषु विशन्निव विशन् जीवस्तद्वदज्ञानां यस्त्वं चकास्सि। कथमिव? अनलवत् स्वकृतानुकृतिः। यथाऽनलः स्वकृतस्यानुकृतिर्यस्य स तथा स्वकृतदार्वादेरपनयने गच्छन् तत्स्थापने तिष्ठन् अनुवर्तते एवं स्वकृतशरीरादिष्वनुवर्तसे तद्गतः सन्नित्यर्थः। ज्ञानिमतमाह– **हेतुतयेति**। सर्वहेतुतया भरतेन भे ज्ञानात्मके विष्णौ रतेन वायुना मतो ज्ञातः। 'रतत्वाद् भात्मके विष्णावथवाऽपि जगद्भृतेः। भरतो वायुरुद्दिष्टो भारती तत् सरस्वती' इति स्मृतेः। वितथासु अन्यथाभवन्तीष्वशाश्वतीष्वपि सम्भाविता-स्वसम्भावितास्वप्यमूषु योनिषु अवितथत्वेनान्यथाभूत्वैव शाश्वतत्वेन उरुविधं बहुविधं तिष्ठन्तं निकटधियस्त्वत्समीपस्थबुद्धयो महान्तस्ते तव त्वामभिविपत्य मनसाऽभिगम्य मनसि नयन्ति ध्यायन्तीत्यर्थः। 'योनिवेश्याह्वयो जीवस्त्वज्ञानां तद्वदेव तु। प्रकाशते परो देवस्तेन यान्त्यधरं तमः। सर्वहेतुतयैवेशं प्राणो जानाति तत्वतः। तेन चासौ परो देवस्तत्परं याति केशवम्। इन्धनानयने त्वग्निर्यथैवानीयते सह। एवं देहगतो विष्णुः सह गच्छेन्निजेच्छया। अशाश्वतेषु देहेषु शाश्वतं बहुधा स्थितम्। निचाप्य मनसा सन्तो जानन्ति निकटेच्छवः' इत्यादि-तन्त्रभागवते सिद्धोऽयमर्थः ॥ २० ॥

---

अनन्तो नाशादिदोषरहितो गुणैरन्तरहितो यो हरिः तमोगैस्तमोयोग्यैर्मूढैर्मिथ्याज्ञानिभिः, तृतीया षष्ठयर्थे, तेषां जीवसमानधर्मत्वेन भाति। यश्चोक्तरीत्या भरतेन वायुनाऽधिगम्यः तमात्मनि मनसि निचाप्य विचार्य ज्ञात्वा आत्मसंस्थं देहसंस्थं तत्त्वेऽपि शाश्वतमेतादृशं परमात्मानं तदिच्छवोऽन्ये महान्त आत्मनि मनस्यदधुः पूर्वं ध्यानमकुर्वन्, इदनीन्तना ध्यायन्ति, भाविनो ध्यानं करिष्यन्तीति भावः– इति व्यासाचार्याः

१. 'निषुसीद गणपते गणेषु त्वामाहुर्विप्रतमं कवीनाम्। न ऋते त्वत् क्रियते किञ्चनारे महामर्कं मघवन् चित्रमर्च' -इति श्रुतिः।

तदर्थः ॥ हे गणपते देवगणपते इन्द्रियगणपते हे मघवन् मखवन् तत्पते धनपते गणेषु देवगणे-ष्विन्द्रियगणेषु च नि षु सीद अतिसम्यगुपविश। तत्र तत्र स्थित्वा तान् प्रेरयित्वा तैस्तत्तत्कार्यं कारयेत्यर्थः। अन्यस्यैव तत्र स्थितिः किं न स्यादित्याशङ्क्य तवैव सर्वोत्तमत्वादित्याह– **त्वामाहुर्विप्रतमं कवीनामिति**। कवीनां ज्ञानिनां मध्ये त्वामेव विप्रतमं विशेषेण प्रकृष्टतमं, सर्वोत्तममिति यावत्, आहुर्ज्ञानिनो वेदा वा। तत्र स्थित्वा किं कार्यमिति शङ्कायामुक्तमेव विवृणोति **नेति**। त्वत् त्वत्त ऋते आरे दूरे समीपे दूरस्थैर्दैत्यैः समीपस्थैर्देवैर्वा किञ्चन न क्रियते। कस्मिन्नपि विषये स्वातन्त्र्यं नास्तीति भावः। फलितमाह– **महामिति**। मह पूजायाम्। पूज्यत्वे हेतुमाह अर्कमिति। अर्कं ज्ञानसुखरूपम्। चित्रं तत्र तत्र स्थित्वा विचित्रकार्यकर्तारं (त्वं) त्वामेवार्चयेति - व्यासाचार्याः।

**इति विमृशन्ति कवयो निगमावपनं यजन्त उपासते भवमध्यविनिश्वसिताः ।**
**दुरवगमात्मतत्व निगमायतवाङ्मनसश्चरितमहामृताब्धिपरिवर्तपरिश्रमणाः**[१] **॥ २२ ॥**

सर्वेषु पुरुषेषु सर्वधीषु सर्वेन्द्रियेषु च स्थित्वा श्रीब्रह्मादिषु प्रक्रमवत् प्रकृष्टक्रमयुक्तत्वेन स्वसत्कृतं स्वात्मनैव सत्कृतं त्वां वदन्ति । किञ्च हे पुरुष बहिरन्तः अण्डाद्यन्तर्बहिश्च असच्चरणे असदमङ्गलं चरणं कर्म यस्यासावसच्चरणस्तस्मिन् पापाचारे स्थित्वा पापाचारमपि स्वात्मनः पूजात्वेन कारयन्तं त्वां वदन्ति । तुशब्देन तथाकरणं तस्याधोगत्यर्थमिति सूचयति । किं बहुना? तत् सर्वं तव स्वकृतमनन्यापेक्षया त्वयैव कृतं वदन्ति । कुत इति तत्राह– **अखिलेति** । सर्व-पुरुषेन्द्रियशक्तिप्रेरकत्वात् । श्रुतिश्लोकयोः सर्वत्रैकार्थत्वाभावेनैकतन्नियतत्वद्योतनाय ज्ञायते[२] । 'श्रीब्रह्मरुद्रपूर्वेषु क्रमात् स्थित्वा जनार्दनः । स्वात्मानमर्चयत्यद्धा बहिरन्तरसत्सु च । असतामधमाचारो हरिदृष्ट्याऽऽत्मपूजनम् । तस्याधोगमनायेति श्रुतिराहाखिलक्रियाम्' इत्यादिना । त्रिपादोऽयं श्लोकः ॥ २१ ॥

प्राणिनो भवमध्ये विनिश्वसिता इति यतोऽतः कवयो विमृशन्तीति । सामान्येनोक्तं विशिनष्टि– **निगमेति** । हे दुरवगमात्मतत्व दुर्ज्ञेयनिजस्वरूप चरितलक्षणमहामृताब्धेः परिवर्तनेन मथनेन परिश्रमणाः । चर गतिभक्षणयोरित्यतस्त्वत्तत्वावगतिहेतुर्वेदः[३] चरितशब्देनोच्यते, स एव महासमुद्रः, तस्य परिवर्तनं परिलोडनं मथनमिति यावत्, तेन परिश्रान्ता इति यतोऽतो भवमध्याद् विनिश्वसिता मुक्ताः । निगमानामावपनं स्थानं निगमानां ततोऽभिव्यक्तेस्तत एव फलप्रदत्वाद् विषयत्वाच्च निगमावपनं त्वां विमृश्य यज्ञादिभिर्यजन्ते उपासते सजातीय-विजातीयप्रत्ययानन्तरितत्वेन ध्यायन्ति । कीदृशाः? निगमविषयेष्वायतवाङ्मनसः विस्तृत-वाङ्मनोव्यापारा इत्यनेन वेदेनैव विज्ञातभगवत्तत्वा इत्युक्तं भवति ॥ २२ ॥

---

१. 'विमथ्य वेदाब्धिमतिश्रमेण ज्ञात्वा परेशं मुनयो विमुक्ताः । मृशन्ति यज्ञैश्च यजन्ति नित्यमुपासते वेदफलप्रदं तम्' इति कुशिकश्रुतिः ।
तदर्थः ॥ मुनयो मननशीलाः कवयोऽतिश्रमेण पुनः पुनः श्रवणेन वेदाब्धिं विमथ्य तदर्थं त्वां परेशं ज्ञात्वा साक्षात्कृत्वा लिङ्गदेहाद् विमुक्ताः सन्तः पुनरपि वेदफलप्रदं भगवन्तं वेदैर्विमृशन्ति यज्ञैर्यजन्ते नित्यमुपासते चेति -छलारी.

२. अस्पष्टमिदम् ।

३. तत्वावगतिहेतुर्वेदः इत्येव स्वरसम् ।

**न परिलषन्ति केचिदपवर्गमपीश्वर ते चरणसरोजहंसकुलसङ्गविसृष्टगृहाः ।**
**त्वदनुपथं कुलायमिदमात्मसुहृत् प्रियवच्चरन्ति तथोन्मुखास्त्वयि हिते[1] प्रिय आत्मनि च[2] ॥२३॥**
**न च रमन्त्यहो असदुपासनयाऽऽत्महनो यदनुशया भ्रमन्त्यभवाः कुशरीरभृतः ।**
**निभृतमोक्षहृदययोगयुजो हृदयं मुनय उपासते तदरयोऽपि ययुः स्मरणात्[3] ॥ २४ ॥**

---

ईश्वरेत्यनेन श्रुत्यन्तरमत्राप्यनुकूलं लक्षयति । केचिद् यतयः किञ्चिदपवर्गलक्षणमुपासनाफलमपि न परिलषन्ति न वाञ्छन्ति । तत्र निमित्तमाह– **चरणेति** । चरणसरोजसेविनां हंसानां संन्यासिनां कुलस्य समूहस्य सङ्गेन सेवालक्षणेन विसृष्टगृहाः गृह्णन्ति त्यक्तुं न मुञ्चन्तीति गृहा भार्यापुत्रादयो विसृष्टाः संत्यक्ता यैस्ते । अनेन सुसदाश्रया इति विवृतम् । किञ्च त्वदनुपथं त्वन्मार्गानुकूलमार्गं त्वात्प्राप्त्यनुसारित्वादिदमात्मनः स्वस्य सुहृदनिमित्तबन्धुभूतं कुलायं शरीरं प्रियवच्चिच्छरीरवत् चरन्ति पश्यन्ति । प्रिये सर्वतः प्रियतमे आत्मनि सर्वादानादिकर्तरि त्वयि तथा हिते तत्प्राप्तापत्परिहारेणोन्मुखा अभिमुखाः ॥ २३ ॥

असदुपासनया अन्यथोपासनया ब्रह्माहमित्याद्युपासनया आत्महन आत्मानं घ्नन्तो जना असुर्यान् सुष्ठुरमणविरुद्धरूपत्वादसुरप्राप्यत्वाच्च नित्यनिरतिशयदुःखान् निरस्तसमस्तसुखान्

---

१. हि ते इति छ.व्या पाठः

२. 'न किञ्चिदभिवाञ्छन्ति यतयः सुसदाश्रयाः । प्रेष्ठस्य रमणस्यास्यै प्रियवद् देहदृष्टयः' -इति विमदश्रुतिः
तदर्थः ॥ सुसदाश्रयाः सु शोभना ये सन्तः सज्जना आश्रया येषां ते तथोक्ता यतयः परमहंसा भगवद्भक्त्यादिकं विना किञ्चिदपवर्गादिकमपि न वाञ्छन्ति । तर्हि देहे कथं प्रीतिं कुर्वन्तीत्यत आह - प्रेष्ठस्येति । अतिशयेन प्रियस्य परमस्य हरेरास्यै, भगवत्प्राप्त्यनुकूलत्वादित्यर्थः । प्रियवत् चिच्छरीरवत् । देहदृष्टयो देहज्ञानिनो यथा प्रिये वस्तुन्युपादेयत्वबुद्धिमन्तो भवन्ति तथा भगवत्प्राप्तिसाधनत्वाद् देहे उपादेयत्वबुद्धिमन्त इत्यर्थः -छलारी.

३. 'असुर्या नाम ते लोका अन्धेन तमसा वृताः । तांस्ते प्रेत्याभिगच्छन्ति ये के चात्महनो जनाः' इति श्रुतिः (ईशावास्योपनिषत्)
तदर्थः ॥ ये के चेत्यनेन नियम उक्तः । ये के च जना आत्महनो भगवत्स्वरूपत्यागिनश्च । आत्मपदस्यात्मीयपरत्वात् । ते सर्वेपि प्रेत्य ये लोका अन्धयतीत्यन्धस्तेन तमसा गाढान्धकारेणावृतास्तान् लोकानभिगच्छन्ति । कथम्भूता लोकाः? निश्शेषसुखरहितत्वादसुरप्राप्यत्वाच्चासुर्यनामकाः । ते श्रुतिप्रसिद्धा इति -छ.

**स्मरणात्[1] स्वनुराग तद् भवान् उरगेन्द्रभोगदण्डविषक्तधियो वयमपि ते समासमदृशोऽङ्घ्रिसरोजसुधाम्।**
**क इह नु वेद वक्तुमपेतजन्मलयो यत उदगादृषिरनु देवगणा उभये[2] ॥ २५ ॥**

---

लोकानाप्नुवन्तीत्येतत् न च रमन्त्यहो इत्यनेन लक्ष्यते। सुखलक्षणा रतिरेव नास्तीति न, किन्तु नित्यदुःखमनुभवन्ति च। अहो आश्चर्यमन्यथोपासकानामनर्थपरम्परा। किञ्च यदनुशया यस्मिन् अनुशयो येषां ते तथा, यत्रानुशयाना तमस्येव भ्रमन्तीत्यर्थः। कुतः? अत्राह– **अभवाः**। तत उत्थाय पुनर्जन्मवर्जिताः। जन्माभावेन देहाभावे दुःखभोगाभाव इति तत्राह– **कुशरीरभृत इति**। नित्य (दुःख) भोगसाधनं कुत्सितं निन्द्यं शरीरं बिभ्रतीति। न केवलं भगवद्द्वेषिणां तल्लोकावाप्तिरपि तु तद्भक्तद्वेषिणामपि तल्लोकावाप्तिरिति भावेनाह– **निभृतेत्यादिना**। निभृतं परिपूर्णं मोक्षार्थं हृदयं ज्ञानं यस्य स निभृतमोक्षहृदयो वायुस्तेन योगेन नियोगेन युजो युक्ताः, नियमिताः सन्तो ये मुनयो ज्ञानिनो हृद्ययनाद् हृदयं भगवन्तमुपासते तेषां मुनीनामरयो द्वेषिणोऽपि तदेव श्रीनारायणद्वेषिप्राप्यं तमो ययुरित्यन्वयः। 'नित्यदुःखसुसम्पूर्णं निरस्तानन्दमव्ययम्। तमो यान्त्यन्यथाज्ञानाद् द्वेषाद् वा हरिसंश्रये' इति। हरिसंश्रये हरिभक्तजने। 'निभृतो मोक्षवित् प्राणस्तद्योगात् तत्प्रसादतः। जानन्ति परमं देवं नान्यथा तु कथञ्चन' इति। स्मरणादित्युत्तरश्लोकान्वयि ॥ २४ ॥

हे स्मरणात् स्वनुराग सुष्ठु अनुरागः स्नेहो यस्य स तथा, तत्सम्बुद्धिः स्वनुरागेति। स्मरणादेवानुरक्त इत्यर्थः। यत् तव सच्चिदानन्दलक्षणं तत् ते स्वरूपं भवान् वेद नान्यो वेत्ति। अनेन त्वं वेत्थ नापरस्ते स्वरूपमिति विवृतम्। भवत्यो मत्स्वरूपं विदन्ति हीति तत्राहुः– **उरगेन्द्रेति**। उरसा गच्छन्तीत्युरगास्तेषामिन्द्र उरगेन्द्रस्तस्य भोग एव दण्डस्तस्मिन् विषक्ता

---

१. पूर्वश्लोकादनुवृत्तमिदं पदम्।

२. 'त्वं वेत्थ नापरस्ते स्वरूपं न नित्यवाङ् नागभोगप्रियस्य। कुतो ब्रह्मा प्राप्तलोकाश्च देवास्तथाऽप्राप्ता जनिमन्तो यतोऽस्मात्' इति साङ्कृति श्रुतिः।

तदर्थः। नागभोगप्रियस्य शेषशायिनस्ते स्वरूपं त्वं वेत्थ। अपरस्त्वत्तोऽन्यः त्वत्स्वरूपं साकल्येन न जानाति। ननु नित्या वागभिमानिनी महालक्ष्मीर्ज्ञास्यत इत्यत आह– नेति। नित्यवाक् वेदवागभिमानिनी महालक्ष्मीः दुर्गाऽपि साकल्येन न वेद सामान्येन वेद च। ब्रह्मा जनिमान् यतोऽतो न वेदेति किमु वक्तव्यम्? प्राप्तलोकास्तथाऽप्राप्ताः, लोकानिति शेषः। देवाश्चास्माद् भगवदुत्पन्नचतुर्मुखाद् यतो जनिमन्तोऽतः कुतो विज्ञास्यन्तीति -छ.

**तर्हि न सन्न चासदुभयं न च कालजवः किमपि न तत्र शास्त्रमपकृष्य शयीत यदा।**
**जनिमसतः सतो मृतिमजात्मनि ये च भिदां विपणमृते स्मरन्त्युपविश ध्वनिमारुवतः[१]॥२६॥**

धीर्यस्य स तथा तस्य ते तवाङ्घ्रिसरोजसुधामुद्दिश्य वयं नित्यवाचोऽपि समासमदृशः सर्वमाहात्म्यस्य वेदैरपि वक्तुमशक्यत्वादसमदृशः माहात्म्योपमितज्ञानाभावाः, वेदागम्यमाहात्म्यस्यापि वेदैरेव गम्यत्वात् समदृशस्तुल्यज्ञानाः। अत इह जगति अन्यः कोनु पुमान् माहात्म्यं वक्तुं वेद। अमुना न नित्यवाङ् नागभोगप्रियस्येतद् विवृतम्। को हि अस्मान् वेदान् त्वां चर्ते अपेतजन्मलय उत्पत्तिनाशरहितः? यतस्त्वत्त ऋषिर्ब्रह्मा उदगादुत्पन्नोऽतो जन्मादिरहितो न भवति। देवगणा अप्युक्तगुणा नेत्याहुः। ब्रह्मणोऽनु अनन्तरमुभये प्राप्तपदाः प्राप्यपदाश्च देवगणाः। अनेन कुतो ब्रह्मा प्राप्तलोकाश्च देवास्तथाऽप्राप्ता जनिमन्तो यतोऽस्मादिति श्रुतिर्व्याख्याता। 'महिम्नः सर्वथानुक्तेर्वेदाश्चासमदर्शिनः। तस्यापि वेदगम्यत्वात् तथैव समदर्शिनः' इति वाक्यं चानुगृहीतम्॥ २५॥

यदा भवान् प्रलये शास्त्रमध्यापकपरम्पराप्राप्तं वेदमपकृष्यात्मनि निधाय शयीत। अध्येत्रभावे शास्त्रप्रवृत्त्यभावात्। तर्हि तदा सत् स्थूलमण्डादिकं नासीत्। असत् सूक्ष्मं महदादिकं नासीत्। उभयमग्निरापश्च। न च कालजवो जराद्यापादकलक्षणः। किं बहुना? तत्र किमपि वस्तु नासीदित्यर्थः। हे अज असतः सूक्ष्मरूपात् त्वत्तः सतः स्थूलरूपस्य जगतः परमेश्वरपर्यन्तं यथाक्रमं जनिं मृतिं च, सर्वस्मात् परमात्मनि भिदां भेदं च। विपणो व्यवहारः, त्वत्सेवालक्षणे धने दत्ते सुखपदार्थलक्षणं फलं देयमिति सङ्कल्पलक्षणः (इति?) अतः फलं लक्ष्यते। विशिष्टफलापेक्षामृते ये स्मरन्ति तेषां ध्वनिमुपविश। वाचि सन्निहितत्वेन तदुक्तविद्यया ज्ञातुं शक्योऽसीत्यर्थः। तत्रेत्थम्भावमाहुः। आरुवतो वेदादिभिः स्तुवतो वायोः प्रसादात् तथा स्मरन्ति नान्यथेत्यर्थः। 'सर्ववेदादिरूपेण प्राणस्यारुवतः सदा। प्रसादाद् ये विजानन्ति सूक्ष्मात् स्थूलजनिं क्रमात्। मृतिं च सर्वजीवादेरीशस्य व्यतिरिक्तताम्। जानन्ति ये निराकाङ्क्षास्तेषां वाचि जनार्दनः' इति। 'सूक्ष्माणि महदादीनि स्थूलान्यण्डादिकानि च।

१. 'नासदासीन्नो सदासीत् तदानीं नासीद् रजो नो व्योमापरो यत्। किमावरीवः कुह कस्य शर्मन्नम्भः किमासीद् गहनं गभीरम्' इति श्रुतिः (ऋग्वेदः)
तदर्थः॥ तदानीं प्रलये सत् स्थूलं ब्रह्माण्डादि असत् सूक्ष्मं महदादि नासीत्। परः परं व्योमान्तरिक्षं च नासीत्। कुह कुत्र कस्य शर्मन् शर्मणि, शर्मार्थमित्यर्थः, किं वा वस्तु तदानीमावरीवः आवरीवर्ति? न किमपि। गहनं गभीरमम्भः प्रलयोदकमासीत् किम्? तदपि नासीदस्वतन्त्रत्वादलपत्वाद्वेति।

त्रिगुणमयः पुमानिति यदबोधकृता त्वयि न भवेत् तदवबोधरसे ।
सदिव मनस्त्रिवृत् त्वयि भवत्यसतां मनुजादयो विमृशन्त्यशेषमिदमार्ततयाऽऽत्मविदः[१] ॥ २७ ॥
न हि विकृतं त्यजन्ति कनकस्य तदात्मतया स्वकृतमनुप्रविष्ट इदमात्मतया रसितम् ।
तव ये परिचरन्त्यखिलतत्वनिकेततया ननु ते पदाऽऽक्रमन्त्यविगणय्य शिरो निर्ऋतेः[२] ॥ २८ ॥

---

उभयं त्वग्निरापश्च न किञ्चित् प्रलयेऽभवत्' इति वचनादस्य श्लोकस्यायमेवार्थो न सदसद्वैलक्षण्यमर्थ इति ॥ २६ ॥

पुमान् जीवस्त्रिगुणमयः सत्वादिगुणबद्ध इति जीवस्यापि त्रिगुणबद्धता अबोधकृता अज्ञानकृता यतस्तस्मादवबोधरसे त्वयीति सप्तमी षष्ठ्यर्थे । त्रिवृत् त्रिगुणात्मकं मनस्त्वयि तवापि सदिव विद्यत इत्यर्थः । (अयं) असतां पक्षो भवति न तु सताम् । सतां पक्षस्त्वय-मित्याहुः– **मनुजादय इति** । आत्मविदः सम्यक् परमात्मतत्वज्ञानिनो मनुजानामादयो देवाः भवतस्त्रिगुणातीतत्वाद् भवानेव परमानन्दस्त्वदन्यदिदमशेषं जीवजातमार्ततया स्थितमित्येव विमृशन्ति जानन्ति । 'त्रैगुण्यदेहेन्द्रियकमासुरा जानते हरिम् । त्रिगुणातीतमीशेशमतः पूर्णसुखं सुराः । जानन्ति गुणबद्धत्वाज्जीवानार्तांश्च कृत्स्नशः । अनार्तस्य प्रसादेन तेषामार्तिविनाशनम्' इति चैतन्यविवेके ॥ २७ ॥

---

१. 'सत्वादिकं देहमथो मनश्च सत्त्वादिबद्धं च वदन्त्यसन्तः । परं पुमांसं न सुरास्तु तैर्हि जीवाः सुदृष्टाः परमार्तिरूपाः' इति सुरायणश्रुतिः
असन्तो हरेर्देहं सत्वादिजमथो मनश्च सत्वादिबद्धं सत्वाद्यात्मकमिति वदन्ति । तत्र हेतुस्तैरित्यादि । तुरवधारणे । हि यस्माज्जीवा एव तैर्देवैः परमार्तिरूपाः सुदृष्टाः परमार्त्तिमत्त्वेन सम्यग्ज्ञाता अतस्त्रिगुणबद्धाश्च परमपुरुषश्च तद्विरुद्धपरमानन्दत्वेन श्रुतियुक्तिसिद्धतया ज्ञात इति तं तथा वदन्तीत्यर्थः -छ.

२. 'सर्वगं ये प्रपश्यन्ति ब्रह्मानन्दमजाक्षरम् । एकमेवाद्वयं नित्यं निर्ऋतेस्ते शिरोगताः' इति सौकरायणश्रुतिः ।
तदर्थः ॥ ये ज्ञानिन आनन्दं नित्याभिव्यक्तानन्दरूपमजाक्षरम् अजंच तदक्षरं च देहतोऽप्यु-त्पत्तिनाशरहितं ब्रह्म सर्वगुणपूर्णं सर्वगं कनकादिदृष्टान्तानुसारेण सर्वगतं विष्णुमेकमेव नानाविध-भिन्नस्थानगतमपि स्वगतभेदवर्जितमेवाद्वयं समाभ्यधिकरहितं प्रपश्यन्ति परोक्षतो ज्ञात्वा साक्षात्कुर्वन्ति ते निर्ऋतेः संसारस्य शिरः पदाऽऽक्रम्य गताः, वैष्णवस्थानमिति शेषः -छ.

**परिवयसे पशूनिव गिरा विबुधानपि तांस्त्वयि दृढसौहृदा ननु पुनन्ति न ते विमुखाः ।**
**त्वमेकः स्वराडखिलकारकशक्तिधरस्तव बलिमुद्वहन्ति समदन्ति च येऽनिमिषाः[१] ॥ २९ ॥**

---

यथा कनकस्य विकृतं विविधकृतं कुण्डलादिरूपं कनकं विना परित्यक्तुं न शक्यते नेदं कनकं सर्वमिति । तत्र हेतुस्तदात्मतयेति । कनकस्वरूपत्वेन प्रमाणसिद्धत्वात् । तथा स्वकृतमिदं जगदनुप्रविष्टो भवान् मूलरूपं विना परित्यक्तुं न शक्यः । तत्र हेतुरात्मतयेति । एकस्वरूपत्वात् । कीदृशं जगत् प्रविष्टः? रसितं लसितमात्मना प्रकाशितं जगत् प्रविष्टः । तस्मात् सर्वगतो विष्णुरिति ज्ञातव्य इति तात्पर्यार्थः । एवंविधज्ञानेन किं प्रयोजनम्? तदाह– **तवेति** । ये तवाखिलतत्वानि निकेतनानि अधिष्ठानतया आश्रयो यस्य स तथा, तस्य भावस्तत्ता तया स्वरूपं ज्ञात्वा परिचरन्ति पूजयन्ति । यद्वाऽखिलतत्वानां निकेततया ते ज्ञानिनः ऋतात्मकब्रह्मप्राप्तिविरुद्धत्वान्निर्ऋताख्यस्य संसारस्य शिरः स्फुटं पदाऽऽक्रमन्ति । ननु किं कृत्वा? अविगणय्य, संसारमिति शेषः । आचार्यैरत्र यायाः श्रुतयोऽध्येतृपरम्परासिद्धास्ता एवोदाह्रियन्ते न त्वन्याः । लोकप्रत्ययार्थं तत्र श्रुत्युक्ताधिकार्थे पुराणानि चोपात्तानि । 'यथैव कुण्डलं त्यक्त्वा नादातुं कनकांशकम् । तस्यैव तदवस्थत्वात् केवलाभेदतः स्फुटम् । एवं सुरासुरनरेष्वास्थितो भगवान् हरिः । नैव भेदेन मन्तव्यो जीवभेदे तु सत्यपि । ये तथा भिन्नमीशेशं पश्यन्ति परमर्षयः। ऋतप्राप्तिविरुद्धत्वात् संसारनिर्ऋतेः शिरः । अगणय्य पदाऽऽक्रम्य वैष्णवं निलयं ययुः' इति गारुडे ॥ २८ ॥

ये ते देवास्त्वत्पादैकाश्रयास्तान् विबुधानपि गिरा वैदिकवाचा परिवयसे परितो बध्नासि, वेदोक्तकर्मानुष्ठानेन प्रवर्तयस इत्यर्थः । वय बन्धन इति धातोः । कानिव? दाम्ना पशूनिव । त्वयि दृढसौहृदा गाढबद्धस्नेहपाशाः पुरुषाः पुनन्ति ननु, जगदिति शेषः । ते तव विमुखा द्वेषिणो न पुनन्ति, प्रत्युत मलीमसं कुर्वन्तीति शेषः । अनेन 'वयति गा इव यः सुरादिकांस्तन्मनसो जगदपुनन् शुचयो न परे' इति विवृतम् । शुद्धिरपि त्वन्नियतेत्याहुः – त्वमिति । अखिलकारकशक्तिधरः परिपूर्णकर्तृकारयितृशक्तिधरस्त्वमेक एव नान्यः । कुतः? स्वराट् चक्रवर्ती । अस्मत्स्वामी किमस्मानाज्ञापयतीति प्रतीक्ष्य सर्वदा विवृतनयनत्वाद् येऽनिमिषा देवास्ते तव बलिमुद्वहन्ति मनुजैर्दीयमानं सम्यगदन्ति च । अनेन 'स एक ईशः परिपूर्णशक्तिर्बलिंहरा इतरे

---

१. 'वयति गा इव यः सुरादिकांस्तन्मनसो जगदपुनन् शुचयो न परे । स एक ईशः परिपूर्णशक्तिर्बलिं हरा इतरे स्युः सुराः सुखिनः' इत्यारुणिश्रुतिः । अर्थस्तु टीकायामेव व्यक्तः ।

वर्षभुजोऽखिलक्षितिपतेरिव विश्वसृजो विदधति यत्र येत्वधिकृता भवतश्चकिताः ।
स्थिरचरजातयः स्युरज ये त्वनिमित्तयुजो विरह उदीक्षयेत् यदि परस्य विमुक्तसतः[1] ॥ ३० ॥
न हि परमस्य कश्चिदपरोऽनपरश्च भवेत् व्ययत इवात्र यस्य च शून्यतुल सन्दधतः ।
अपरिमिता ध्रुवास्तनुभृतो यदि सर्व ततो न हि न शास्यतेति नियमो ब्रुवते च तथा[2] ॥ ३१ ॥

---

स्युः सुराः सुखिनः' इत्येतद् विवृतम् । 'समभेदे समीचीने सुष्ठुपूजासुखेषु च' इति यादवः । तत्र तत्र पुराणवाक्योदाहरणेनैततृश्रुत्यर्थत्वेन श्लोको ग्रथित इति निश्चीयते[3] । सा श्रुतिरपि प्रमाणीक्रियते ॥ २९ ॥

ये यत्र यस्मिन् पदे त्वधिकृता अधिकारं प्राप्ता विश्वसृजस्ते भवतश्चकिता भीतास्तत्र स्थित्वा भवतो विदधति, बलिमिति शेषः । कस्मै के इव? वर्षभुजः खण्डेशा अखिल-क्षितिपतेश्चक्रवर्तिन इव । यदि पुरुषो विमुक्ताः सन्तो यस्मात् स विमुक्तसन् तस्य विमुक्तसतः परस्य सकाशाद् विरहे मुक्तावुदीक्षयेत् परमात्मन एव मुक्तिरिति पश्येत्, 'तमेवं विद्वानमृत इह भवति नान्यः पन्था अयनाय विद्यते' इति श्रुतेः, हे अज तर्हि ये स्थिरचरजातयः स्थिरत्वं चरत्वं च जातिर्येषां ते तथा ते अनिमित्तयुजः स्युः अः परमात्मा निमित्तं युक् योगो संसारस्य येषां ते तथा । भगवन्नियोगादेव संसारभाज इत्यर्थः । मुक्तेस्तन्नियतत्वाद् बन्धोपि तदधीन इति भावः । 'आत्मानं मुक्तिदं विष्णुं यदि पुंस उदीक्षयेत् । सुप्रसन्नस्तदा बन्धस्तत एवेति सेत्स्यति' इति स्मृतेः ॥ ३० ॥

अनात् प्राणात् परस्योत्तमस्य सर्वं सन्दधतो यस्य परमस्य ते तव कश्चिदपरः स्वतन्त्रो न भवेत् । हे शून्यतुल समानवर्जित । यस्यात्र जीवसमुदाये व्ययतः सर्वं जानतः सर्वज्ञस्येत्यर्थः ।

---

१. 'खण्डाधीशाः सार्वभौमस्य यद्वद् ब्रह्मेशाद्याः कुर्वते तेऽनुशास्तिम् । त्वं मुक्तिदो बन्धदोऽतो मतो नस्त्वं ज्ञानदोऽज्ञानदश्चासि विष्णो' इति शाण्डिल्यश्रुतिः । इयं टीकायां व्याख्यातप्राया ।

२. 'तव स्वतन्त्रो नापरो यद्वदत्र प्राणान्नान्यस्तुल्यशून्यस्य सन्धिन् । प्राणाधीना अमिता जीवसङ्घा प्राणो वशे ते प्रकृतिश्च भूमन्' इति महाशालीनश्रुतिः ।
तदर्थः ॥ हे सन्धिन् सर्वधारक तुल्यशून्यस्य समानरहितस्य तव सकाशादपरोऽन्यः स्वतन्त्रो नास्ति । अत्र जीवसमुदाये यद्वत् प्राणादन्यः स्वतन्त्रो नास्ति तद्वदिति शेषः । जीवसङ्घाः प्राणाधीना अमिताः सन्ति । हे भूमन् पूर्ण, प्राणः प्रकृतिश्च ते उभे ते तव वशे वर्तेते । प्राणस्य भगवदधीनत्वं जीवानां प्राणाधीनत्वमत्रोच्यत इति न हि न शास्यतेत्येतदप्यत्रोक्तमिति ज्ञेयमिति -छ.

३. अस्पष्टमिदम् ।

**अजन परिमुच्यतेऽत्र भवात् सततात् सममनुजानता ततमनन्तमदुष्टतया।**
**न घटत उद्भवः प्रकृतिपुरुषयोरजयोरुभययुजोर्भवन्त्यसुभृतो जलबुद्बुदवत्[1] ॥ ३२ ॥**

---

अय पय गताविति धातोः, गत्यर्थानां ज्ञानार्थत्वात्। इव यथा प्राणस्य नापरः स्वतन्त्रस्तद्वत् प्राणः श्रीरन्यो वा त्वां विना स्वतन्त्रो नास्ति, त्वमेव स्वतन्त्रः। हे सर्व पूर्ण। यदि ततस्तस्मात् प्राणात् तनुभृतो जीवा ध्रुवाः, प्राणाधीना जीवाः कियन्तः सन्ति (इति पृच्छ्यते) इत्यर्थः। तर्हि सत्यं तेऽपरिमिता असंख्याताः। नन्वेवं चेदेकमेवाद्वितीयमित्यादि श्रुतिविरोध इति तत्राह– **न हीति**। श्रुतेरयं नियमो जीवानां शास्यताऽधीनता नेत्यर्थे न हि, किन्तु स्वगतभेदशून्यस्येश्वरान्तरस्य स्वतन्त्रस्य च निषेधो नियमः। तत्र किं प्रमाणम्? अत्राह– **ब्रुवत इति**। 'अतोऽन्यदार्तम्', 'नेह नानास्ति किञ्चन', 'न तत्समश्चाभ्यधिकश्च दृश्यते' इत्यादिश्रुतिस्मृतयस्तथा ब्रुवते च। 'स्वतन्त्रो नापरः कश्चिद् विष्णोः प्राणपतेः प्रभोः' इत्यादिस्मृतेः ॥ ३१ ॥

हे अजन लोकविलक्षण जन्मरहितेति वा। सममेकप्रकारतया ततं व्याप्तमनन्तमदुष्टतया निर्दोषत्वेनानुजानता सम्यग्ज्ञानवता आचार्येणोपदिष्टमार्गेण अत्र जगति ज्ञानवान् पुरुषः सततात् सन्ततमज्ञानकल्पिताद् भवात् संसारात् परिमुच्यते सम्यङ् मुक्तो भवति। कथमनुजानतेति तत्राह– **नेति**। अजशब्दस्यानेकवृत्तित्वेनानिश्चय इत्यतः प्रकृतिपुरुषयोरिति। तयोरुद्भव उत्पत्तिर्न घटत इति यतस्ततः प्रकृतिपुरुषौ विनाऽन्यो बन्धरहितो न विद्यते। मुख्यतोऽजशब्दप्रवृत्तिनिमित्तान्यथानुपपत्त्या न घटत इत्युक्तं भवति। तदुभययोः प्रकृतिपुरुषयोर्युजोः योगयोः (नित्ययुक्तयोः?) असुभृतो जीवा भवन्ति। देशतः कालतश्च यत्र परमस्तत्र प्रकृतिर्यत्र प्रकृतिस्तत्र परम इत्युभययुजोः। तत्र दृष्टान्तः– **जलबुद्बुदवत्**। जलबुद्बुदानि यथोत्पद्यन्ते तथेति। 'सम्यग्ज्ञानवदाचार्यान्मुच्यते पुरुषो भवात्। द्वावेव नित्यमुक्तौ तु परमः प्रकृतिस्तथा' इति स्मृतेः ॥ ३२ ॥

---

१. 'मुच्यते तत्वसम्बुद्धादाचार्यात् पुरुषो भवात्। एतावेव स्वतोऽबद्धौ परमः प्रकृतिस्तथा' इति कलापश्रुतिः। 'देशतः कालतश्चैव समव्याप्तावजावुभौ। ताभ्यामुभययोगाभ्यां जायन्ते पुरुषाः परे' इति कौण्ठरव्यश्रुतिः। तदर्थस्तु टीकायां एव व्यक्तः।

**त्वयि त इमे ततो विबुधनामगुणाः परमे अमृत इवार्णवे मधु निलिल्युरशेषरसाः।
नृषु तव मायया स्वगतया कुशलं त्वयि सुधियोऽङ्ग भेदमनुविधातुमनुप्रभवः
कथमनुवर्तिनां भवभयं तव भ्रुकुटी सृजति मुहुर्नृणाम्[१] ॥ ३३ ॥**

---

मधुनि निलिल्युरिति वक्तव्ये मधु निलिल्युरिति पाठो गाथाभङ्गभयात् समाने लोप इति न्यायाच्च कृतः। ततो इति पाठोऽपि वैलक्षण्यज्ञापनायाकारि। तत तात पितरित्यर्थः। ततेति तातेति श्रुतिः। अ उ आनन्दपूर्णत्वादनामा सर्वस्मादुत्कृष्टत्वादुनामा। 'आनन्दत्वादनामाऽसावुत्कृष्टत्वादुनामकः। एतन्नामद्वयं विष्णोर्ज्ञात्वा पापैः प्रमुच्यते' इति स्मृतेः। तयोः सन्धिः। ओ इत्यनेन नाम्नोर्नामिनश्चाभेदः उनाम्नः सम्बुद्धिरसूचि[२]। ये 'गुणाः श्रुताः सुविरुद्धाश्च देवे सन्ति' इत्यादौ श्रुतौ प्रतीतास्त इमे विबुधनामगुणा विबुधानामिन्द्रादीनां नाम्नोऽर्थभूताः परमैश्वर्यादिगुणा अमृते नित्यमुक्ते परमे त्वयि निलिल्युर्निलीनतया स्थिताः। कस्मिन् के इव? मधुन्यर्णवे मकरन्दमधुलक्षणसमुद्रेऽशेषगुणपुष्परसा इव। यतोऽशेषगुणाकरो भवानतो नृषु सुधियः, निर्धारणे सप्तमी, नृणां मध्ये सम्यग्ज्ञानिनः स्वगतया सुष्ठु अन्यैर-

---

१. 'यो नः पिता जनिता यो विधाता धामानि वेद भुवनानि विश्वा। यो देवानां नामधा एक एव तं सम्प्रश्नं भुवना यन्त्यन्या' इति श्रुतिः।
यो नोऽस्माकं पिता। न दत्तपुत्रवत् पिता किन्तु जनिता जनकः। यश्च विधाता नित्यपोषकः। न इति सर्वत्र सम्बध्यते। यश्च विश्वा समस्तानि भुवनानि सत्यलोकादीनि तदन्तर्गतधामानि च वेद वेदयति प्रापयति। सकलदेवतानामधारको देवतानाम्नां परममुख्यवाच्य एक एव। तं सम्प्रश्नं सम्यक्प्रष्टव्यार्थं, प्रश्न इत्युपलक्षणम्, प्रश्नोत्तरादिरूपवेदप्रतिपाद्यं हरिं ज्ञात्वा अन्या अन्यानि भुवनानि वैकुण्ठादीनि जना यन्ति प्रलये प्रविशन्ति, मुक्ता भवन्तीति यावत् -छ.
'त आऽयजन्त द्रविणं समस्मा ऋषयः पूर्वे जरितारो न भूना। असूर्त्ते सूर्त्ते रजसि निषत्ते ये भूतानि समकृण्वन्निमानि' इति श्रुतिः।
तदर्थः ॥ सुष्ठु रतं यथार्थज्ञानं यस्मात् तत् सूर्त्तं सत्वम्। अज्ञानहेतुत्वादसूर्त्तं तमः। तदेवं गुणत्रये निषत्ते निषण्णे सृष्ट्यर्थमुपस्थिते सति ये पूर्वे ऋषयो ज्ञानिनो ब्रह्माद्या इमानि भूतानि समकृण्वन्नसृजन् ते देवा अस्मै सम्प्रष्टव्याय विश्वकर्मणे, तत्प्रीत्यर्थमिति यावत्, मानसयज्ञे द्रविणमा अयजन्त। 'वसन्तोऽस्यासीदाज्यम्' इत्याद्युक्तदिशा वसन्तादिरूपं हविर्द्रव्यं जुहुवुः। जरितारस्तं स्तुवन्तः। अथापि वस्तुतो न अयजन्त। यतः भूना भूम्ना, भूमगुणस्य भगवतः शक्त्यैवायजन्त। अतो यजन्तोप्ययजन्त उच्यन्ते। -गोविन्दाचार्याः

२. अस्पष्टमिदम्।

**इह भवच्चरणेषु सुजातभुवो जितहृषीकवायुभिरुदात्तमहत्तुरगैः ।**
**य इह यतन्त्यमतिलोलमुपायविदो व्यसनशताब्धितारमपहाय गुरोश्चरणम् ॥ ३४ ॥**

---

नवगतया मायया स्वेच्छया त्वयि भेदं समस्तादन्यो विशिष्टगुणः पर इति भेददर्शनलक्षणं कुशलमनुविधातुमनुप्रभवः सम्यक् समर्थाः । अनेनाज्ञानिनां निलीना ज्ञानिनामभिव्यक्ता गुणा इत्यतस्तेषां सद्भावो दर्शित इति । तदुक्तम्– 'अन्याविज्ञातया विष्णोः शक्त्यैव कुशलं जनाः । कुर्वन्ति कुशलेषूच्चभेददर्शनमेव तु । पूर्णानन्दादिसम्पत्तिं विष्णोर्ज्ञात्वेतरेषु च । तदपेक्ष्य विप्रुण्मात्रज्ञानं तद्भेददर्शनम् । अनाद्यनन्तो भेदोऽयं स्वभावः परजीवयोः । स्वतो वा परतो वाऽपि न कदाचित् प्रणश्यति । एवं ज्ञानवतां विष्णुर्बहुजन्म न दास्यति । अनुवृत्तिर्यद्यनल्पा स हि सर्वेश्वरः प्रभुः' इति । अनेन चरमचरणस्यार्थो विवृतः । तथा हि । यथा तव गुणविधानसामर्थ्यं तथानुकूलभूतत्वत्प्रसादानुवर्तिनां मुहुर्निरन्तरं सेवमानानां तव भ्रुकुटी भवभयं कथं सृजति? न कथमपि, प्रत्युत निर्मूलयतीत्यर्थः । 'यं पाता जनिता चैव कल्पको नित्यपोषकः । प्रापकः सर्वदेवानां पदानां पुरुषोत्तमः । सर्वदेवाभिधावाच्यो भूतभव्यभवत्प्रभुः । विचार्यः सर्वदेवेशैस्तं ब्रह्माद्या यजन्ति च । त्रिगुणात्मकस्रष्टारस्तथापि न यजन्ति तम् । यतः पूर्णेशशक्त्यैव तेषां यजनमिष्यते । अतः सर्वेश्वरो विष्णुरेक एव महागुणः' इत्यनेन ब्रह्मादीनामखण्डगुणत्वं स्वातन्त्र्येण सर्वकर्तृत्वमित्यादिकमपहस्तितमिति ज्ञातव्यम् । 'ब्रह्मेशेन्द्रादिसन्नाम्नां येऽर्थभूता गुणा मताः । पूर्तीशितृत्वद्रष्टृत्वप्रमुखास्ते हरेः सदा । अतस्तु सर्वनामाऽसौ सर्वकर्ता च केशवः' इत्यादिस्मृतीनां चार्थत्वेनायं श्लोकः सन्दब्ध इति ध्येयम् ॥ ३३ ॥

श्लोकद्वयस्यायमभिप्रायः । हे अजित[1] भक्तभक्त्या वशीकृत । 'जयो विष्णोश्च वायोश्च भक्त्या तत्प्रीतिसाधनम् । जगदीशयोः कुतोह्येनोः सर्वशक्त्योर्बलाज्जयः' इति वचनाद् भक्तिलक्षणसाधनसामग्र्या विष्णोः प्रसादो जयो नाम । हे हरे य इह संसारे व्यसनशताब्धितारं गुरोश्चरणमपहाय हृषीकवायुभिरुदात्तमहत्तुरगैः कर्मणि यतन्तीत्यन्वयः । व्यसनानां शतमेवाब्धिर्व्यसनशताब्धिस्तं तारयतीति यस्तम् । षण्णवत्यङ्गुलो यस्त्वित्यादिलक्षणोपेतस्य गुरोश्चरणमिति सेवेह लक्ष्यते । तां सेवां त्यक्त्वा उदात्तः सारथिः, 'रथोपरि स्वीकरणादुदात्तः सारथिर्मतः' इति वचनात्, वायुरेवोदात्तो येषां ते तथा । पृथक्पदत्वं छान्दसम् । हृषीकाण्येव महान्तस्तुरगा महत्तुरगाः । महादेशाभावश्चान्दसः । 'देवा अपि सुयोगाढ्या यतन्ते

---

१. टीकानुरोधेन जितेति च्छेदः स्वरसः ।

**वणिज इवोच्छ्वसन्त्यकृतकर्णधरा जलधौ स्वजनसुतात्मदारधनधामधराः ।**
**सुखशान्तिमत् त्वयि हि सन्ति तानि नृणां विभव उद्यति श्रयत आत्मनि सर्वरसे[१] ॥ ३५ ॥**

---

सर्वसाधनैः। पुत्रदारादिभिः सार्धं नोच्छ्वसन्तीह संसृतौ । गुरोरनुग्रहमृते साधनं न हरेः प्रियम् । गुरूपदेशात् तु हरिं प्राप्नोत्येव न संशयः' इति श्रुत्यनुगृहीतः श्लोकोऽयम् ।

तैस्ते उच्छ्वसन्ति निःश्वसन्तीन्यन्वयः । अत्र दृष्टान्तः । जलधावकृतकर्णधरा अकृतः कर्णधरो यैस्ते तथा । वणिजः सायन्त्रिका इव यतमानाः । कीदृशाः? स्वजनसुतात्मदारधनधामधराः स्वजनसुतादिभरणोपेताः । आत्मा देहः । धाम गृहम् । जितहृषीक इत्येकं वा पदम् । उक्तमेव विवरणम् । ये च देवकल्पाः पुरुषाः भवच्चरणेषु भवद्विषयेषु कर्मसु सुजातभुवः सुष्ठु जातास्थाना उत्तमयोग्यतायुक्ता वायुसारथियुक्तहृषीकलक्षणतुरगैरमतिलोलं बुद्धिचाञ्चल्यं विना निष्कामत्वेन यतन्ति ते स्वजनादियुक्ता उच्छ्वसन्ति उत्कृष्टं श्वसन्ति प्राणन्ति जीवन्तीत्यर्थः । श्वस प्राणन इति धातुः । किं कृत्वा? गुरोश्चरणमपहाय । हानं त्यागमपाकृत्य, गुरुचरणनिषेवणं कृत्वेत्यर्थः । नास्त्यकृतः कृतेनेति श्रुतेरकृतो भगवानेव कर्णधारो येषां ते तथा, दैवानुकूलकर्णधारा इत्यर्थः । ते उपायविदः सुयोगज्ञाः । किन्तु नृणां यानि विहितानि साधनानि सुखशान्तिमति त्वयि, सुखस्यापि शं सुखं दुःखमिश्ररहितसुखमित्यर्थः, तस्यान्तिमति पूर्तिमति पूर्णसुखे इत्यर्थः । तस्मिन् त्वयि न सन्ति हि गुर्वभावात् । तस्माद् विभवे विगतसंसारे देहाभिमानरहिते जीवन्मुक्ते गुरावुद्यति साधनजातमुपदिशति सति सर्वरसे सर्वस्मात् सारभूते आत्मनि परमात्मनि श्रयत एव । तत्साधनसर्वस्वं तत्प्रीतिजनकत्वेन श्रीहरिं विषयीकरोतीत्यर्थः । 'षण्णवत्यङ्गुलो यस्तु तालास्यो दशतालकः । दशप्रादेशकः सप्तपदो हस्तचतुष्टयः । कलमत्रयाङ्गुलिश्चैव वाग्मी सन्देहवर्जितः । वासुदेवैकशरणो गुरुरित्युच्यते बुधैः । गुरुलक्षणसम्पूर्णः साक्षादेकश्चतुर्मुखः । ततः शेषेन्द्रवन्ह्याद्याः क्रमादेव प्रकीर्तिताः' इत्यादि वाक्यमत्र प्रमाणम् । 'देवा योग्यतया जाता विष्णुपादाम्बुजाश्रयाः । तथापि साधनैस्तेषां तत्प्राप्तिर्गुर्वनुग्रहात्' इति च ॥ ३४-३५ ॥

---

१. 'यस्य देवे परा भक्तिर्यथा देवे तथा गुरौ । तस्यैते कथिता ह्यर्थाः प्रकाशन्ते महात्मनः' इति श्वेताश्वतरश्रुतिः । अर्थस्तु टीकातो व्यक्तः ।

**इति सदजानतां मिथुनतो रतये चरतां सुखयति को न्विहाग्र विजने स्वनिरस्तभगे।**
**भुवि पुण्यतीर्थसदना ह्यृषयो निविशन्त्यतस्त्वानु भवतः[१] पदाम्बुजं हृदाऽघभिदम्।**
**दधति सकृन्मनस्त्वयि चिदात्मनि नित्यसुखे न पुनरुपासते पुरुषसार हरावसथम्[२] ॥ ३६ ॥**
**इदमप्यथो वदन्ति चेन्ननु तर्का व्यभिचरन्ति कचित् कचिन्मृषा च।**
**ततो भयदृग्व्यवहितये विकल्प उषितोऽन्वहमन्धपरम्परया भ्रमति भारती च तवोरुवृत्तिभिरूढजवा।३७।**

---

इतिशब्दः प्रकारवचनः। इति लोके दृश्यमानप्रकारेण सद् ब्रह्म अजानतां ब्रह्माज्ञानिनां मिथुनतः स्त्रीपुंसभावेन रतये ग्राम्यधर्माय चरतां प्रवर्तमानानां कोनु पुरुषोऽद्य विजने मोक्षविषये सुखयति? न कोऽपि मोक्षं ददातीत्यर्थः। कीदृशे विजने? स्वनिरस्तभगे। सुष्ठु अनिरस्तो भग ऐश्वर्यादिगुणो यस्मिन् स तथा तस्मिन्। यतस्त्वदज्ञानिनां परमानन्दलक्षणमोक्षाभावः, अतः भुवि स्थाने पुण्यं शुद्धिकरं तीर्थं शास्त्रमेव सदनं शरणं येषां ते तथा, ते ऋषयो देवादयस्त्वमिव सन्तं ज्ञात्वा भवतः पदाम्बुजं हृदा निविशन्ति। कीदृशम्? अघभिदं पापनाशनम्। किञ्च मनो मननसमर्थमन्तःकरणं नित्यसुखे चिदात्मनि त्वयि दधति च। अत्र प्रधानसाधनमाहुः। हे पुरुषसार पुरुषोत्तम पुनश्च पश्चाद् हरस्य रुद्रस्यावसथमहङ्कारं सकृदपि नोपासते न कुर्वन्तीत्यर्थः। श्लोकार्थानुग्राहकस्मृतिस्तु 'महाभाग्यं तु कैवल्यमज्ञानां कः प्रदास्यति। अतः सन्तो विजानन्ति हरिं ते त्वनहङ्कृताः' इति ॥ ३६ ॥

इदं जगत्, न पातीत्यपः पा पालन इति धातुः सोऽस्यास्तीत्यपि अनीश्वरमित्यर्थः। अपि गर्हितमत एवाप्रतिष्ठमिति वा। 'असत्यमप्रतिष्ठं ते जगदाहुरनीश्वरम्' इत्यादेः। न मत्तोऽन्य ईश्वरश्चेतनत्वादित्यादितर्कैर्वदन्ति चेदथो तस्मात्। कुतः? सर्वात्मनैतदपि वचनं भगवत्प्रेरण-येत्यवगन्तव्यम्। तर्हि तर्कः प्रामाणिकः स्यादिति तत्राह– **नन्विति**। तर्का व्यभिचरन्ति नन्वित्यन्वयः। अत्र व्यभिचारित्वं पक्षधर्मत्वादिलक्षणाभावः। तथा हि। विशिष्टपक्षीकारस्य

---

१. निविशन्त्यतस्तदुभवतः -छ.पाठः, निविशन्त्यतस्त्वा भवतः -व्या.पाठः निविशन्त्यतस्त्वाऽनुभवतः -स.पाठः.

२. 'ब्रह्मा ज्ञात्वेति लोकप्रवृत्तिं प्रवर्ततां को नु मोक्षं ददाति। अतो ब्रह्मोपासते साधु धीरा नाहम्भावस्तेषु रुद्राधिवासः' इति महारवश्रुतिः।
तदर्थः ॥ ब्रह्मशब्दार्थभूतं परं ब्रह्म ज्ञात्वा (ब्रह्म ज्ञात्वेत्येषां पाठः) इति लोके दृश्यमानप्रकारेण लोकप्रवृत्तिं मूर्खजनप्रवृत्तिं रत्युद्देश्यकमिथुनीभावादिप्रवृत्तिं प्रवर्ततां कुर्वतां को नु मोक्षं ददाति? न कोऽपीत्यर्थः। अतोऽज्ञानिनां मोक्षाभावाद् ये धीरा ज्ञानिनो ब्रह्म, ज्ञात्वेति शेषः, साधु सम्यक् उपासते। रुद्राधिवासो रुद्रेणाभिमन्यमानोऽहङ्कारस्तेषु न भवतीति -छ.

**न यदिदमग्र आस न भविष्यदतो निधनादनिमित्तकमन्तरा त्वयि विभाति मृषैकरसे।**
**अत उपगीयते द्रविणजातिविकल्पपथैर्वितथमनोविलासमिदमित्यवयन्ति बुधाः[१] ॥ ३८॥**

---

सिद्धान्तविरुद्धत्वादनुपपत्तिः, निर्विशेषेश्वरपक्षीकारे हेतोरसिद्धिरित्यादिदूषणमुपेक्ष्याचार्यैः कालात्ययापदिष्टत्वं प्रादर्शि। वेदोक्तो जीवव्यतिरिक्तेश्वरो न तर्कैरपनेतुं शक्यः, यतस्तर्का व्यभिचारिण इति। 'अनश्नन्नन्याऽभिचाकशीति' इति श्रुतेः। जीवेश्वरौ विरुद्धधर्माक्रान्तत्वेन भिन्नौ छायातपवदित्यादेश्च। दूषणान्तरमाह- **क्वचिदिति**। अभेदस्य सिद्धावसिद्धौ च तर्कस्य विशेषानापादकत्वेनाप्रयोजकत्वात्। अपिपासोः पयःपानवत्। भोजनस्येष्टसाधनत्वतर्को ज्वरितादौ व्यभिचारित्वेन व्यर्थश्च। सर्वशरीरसमवेतसुखदुःखानुसन्धातृत्वेन कायपरिमाणो जीव इति क्षपणकदर्शनपरिकल्पितस्तर्कोऽपि मृषैव। अणुशरीरस्य कर्मादिवशाद् हस्त्यादिशरीरप्राप्तौ विकारित्वापत्तेः। ननु तर्हि तर्केभ्यः किं प्रयोजनम्? अत्राह- तत इति यतो दुष्टास्ततो भयदृग्व्यवहितये भयबुद्धीनां बुद्धिव्यवधानाय तर्का भवन्ति न तु धीराणां विदुषाम्। ननु किमिति प्रवृत्ताः (तर्काः) इति तत्राह- **विकल्प इति**। बिर्निषेधे पृथग्भावे इति वचनाद् विकल्पो वेदविरुद्धकल्पना जगतो मिथ्यात्वं जीवस्य ब्रह्मणोऽभेदो जगत् क्षणिकं षड्गुण ईश्वर इत्यादिलक्षणान्धपरम्परयैवान्वहमुषितः प्रवर्तितः। 'अन्धेनैव नीयमाना यथाऽन्धाः' इति श्रुतिः। अन्धपरम्परायाश्च कोऽवलम्ब इति तत्राह- **भ्रमतीति**। भारती वेदवाणी च भ्रमति बहुधा वक्ति, तात्पर्यार्थावबोधाकुशलानज्ञानुद्दिश्येति शेषः, इति यस्मात् तस्मादन्धपरम्परा। 'बहूक्तिरन्यथाज्ञप्तिः परिवृत्तिश्च कथ्यते। भ्रम इत्येव विद्वद्भिस्तथा चङ्क्रमणं क्वचित्' इत्यतो भ्रमस्य बहूक्तित्वं सिद्धम्। वेदस्य बहुधोक्तेः किं कारणम्? अत्राह- **तवोर्विति**। उरुशब्देनानन्तत्वं वृत्तिशब्देन गुणकर्माणि विवक्ष्यन्ते। भवतो गुणकर्मणामनन्तत्वात् तानि वक्तुमूढजवा त्वरावती वेदवाणी। अतो वेदेऽपि बहुधावचनात् तदर्थनिर्णयशक्त्यभावाद् योग्यतावशाद् विपरीतप्रतीतेश्च विरुद्धकल्पना युक्ताऽन्धपरम्परयाऽसुराणाम्॥ ३७॥

---

१. 'यज्जीवमीशं प्रवदन्ति तर्कैस्तच्चैश्वरो वचनं सन्दधाति। नासीदादौ मरणे नो भविष्यन्मृषा ततो हीशितृत्वं स्वपेषु' इति विपीतश्रुतिः।
तदर्थः ॥ तर्कैः इष्टसाधनगैर्व्यभिचारिभिस्तर्कैर्जीवस्येश्वरत्वसाधकैः, मृषा तर्कमूलकं यद् वचनमीश्वरोऽहमित्यादिकं तदीश्वर एव सन्दधाति प्रेरयति। तदीश्वरत्वमादौ गर्भगेऽर्भके नासीत् मरणे नरकादिपातेन नो भविष्यत्। स्वपेषु जीवेषु। स्वापयोग्या अज्ञानिन इति स्वपा जीवास्तेष्वीशितृत्वमीशाभेदो मृषैव। हीति तात्पर्योदाहृतमानसिद्धतामस्यार्थस्य द्योतयति -सत्यधर्मतीर्थाः।

**उदगात् पुमाननुगीतगुणांश्च जुषन् भजति सरूपतां तदनु जहाति जिहाति ताम् ।**
**अहिरिव त्वचं परमात्तमगां महसि महीयसेऽष्टगुणोऽपरिमेयभगः[१] ॥ ३९ ॥**

---

जीवस्येश्वरत्वे बाधकमाह– **नेति** । इदमीश्वरत्वमग्रे उत्पत्तेः पूर्वं जीवेषु गर्भस्थेषु नास नास्ति नाभविष्यत् । यदि गर्भस्थ ईशो भवेत् तर्हि उत्तरत्राप्यभविष्यत्, न च तथेति यस्मादतो निधनान्मरणादनन्तरमपि नरकादिगमनान्न विद्यत इत्यर्थः । नन्वस्येशोऽहमिति किन्निमित्ता प्रतीतिः? अत्राह– **अनिमित्तकमिति** । अः विष्णुर्निमित्तं यस्य तत् अनिमित्तकं भगवन्निमित्तकमेव । तस्य जन्ममरणयोरन्तरा मध्ये त्वयि जीवे मृषैवेशितृत्वं भाति न तु वस्तुतस्त्वं जीवः । कुतः? एकरसे प्रधानसारे । न च वस्तुतो जीवः सर्वोत्तमसारः । मृषैव तथा मन्यते । अतो भ्रान्तिरेव तथाज्ञाने प्रयोजिकेत्याह– अत इति । यतो जीवः सर्वसारो न भूयादतो द्रविणजातिविकल्पपथैर्जीव उपमीयत इत्यन्वयः । भ्रान्त्या जीवो द्रविणवानभिजातिमानित्यादिसाक्षिविरुद्धकल्पनामार्गैः कथ्यते, अज्ञैरिति शेषः । विद्वद्भिस्तु भवानेव द्रविणादिमानित्युच्यते । कुतः? यतस्तपोदमाद्या अभिजन्मकारणभूता गुणाश्च भवत एव । कथमेतदिति तत्राह– वितथेति । यतोऽभिजात्यादिगुणास्तव मुख्या अत इदं जीवेश्वरत्वं बुधास्तत्वज्ञानिनो वितथमनोविलासं मिथ्यामनोविकारमित्यवयन्ति जानन्ति । 'गुणा एवाभिजात्याख्यास्तद्वानेवाभिजातिमान् । अतोऽभिजात्यवान् विष्णुस्तदन्ये तूपचारतः' इति वचनात् । 'ये जगत् प्रवदन्त्यज्ञा जीवादन्येशवर्जितम् । तेषामपि तु तां वाचमीश एव ददात्यजः। न च तर्कैर्भवेदीशो जीवो वेदविरोधतः' इत्यादिस्मृत्यर्थत्वेन श्रुत्यन्तरमप्यूह्यम् ॥ ३८ ॥

अनुशब्दो विकल्पार्थः । श्रुतिष्वनुगीतगुणान् चशब्दात् तव कर्माणि च जुषन् । तदनु गुणस्मरणादनु उदगात्, संसारादिति शेषः । अस्मात् संसारान्मुक्तो भवतीत्यर्थः । तव सरूपतां च भजति । कश्चित् सायुज्यं कश्चित् सारूप्यं कश्चित् सालोक्यं च । यद्वा गुणस्मरणमनु गुणाननुकूलान् प्रातरादिकालविशेषान् जुषन् । यच्चायं पुमान् त्वया आत्तभगामपहृतप्रयत्नलक्षणशक्तिं प्रातिस्विकीं पूर्वोक्तां द्विविधां नीचां तां प्रकृतिं जहाति त्यजति जिहाति हन्ति च । तदुभयमपि त्वमेव जहासि जिहासि च । उत त्यागवधयोः समुच्चयार्थः । 'जिहाति रावणं सङ्ख्ये राघवः परमास्त्रवित्' इति च । 'स्वातन्त्र्यात् प्रकृतित्यागकर्ता नारायणः परः । यद्यप्येषा

---

१. 'स्मरन् ब्रह्मगुणान् नित्यं मुक्तो ब्रह्मसरूपताम् । दुर्भगां प्रकृतिं त्यक्त्वा हत्वा चान्यां दुरन्वयाम् । याति तच्च परेशानात् स हि पूज्योऽथ पूजकः । तस्यैकस्य स्वतन्त्रत्वात् स चानन्तगुणो विभुः' इति कापिलश्रुतिः । टीकायां व्याख्यातप्रायेयम् ।

**यदि न समुच्चरन्ति यतयोऽपि हृदि कामजडात्[१] दुरधिगमोऽसतां हृदि गतोऽस्मृतकण्ठमणिः ।**
**अनुतृप्तयोगिनामभयो भगवन् अनवगतान्तकादनधिरूढपदाद् भवतः[२] ॥ ४० ॥**

---

जीवसंस्था हन्ता च भगवान् प्रभुः' इति च । किञ्च महसि असुरजनमोहनाय शिवादीन् पूजयसि । महीयसे च सुरजनेन पूज्यसे च । अणिमाद्यष्टगुणो व्याप्तगुणो वा । अशू व्याप्ताविति धातुः । अपरिमेयभगो दुर्ज्ञेयपरमैश्वर्यादिगुणः ॥ ३९ ॥

यदि यतयोऽपि हृदि कामजडात् जडशरीराविष्टकामात् न समुच्चरन्ति सम्यङ् नोद्गच्छन्ति नोत्थिता भवन्ति, विषयकामाः स्युरित्यर्थः । तर्हि हृदिगतोऽपि तेषामसतामप्रशस्तकर्मणां पुंसां दुर्ज्ञेयः । अस्मृतकण्ठमणिरिति लुप्तोपमा । विस्मृतकण्ठमणिः पुरुषो यथा कण्ठस्थितं मणिं न जानाति तथेत्यर्थः । अनेन 'स यथाकामो भवति तत्क्रतुर्भवति (यत्क्रतुर्भवति) तत् कर्म कुरुते (यत् कर्म कुरुते) तदभिसम्पद्यते इति तु कामायमानः' इत्येतद् विवृतम् । हे भगवन् अनुतृप्तयोगिनाम् अनुतृप्तानां विषयालम्बुद्धिं प्राप्तानाम्, निष्कामानामित्यर्थः । निवृत्ति-मार्गस्थितानां पुंसां भवतोऽधीनात् अनधिरूढपदादनारूढवैकुण्ठादिब्रह्मस्थानात्[३], अज्ञाना-

---

१. यतयो हृदि कामजडाः इति -स.पाठः

२. 'स यथाकामो भवति तत्क्रतुर्भवति यत्क्रतुर्भवति तत्कर्म कुरुते यत्कर्म कुरुते तदभिसम्पद्यत इति तु कामयमानः ।
अथाकामयमानः योऽकामो निष्काम आप्तकाम आत्मकामो न तस्य प्राणा उत्क्रामन्ति ब्रह्मैव सन् ब्रह्माप्येति' इति श्रुतिः ।
तदर्थः ॥ स संसारी जीवो यथाकामो येन प्रकारेण निषिद्धकामनायुक्तस्तद्वासनावशात् तत्क्रतु-स्तद्विषयज्ञानवान् भवति । तदेव दुर्विषयादिकं जानाति न तु हृदिस्थं परमात्मानम् । विस्मृतकण्ठमणिः पुरुषो यथा कण्ठस्थितं मणिं न जानाति तथेत्यर्थः । यत्क्रतुर्भवति यद् दुर्विषयादिकं जानाति तत्कर्म कुरुते तदुद्देशेन कर्म कुरुते । यादृशं कर्म कुरुते तदभिसम्पद्यते तादृशं फलं प्राप्नोति । इति तु अनेन प्रकारेण कामयमानो निषिद्धकामनायुक्तः, निरूपित इति शेषः । एवं संसारिस्वरूपं निरूप्य मुक्तस्व-रूपमाह – अथेति । अकामयमानो यस्तस्य फलमुच्यत इति शेषः । योऽकामोऽकारवाच्यविष्णुकामो निष्कामो निषिद्धकामरहित आप्तकामो वैकुण्ठादिस्थाने प्राप्तसमस्तकाम आत्मकामः स्वरूप-भूतानन्दादिकामवान् मुक्तस्तस्य प्राणा नोत्क्रामन्ति, मुक्तस्य मरणं नास्तीत्यर्थः । स मुक्तो ब्रह्मैव सन् जीवभावमविहायैव, ब्रह्माणि जीवाः सर्वेऽपीति वचनात्, ब्रह्म परंब्रह्म अप्येति प्रविशति -छ.

३. अनधिरूढं वैकुण्ठादिपदं येनासावनधिरूढपदोऽन्तकस्तस्मादित्यर्थः ।

**तदवगमार्थसितासितयो र्गुणविगुणयोर्न हि देहभृतां सगिरः अनुययुरत्र हंसकुलगीतपरम्परया ।**
**न तुषावरणा इव रजांसि वान्ति वयसा सह यत् श्रुतयस्त्वयि सफलं पतन्ति न पतन्ति बन्धनाः[१] ॥**

---

मनवगतात् अज्ञातादन्तकात् कालादिलक्षणादभयोऽभयप्रदः । पूर्णानन्दलक्षणां मुक्तिं ददातीत्यर्थः । इन्द्रियाभिमानिदेवानां वियोगाभावलक्षणां च । अमुना च 'अथाकामयमानो योऽकामो निष्काम आप्तकाम आत्मकामो न तस्य प्राणा उत्क्रामन्ति ब्रह्मैव सन् ब्रह्माप्येति' इति श्रुतिव्याख्यानं (कृतम्) । अस्याः श्रुतेर्विशेषार्थः 'निषिद्धकामयुक्तानामसतां तु विशेषतः । दुर्ज्ञेयो भगवान् विष्णुर्हृदिस्थोऽस्मृतहारवत्' इत्यादिवाक्यादेवावगन्तव्यः । 'देवाश्च ऋषयश्चैव सुभक्त्या कामिनोऽपि तु' इत्यादिना कामित्वे यतित्वमप्रयोजकमित्युक्तम् ॥ ४० ॥

देहभृतां जीवानां सगिरो गिरा वाचा सहिताः श्रोत्रादयो गुणविगुणयोस्तदवगमार्थसितासितयोर्नानुययुरित्यन्वयः । द्वितीयार्थे षष्ठी । गुणरूपा श्रीर्विगुणो विष्णुस्तौ । पूर्वं प्रस्तुतो विष्णुस्तच्छब्देन परामृश्यते । तस्य हरेरवगमो यस्याः सा तदवगमा । तया श्रियाऽर्थ्यते ज्ञायते सम्यगिति अर्थः परमस्तेन सिता बद्धा सर्वदा तदधीनत्वेन वर्तत इति श्रीरसितोऽबद्धो नित्यमुक्तो विष्णुस्तौ श्रीश्रीधरौ नानुययुः आनुकूल्येन यथास्थितरूपगुणविषयत्वेन न प्रापुः । तद्विषयीकरणोपायमाह– **अत्रेति** । अत्र जीवराशौ । **हंसकुलगीतपरम्परयेति** । हंसानां ब्राह्मणानां कुलेन गीतस्योपदिष्टस्य ज्ञानस्य परम्परयेन्द्रियाण्यनुययुश्च श्रुतयश्चानुययुरित्युपसंख्यानं कर्तव्यम् । अत्र रजांसीति रजःशब्दोपादानाद् रजोगुणप्रधाना मनुष्या उपलक्ष्यन्ते । तुषा आवरणं कवचं येषां ते तुषावरणास्तण्डुलपदार्था रजांसीव यथा धूलीर्न वान्ति न स्पृशन्तीत्यर्थः।

---

१. 'जानाति प्रकृतिर्विष्णुं ज्ञेयो विष्णुश्च निर्गुणः । तावुभौ न विजानन्ति ऋते ब्रह्मपरम्पराम्' इति महोपनिषत्श्रुतिः ।
तदर्थः ॥ प्रकृतिर्विष्णुं जानाति । निर्गुणो विष्णुस्तथैव ब्रह्मादिभ्यो विशेषतो ज्ञेयः । विष्णुस्तु निर्गुण इत्युक्त्या प्रकृतिः सगुणेति सिद्ध्यति । मुक्तियोग्यास्तावुभौ श्रीविष्णू ब्रह्मपरम्परामृते ब्रह्मपरम्परोपदेशं विना न विजानन्ति, किन्तु ब्रह्मपरम्परोपदेशेनैव । विशेषतया सम्यक्त्वेनैव जानन्ति । असुरा ब्रह्मपरम्परोपदेशेनापि न विजानन्ति, किन्तु वि विपरीततया जानन्ति । नित्यसंसारिणस्तु विविधतया मिश्रत्वेनैव जानन्ति, संशयवन्तो भवन्तीत्यर्थः । तदेवं वेदाभिमानिनी दुर्गा प्रलयान्ते बहुरूपाणि गृहीत्वा जयजयेत्यादिश्रुतिभिर्वेदादीनामनिष्टनिवृत्तिविशिष्टेष्टप्राप्तिसाधनत्वसम्यग्ज्ञानं जनयन्ती जगत्सृष्ट्यादि व्यापारं कुर्विति हरिं तुष्टावेति ज्ञातव्यम् -छ.

श्रीभगवानुवाच

इत्येतद् ब्रह्मणः पुत्रा आश्रुत्यात्मानुशासनम् । सनन्दनमथानर्चुः सिद्धा ज्ञात्वाऽऽत्मनो गतिम् ।।
इत्यशेषसमाम्नायपुराणोपनिषद्रसः । समुद्धृतः पूर्वजैस्तैर्व्योमायनमहात्मभिः ।। ४३ ।।
त्वं चैतद् ब्रह्मदायाद श्रद्धयाऽऽत्मानुशासनम् । धारयन् भज मे कामं कामानां निधनं नृणाम् ।।
एवं स गुरुणाऽऽदिष्टो गृहीत्वा श्रद्धयाऽऽत्मवान् । पूर्णः सद्यस्ततो राजन् प्राह वीरव्रतो गुरुम् ।।

नारद उवाच

नमस्तस्मै भगवते कृष्णायामलमूर्तये । यो धाता सर्वभूतानामभयो यस्य ते कलाः ।। ४६ ।।
इत्याद्यमृषिमामन्त्र्य तच्छिष्यांश्चामलात्मकान् । ततोऽगादाश्रमं साक्षात् पितुर्द्वैपायनस्य मे ।।४७।।
सभाजितो भगवता कृतासनपरिग्रहः । तस्मै तद् वर्णयामास नारायणमुखात् श्रुतम् ।। ४८ ।।

---

तथा च श्रुतयो वयसा महता कालेन सह रजोरूपान् मनुष्यान् न वान्ति प्राप्तफलान् न कुर्वन्तीति यदतो बध्नन्तीति बन्धनाः । विधिनिषेधरूपेण पुरुषं बध्नन्त्यः श्रुतयः सात्विकानामर्थे त्वयि सफलं पतन्ति त्वद्गुणगणान् प्रकाश्य त्वदुपासकानां पुरुषार्थहेतवो भवन्ति । राजसानां बुद्धिव्यामोहकत्वेन त्वयि न पतन्ति पुरुषार्थहेतवो न स्युरित्यर्थः । अनेन 'अन्ये सर्वे श्रिया बद्धाः श्रीर्बद्धा विष्णुनैव तु । बन्धश्च विष्णुतन्त्रत्वं मुक्तानां च श्रियस्तथा' इति गारुड-पुराणार्थोऽपि सङ्गृहीतः ।। ४१ ।।

इतिशब्द आदिवचनः । एवमादिश्रुत्या गीतमात्मानुशासनं ब्रह्मज्ञानमाश्रुत्य श्रुत्वा हृदि कृत्वा । आत्मनः परमात्मनो गतिं स्वरूपस्थितिं ज्ञात्वा ।। ४२ ।।

व्योमायनमहात्मभिर्ब्रह्माश्रयेषूत्तमैस्तैः पूर्वजैः सनकादिभिः अशेषाणां समीचीनानामाम्ना-यानां पुराणानामुपनिषदां च रसः सार इति समुद्धृतः ।। ४३ ।।

ब्रह्मदायद ब्रह्मपुत्र नारद । काम्यानां निधनं नाशकरम् । यद्वा कामानामभीष्टानां फलानां निधनं कुलं गृहं वा । 'निधनोऽस्त्री कुले नाशे निस्त्रिंशे क्रूरखड्गयोः' इति यादवः ।। ४४ ।।

पूर्णः स्वतस्तृप्तः ।। ४५ ।। सर्वभूतानां धाता धृतिपोषणयोः कर्ता । ये सर्वभूतानामिति प्रस्तुतास्ते जीवा यस्य तव कला प्रतिबिम्बांशाः ।। ४६ ।। ऋषिरूपत्वाद् ऋषिः ।। ४७ ।।

अत्र नारदेन व्यासाय कथाकथनं स्तुत्यर्थं न तु ज्ञापनाय । 'कथाः कथयतीशस्य व्यासस्यान्ते स नारदः । स्तुत्यर्थं तस्य देवस्य ज्ञापनाय न तु क्वचित्' इत्यादि ।। ४८ ।।

तदेतद् वर्णितं राजन् यश्च प्रश्नः कृतस्त्वया । येन ब्रह्मण्यनिर्देश्ये निर्गुणेऽपि मनश्चरेत् ।। ४९ ।।
यो ह्यात्मा जगदादिमध्यनिधनो योऽव्यक्तजीवेश्वरो यः सृष्ट्वेदमनुप्रविष्ट ऋषिणा चक्रे पुनः संहिताम् ।
यं सम्पद्य जहात्यजामनुशयी सुप्तः कुलायं यथा तं कैवल्यनिरस्तयोनिमभयं ध्यायेदजस्रं हरिम् ।।५०।।

।। इति चतुर्नवतितमोऽध्यायः ।।

---

## ।। अथ पञ्चनवतितमोऽध्यायः ।।

**राजोवाच**

सभाजयित्वा बहुधा श्रुतदेवं श्रियः पतिः । आगतो द्वारकां भूयः किं चकार महामुने ।। १ ।।

**श्रीशुक उवाच**

उपप्लाव्यान् गतान् पार्थान् गोग्रहे जितकौरवान् । शुश्राव तीर्णसमयान् बलेन महता वृतान् ।।२।।
सम्प्रहृष्टमनाः कृष्णो महत्या सेनया वृतः । सात्यकिं कृतवर्माणमुद्धवं शठसारणौ ।। ३ ।।
अभिमन्युं च सौभद्रं पुरस्कृत्य महामतिः । अक्षौहिण्या पृतनया सहितः सत्यसङ्गरः ।।
शङ्खदुन्दुभिनिर्घोषैर्द्रष्टुं प्रायाद् युधिष्ठिरम् ।। ४ ।।

---

त्वया यः प्रश्नः कृतस्तत्प्रश्नवचनमुद्दिश्यैतत्परिहारवचनं वर्णितम् । येन वर्णितप्रकारेणानिर्देश्ये निर्गुणे ब्रह्मणि मनश्चरेत् तथेति ।। ४९ ।।

उपासनार्थं स्वलक्षणैर्लक्षयति– यो हीति । आत्मा जगत आदिमध्यनिधनानि उत्पत्तिस्थितिसंहारा यस्मात् स तथा । यस्माच्चाव्यक्तजीवयोः प्रकृतिचेतनयोरीश्वरः । यश्चेदं सृष्ट्वा अनुप्रविष्टः । यश्च ऋषिरूपेण पुराणसंहितां चक्रे । अनुशयी जीवो यं पुनः सम्पद्य प्राप्य अजां बन्धकशक्तिं जहाति । सुप्तः कुलायं शरीरादावभिमानं च यथा त्यजति (तथा) । तं कैवल्यनिरस्तयोनिं समाधिकाभावेन निराकृतकारणं हरिमजस्रं निरन्तरं ध्यायेदित्यन्वयः।।५०।।

।। इति श्रीमद्भागवतटीकायां विजयध्वजतीर्थकृतायां पदरत्नावल्यां दशमस्कन्धे उत्तरार्धे चतुर्नवतितमोऽध्यायः ।।

---

पाण्डवकौरवयुद्धकथनव्याजेन श्रीकृष्णमाहात्म्यं प्रदर्शयत्यस्मिन्नध्याये । तत्र राजा पृच्छति– **सभाजयित्वेति** ।। १ ।।

गोग्रहे गोग्रहणे । तीर्णवनवासाज्ञातवासलक्षणसमयान् ।। २,३ ।। सत्यसङ्गरः सत्यप्रतिज्ञः सत्ययुद्धो वा ।। ४,५ ।।

सन्धिमिच्छन् कौरवाणां कुर्वाणं दौत्यमच्युतम् । मूढो ग्रहीतुमारेभे विनशिष्णुः सुयोधनः ॥५॥
स तत्रानन्तरूपत्वं दर्शयित्वा महाभुजः । कृत्वा विभीषिकां घोरां पाण्डवान् पुनराययौ ॥ ६ ॥
विवृद्धमत्सराः सर्वे राजानो जातमन्यवः । युद्धायैवानुयुज्यन्ते न सन्धिमनुकाङ्क्षिणः ॥ ७ ॥
युधिष्ठिरस्तु धर्मात्मा पुरस्कृत्य जनार्दनम् । कुरुक्षेत्रं ययौ राजन् युद्धाय भ्रातृभिः सह ॥ ८ ॥
अक्षौहिण्या विराटोऽपि मत्स्यराजो महामनाः । युधिष्ठिरमनुप्रायात् सपुत्रः कुरुसत्तम ॥ ९ ॥
द्रुपदश्च शिखण्डी च धृष्टद्युम्नश्च दुर्जयः । अक्षौहिणीभिस्तिसृभिरनुजग्मुर्युधिष्ठिरम् ॥ १० ॥
अक्षौहिण्या परिवृतः सात्यकिर्युद्धलालसः । नियोगाद् वासुदेवस्य प्रायादनु युधिष्ठिरम् ॥ ११ ॥
अक्षौहिण्या परिवृताः कैकेयाः पञ्च भूभृतः[1] । अनुजग्मुर्धर्मपुत्रं राजानं मातृसोदराः ॥ १२ ॥
धृष्टकेतुस्तदा राजा शैब्यश्च नरपुङ्गवः । अन्वयातां नृपश्रेष्ठावक्षौहिण्या युधिष्ठिरम् ॥ १३ ॥
ते गत्वा पाण्डवाः सर्वे नारायणपुरोगमाः । स्वैरमूषुः[2] कुरुक्षेत्रे प्रतीक्षन्तः सुयोधनम् ॥१४॥
सुयोधनोऽपि कौरव्य मानी भ्रातृशतैर्वृतः । द्रोणभीष्मकृपद्रौणिकर्णबाह्लीकसौबलैः ॥ १५ ॥
हार्दिक्यसाल्वमद्रेशभगदत्तजयद्रथैः । अन्यैश्च राजशार्दूलैर्नानादेशसमुद्भवैः ॥ १६ ॥
शङ्खदुन्दुभिनिर्घोषैर्भेरीपटहनिःस्वनैः । पूरयन् ककुभो वीरः प्रययौ कम्पयन् महीम् ॥ १७ ॥
ते समेत्य कुरुक्षेत्रे राजानो कुरुपाण्डवाः । स्यमन्तपञ्चके चक्रुर्व्यूहमुद्यति भास्करे ॥ १८ ॥
अक्षौहिण्यः कौरवाणामेकादश दुरात्मनाम् । सप्त पाण्डुसुतानां च कर्शितानां वने भृशम् ॥१९॥
तथा व्यूढेष्वनीकेषु तावकेष्वितरेषु च । गाण्डीवधन्वी कवची बद्धतूणतलत्रवान् ।
आरूढस्यन्दनः पार्थो ददर्श रिपुवाहिनीम् ॥ २० ॥
उपाध्यायान् पितॄन् भ्रातॄन् मातुलान् स्वस्रियान् सुतान् ।
शिष्यान् सपौत्रान् दौहित्रान् शालान् सम्बन्धिबान्धवान् ।
दृष्ट्वा निर्वेदमापन्नो हन्तुं नैवाकरोन्मनः ॥ २१ ॥
तं विषण्णमनश्चित्तं कृपालुमविधातिनम् । प्रबोध्य प्रेरयामास केशवो योगमायया ॥ २२ ॥
त्यक्तशस्त्राय शान्ताय बन्धून् प्रति कृपालवे । दर्शयामास पार्थाय विश्वरूपं जनार्दनः ॥ २३ ॥
सम्बोधितः कंसभिदा तथा वासवनन्दनः । भूयो जग्राह कोदण्डं युद्धायाच्युतसारथिः ॥ २४ ॥
प्रारब्धं भारतं युद्धं श्रुत्वा सङ्कर्षणो बली । अशक्नुवन् वारयितुं किं करोमीत्यचिन्तयत् ॥ २५ ॥

---

विभीषिकां भयम् ॥६॥ अनुयुज्यन्ते अनुयुक्ताः क्रियन्ते ॥७-११॥ मातृसोदराः मातृपक्षेण सोदराः ॥१२-१७॥ व्यूहं शिबिरम् ॥१८-२१॥ योगमायया स्वरूपसामर्थ्येन ॥२२-२५॥

---

१. पञ्चकेकयराजा इत्यर्थः -स.  २. ऊषुरिति रूपमार्षम्?

प्रवृत्तं भारतं युद्धमवेक्ष्योद्वेगविह्वलः । तीर्थव्याजेन तत्याज रामः परिचितां भुवम् ।। २६ ।।
सेनापतिः पाण्डवानां धृष्टद्युम्नो महारथः । गाङ्गेयो धार्तराष्ट्राणां वृद्धः कुरुपितामहः ।
स कुर्वन्नाहवं घोरं निहतो दशमेऽहनि ।। २७ ।।
भारद्वाजं ततो द्रोणं सेनापत्ये सुयोधनः । न्ययोजयत् स युयुजे दिवसान् पञ्च भूपते ।। २८ ।।
तस्मिन् युध्यति दुर्धर्षे सैन्धवेन दुरात्मना । अभिमन्युस्तव पिता निहतो रणमूर्द्धनि ।। २९ ।।
पुत्रशोकाभिसन्तप्तः प्रतिजज्ञे धनञ्जयः । जयद्रथं हनिष्यामि श्वोभूत इति भारत ।। ३० ।।
तस्यां निशायां गोविन्दस्त्वारुह्य गरुडं हरिः । सुप्तमर्जुनमादाय कैलासमभिजग्मिवान् ।। ३१ ।।
तत्र गत्वा विरूपाक्षं दृष्ट्वा सम्भाष्य वाञ्छितम् । साधयित्वाऽर्जुनस्याशु स्वायोधनमुपाययौ ।।
ततोऽपरदिने युद्धमासीद् घोरं जनक्षयः । मम्रुर्महीभुजस्तत्र बहवो बाहुशालिनः ।। ३३ ।।
हतेषु रणदक्षेषु राजपुत्रेष्वनेकशः । जयद्रथोऽपि पार्थेन निहतो दिवसात्यये ।। ३४ ।।
दिनानि पञ्च द्रोणोऽपि कृत्वा युद्धमतन्द्रितः । पञ्चमेऽहनि सन्ध्यायां धृष्टद्युम्नेन पातितः ।। ३५ ।।
ततः सेनापतिः कर्णो भूत्वा चक्रे महारणम् । दिनद्वयान्ते पार्थेन स च सङ्ख्ये निपातितः ।।३६।।
शल्योऽप्यर्धदिनं कृत्वा सेनापत्यमरिन्दम । मध्यन्दिनगते सूर्ये धर्मराजेन पातितः ।। ३७ ।।
युयुधाते ततो वीरौ गदया दीर्घवैरिणौ । भीमदुर्योधनौ कोपात् परस्परवधैषिणौ ।। ३८ ।।
अष्टादशाक्षौहिणीनां तत्पतीनां च भूभृताम् । अष्टादशैर्दिनैरासीदर्धोनैः सङ्क्षयो महान् ।। ३९ ।।

इति पञ्चनवतितमोऽध्यायः ।।

---

## ।। अथ षण्णवतितमोऽध्यायः ।।

### राजोवाच

अष्टादशाक्षौहिणीनां तावद्भिर्मायया दिनैः । व्यापादनं येन कृतं तस्मै विश्वात्मने नमः ।। १ ।।

---

परिचितां प्रागभ्यस्ताम् ।। २६-३० ।। विरूपाक्षं रुद्रम् ।। ३१,३२ ।। जनक्षय आसीत् ।। ३३-३८ ।। अर्धदिनोनैरष्टादशदिनैः अर्धदिनसहितैः सप्तदशदिनैः ।। ३९ ।।

।। इति श्रीमद्भागवतटीकायां विजयध्वजतीर्थकृतायां पदरत्नावल्यां दशमस्कन्धे उत्तरार्धे पञ्चनवतितमोऽध्यायः ।।

---

सितकेशावेशिनो बलभद्रस्य चरितं कृष्णमाहात्म्यानुस्यूतमेवातस्तदपि पुरुषार्थोपयोगि भवतीत्यनेनाध्ययद्वयेन निरूपयति । तत्रादौ श्रुतकृष्णवैभवो विस्मितमना राजा भगवन्तं नमति– **अष्टादशेति** । मायया महिम्ना । व्यापादनं निधनम् । विश्वात्मने सर्वान्तर्यामिणे ।। १ ।।

शृण्वतो मे कथास्तस्य चरितानि च सङ्घशः। वैक्लव्यं विस्मयो भीतिर्वर्धते मे पुनः पुनः ॥ २ ॥
मन्ये प्रायेण प्राप्मानं जीर्णं मम दुरत्ययम्। इन्द्रियाणि प्रबुद्धानि प्रसन्नं च मनो भृशम् ॥ ३ ॥
क्षुत्तृष्णे च प्रशान्ते मे आत्मा चानन्दनिर्भरः। प्रसादात् तव धर्मज्ञ कृतार्थोऽहमिहाभवम् ॥ ४ ॥
अपि च श्रोतुमिच्छामि किञ्चिदर्थं तपोधन। युध्यतः सुहृदो दृष्ट्वा निवारितुमशक्कुवन्।
तीर्थं स्नातुं गतो रामः किं चकार तपोधन ॥ ५ ॥

श्रीशुक उवाच

तीर्थाभिषेकव्याजेन मध्यस्थः प्रययौ किल। स्नात्वा प्रभासं सन्तर्प्य देवर्षिपितृमानवान् ॥ ६ ॥
सरस्वतीं प्रतिस्रोतं ययौ ब्राह्मणसंवृतः। पृथूदकं बिन्दुसरस्त्रितकूपं सुदर्शनम् ॥ ७ ॥
विशालं ब्रह्मतीर्थं च चक्रं प्राचीं सरस्वतीम्। यमुनामनु यात्येष गङ्गामनु च भारत ॥ ८ ॥
जगाम नैमिषं यत्र ऋषयः सत्रमासते। तमागतमभिप्रेत्य मुनयो दीर्घसत्रिणः।
अभिवन्द्य यथान्यायं प्रणम्योत्थाय चार्चयन् ॥ ९ ॥
सोऽर्चितः सपरीवारः कृतासनपरिग्रहः। रोमहर्षणमासीनं शिष्यमैक्षन्महामुनेः ॥ १० ॥
प्रत्यवस्थायिनं सूतमकृतप्रह्वणाञ्जलिम्। अध्यासीनं च तान् विप्रांश्चुकोपोद्वीक्ष्य माधवः ॥ ११ ॥
कस्मादसाविमान् विप्रानध्यास्ते प्रतिलोमजः। धर्मपालांस्तथैवास्मान् वधमर्हति दुर्मदः ॥ १२ ॥
ऋषेर्भगवतो भूत्वा शिष्योऽधीत्य बहूनि च। सेतिहासपुराणानि धर्मशास्त्राणि सर्वशः ॥ १३ ॥

---

हरिकथाश्रवणस्य प्रत्यक्षफलमाह– **शृण्वत इति**। वैक्लव्यं पारवश्यं कथाश्रवणतात्पर्यम्। विस्मयः स्मयाभावः भीतिः विहिताकरणे प्रत्यवायबुद्धिः ॥ २ ॥ प्रबुद्धानि प्रफुल्लानि, स्वविषये इति शेषः ॥ ३ ॥ आत्मा भोगायतनम्। आनन्दनिर्भरः पूर्णानन्दः ॥ ४ ॥

कृतार्थश्चेत् तूष्णीं भवेति तत्राह– **अपि चेति**। किञ्चिदित्यव्ययम्। शब्दतोऽल्पमर्थतो महान्तमित्यतो वा व्यत्ययः ॥ ५ ॥ भोजनादिना मानवसन्तर्पणम् ॥ ६ ॥

प्रतिस्रोतं प्रवाहाभिमुखम्। पृथूदकं नाम तीर्थम्। त्रितस्य मुनेः कूपम् ॥ ७ ॥ विशालमप्येकं तीर्थम् ॥ ८ ॥ अभिप्रेत्य अभिगम्य ॥ ९,१० ॥ प्रत्यवस्थायिनम् आभिमुख्येन स्थितम्। प्रह्वणं नमनम् ॥ ११ ॥

तान् विप्रानध्यासीनं तेषां मध्ये उच्चासने स्थितम्। माधवो मधुकुलोद्भवः ॥ प्रतिलोमजः विपरीतजन्मा[१]। अस्मानिति 'द्वितीया पञ्चम्यर्थे ॥ १२ ॥ सेतिहासपुराणान्यधीत्य सुदुष्टस्य प्रतिजन्मनः[२] ॥ १३ ॥

---

१. व्यासेन रोमाश्वतः सृष्टोऽपि पादसृष्टत्वात् सूतो जात इति ज्ञेयम् -स.        २. प्रतिलोमजन्मन इति स्यात्।

**अदान्तस्याविनीतस्य वृथा पण्डितमानिनः। न गुणाय भवन्त्यस्य नटस्येवाजितात्मनः॥ १४॥**
**एतदर्थो हि लोकेस्मिन्नवतारो मया कृतः। वध्या मे धर्मध्वजिनस्ते हि पातकिनोऽधिकाः॥१५॥**
**एतावदुक्त्वा भगवान्निवृत्तोऽसद्वधादपि। भावित्वात् तं कुशाग्रेण करस्थेनाहनत् प्रभुः॥ १६॥**
**हाहेति वादिनः सर्वे ऋषयः खिन्नमानसाः। ऊचुः सङ्कर्षणं देवमधर्मस्ते कृतः प्रभो॥ १७॥**
**अस्य ब्रह्मासनं दत्तमस्माभिर्यदुनन्दन। आयुश्चास्याक्षयं तावद् यावत् सत्रं समाप्यते॥ १८॥**
**अजानतेवाचरितं त्वया ब्रह्मवधो यथा। योगेश्वरस्य भवतो नाम्नायो विनियामकः॥ १९॥**
**यद्येतद् ब्रह्महत्याया पावनं लोकपावन। चरिष्यति भवान् लोकसङ्ग्रहं नान्यचोदितः॥ २०॥**

**बलभद्र उवाच**

**चरिष्ये वधनिर्वेशं लोकानुग्रहकाम्यया। नियमः प्रथमे कल्पे यावान् स तु विधीयताम्॥ २१॥**
**दीर्घमायुर्व्रतं तस्य सत्वमिन्द्रियमेव च। आशासितं यद्यदुत साधये योगमायया॥ २२॥**

**ऋषय ऊचुः**

**अस्त्रस्य तव वीर्यस्य मृत्योरस्माकमेव च। यथाभवेद् वचः सत्यं तथा राम विधीयताम्॥ २३॥**

---

गुणाय पुण्यफलप्रदानलक्षणाय न भवन्ति॥ १४॥ एतदर्थः दुष्टनिग्रहार्थः॥ १५॥ असद्वधान्निवृत्तोऽपि। मरणस्यावश्यंभावित्वात्॥ १६,१७॥ ब्रह्मासनं ब्राह्मणमध्ये ब्राह्मणयोग्यासनम्॥ १८॥

अस्य निधनं त्वया अजानतेव यद्वा जानता वा। ब्राह्मणवधसमानदोषोऽय-मित्याशयेनाह– **ब्रह्मेति**। भवत आम्नायो विधिनिषेधशासिशास्त्रं नियामकम् इदं कुरु नेदमिति नियन्ता नास्ति। कुत इत्यत आह– **योगेश्वरस्येति**॥ १९॥

विध्यगोचरत्वात् ऋषयः स्वहार्दं विज्ञापयन्ति– **यदीति**। यदि भवान् त्वं ब्रह्महत्याया एतत्पावनं शुद्धिलक्षणं परिहारं चरिष्यति तर्हि लोकसङ्ग्रहं करिष्यति। कुतः? अत्राह– **नेति**॥ २०॥

प्रथमे कल्पे उत्तमकल्पे यावान् नियमो विधिः स त्वेव विधिर्भवद्भिर्विधीयताम्॥ २१॥

तस्य व्रतं दीर्घमायुः सत्वमिन्द्रियं दूरश्रवणदूरदर्शनादिशक्तिमत् साधये। किं बहुना? यद्यदाशासितं कामितं तत्तत् साधय इत्याह– **आशासितमिति**॥ २२॥

अस्त्रवीर्ययोरमोघत्वं मृत्योरनावृत्तित्वमस्मद्वचसश्चावन्ध्यफलत्वं यथा स्यात् तथा विधी-यताम्॥ २३॥

बलभद्र उवाच

आत्मा वै पुत्र उत्पन्न इति वेदानुशासनम् । तस्मादस्य भवेद् वक्ता आयुरिन्द्रियवीर्यवान् ॥२४॥
किं वः कामो मुनिश्रेष्ठा ब्रूताहं करवाणि तत् । अजानतश्चापचितिं यथा मे बुध्यतां बुधाः ॥२५॥

ऋषय उचुः

इल्वलस्य सुतो घोरो बल्वलो नाम दानवः । स दूषयति नः सर्वान् सत्रमेत्य च पर्वणि ॥ २६ ॥
तं पापं जहि दाशार्ह तन्नः शुश्रूषणं परम् । पूयशोणितविण्मूत्रसुरामांसाभिवर्षिणम् ॥ २७ ॥
ततश्च भारतं वर्षं परीत्य सुसमाहितः । चरित्वा द्वादशान् मासान् तीर्थस्नायी विशुध्यसे ॥ २८ ॥

इति षण्णवतितमोऽध्यायः ॥

---

## अथ सप्तनवतितमोऽध्यायः ॥

श्रीशुक उवाच

ततः पर्वण्युपावृत्ते प्रचण्डः पांसुवर्षणः । भीमो वायुरभूद् राजन् पूयगन्धश्च सर्वशः ॥ १ ॥
ततोऽमेध्यमयं वर्षं बल्वलेन विनिर्मितम् । अभवद् यज्ञशालायां सोऽप्यदृश्यत शूलधृक् ॥ २ ॥
तं विलोक्य बृहत्कायं भिन्नाञ्जनचयोपमम् । तप्तताम्रशिखाश्मश्रुदंष्ट्रोग्रभ्रुकुटीमुखम् ॥ ३ ॥
सस्मार मुसलं रामः परसैन्यविमर्दनम् । हलं च दैत्यदमनं तौ तूर्णमुपतस्थतुः ॥ ४ ॥
तमाकृष्य हलाग्रेण बल्वलं गगनेचरम् । मुसलेनाहनत् क्रुद्धो मूर्ध्नि ब्रह्मद्रुहं बलः ॥ ५ ॥
सोऽपतद् बलनिर्भिन्नललाटोऽसृक् समुत्सृजन् । मुञ्चन्नार्तस्वरं शैलो यथा वज्रहतोऽसुरः ॥ ६ ॥
संस्तुत्य मुनयो रामं प्रयुज्यापि तथाऽऽशिषः । अभ्यषिञ्चन् महार्हाभिर्वृत्रघ्नं विबुधा यथा ॥ ७ ॥

---

पुराणानां वक्ता पुत्रः स्यात्[1] ॥ २४ ॥ हे बुधा युष्माभिर्वरो दत्त इत्यजानतो मेऽपचितिं परिहारं बुध्यताम् ॥ २५ ॥ प्रायश्चित्तं विधातुमाहुः– इल्वलस्येति ॥ २६-२८ ॥

॥ इति श्रीमद्भागवतटीकायां विजयध्वजतीर्थकृतायां पदरत्नावल्यां दशमस्कन्धे उत्तरार्धे षण्णवतितमोऽध्यायः ॥

---

तप्तताम्रवत् प्रकाशमानाभिः शिखाश्मश्रुदंष्ट्रोग्रभ्रुकुटीभिर्युक्तं मुखं यस्य स तथा तम् । शिखा च श्मश्रूणि च दंष्ट्रे च उग्रभ्रुकुटी च शिखाश्मश्रुदंष्ट्रोग्रभ्रुकुट्यः । उग्रा भ्रुकुटी उग्रभ्रुकुटी ॥ १-३ ॥

---

१. अस्य पुत्रः पुराणानां वक्ता स्यादित्यर्थः ।

वैजयन्तीं ददुर्मालां श्रीधामाम्लानपङ्कजाम् । रामाय बाससी दिव्ये दिव्यान्याभरणानि च ॥ ८ ॥
अथ तैरभ्यनुज्ञातः कौशिकीमेत्य ब्राह्मणैः । स्नात्वा सरोवरमगाद् यतः सरयुरास्रवत् ॥ ९ ॥
स्रोतेन सरयूं प्रायाद् प्रयागमुपगम्य सः । स्नात्वा सन्तर्प्य देवादीन् जगाम पुलहाश्रमम् ॥ १० ॥
गोमतीं गण्डकीं स्नात्वा विपाशां शोणमाप्लुतः । गयां गत्वा पितॄनिष्ट्वा[1] गङ्गासागरसङ्गमम् ॥११॥
उपस्पृश्य महेन्द्राद्रौ रामं दृष्ट्वाऽभिवाद्य तम् । सप्तगोदावरीं वेर्णीं पम्पां भीमरथीं तथा ॥ १२ ॥
स्कन्दं दृष्ट्वा ययौ रामः श्रीशैलं गिरिशालयम् । द्रुमिलेषु महारण्यं दृष्ट्वाऽद्रिं वेङ्कटं विभुः ॥१३॥
कामकोष्ठीं पुरीं काञ्चीं कावेरीं च सरिद्वराम् । श्रीरङ्गाख्यं महापुण्यं यत्र सन्निहितो हरिः ॥१४॥
ऋषभाद्रिं हरेः क्षेत्रं दक्षिणां मधुरां तथा । समुद्रसेतुमगमन्महापातकनाशनम् ॥ १५ ॥
तत्रायुतमदाद् धेनूर्ब्राह्मणेभ्यो हलायुधः । कृतमालां ताम्रपर्णीं मलयं च कुलाचलम् ॥ १६ ॥
तथाऽगस्त्यं समासीनं नमस्कृत्याभिवाद्य च । योजितस्तेन चाशीर्भिरनुज्ञातो गतोऽर्णवम् ॥१७॥
दक्षिणं तत्र कन्याख्यां दुर्गां देवीं ददर्श सः । ततः फल्गुनमासाद्य पञ्चाप्सरमनुत्तमम्[2] ॥१८॥
विष्णुः सन्निहितो यत्र स्नात्वाऽस्पर्शद् गवायुतम् । स्थानन्दूरं हरेः स्थानं यत्र सन्निहितो हरिः॥१९॥
ततोऽतिव्रज्य भगवान् केरलादींस्त्रिगर्तकान् । गोकर्णाख्यं शिवक्षेत्रं सान्निध्यं यत्र धूर्जटेः ॥२०॥

---

श्रियो धामानि अम्लानानि पङ्कजानि यस्यां सा तथा ताम् ॥ ४-८ ॥ यतः सरोवरात् आस्रवत् अस्यन्दत् ॥ ९ ॥ स्रोतेन प्रवाहेण ॥ १० ॥ शोणं नदम् ॥ ११ ॥ सप्तशाखाप्रभेदेन समुद्रं गता सप्तगोदावरी ताम् ॥ १२-१८ ॥ अस्पर्शत् अस्पृशत् ददौ । स्थानन्दूरमनन्तक्षेत्रम् ॥ १९ ॥ धूर्जटेः शिवस्य ॥ २०,२१ ॥

---

१. अत्र हलधरस्य गयायां पितृयजनमुक्तम् । तदयुक्तम् । पितुर्वसुदेवस्य विद्यमानत्वेन रामस्याधिकाराभावात् । अतोऽर्थ उच्यते । पितॄनिष्ट्वेत्यनेन न गयाश्राद्धं विवक्षितं येन जीवत्पितृकस्याधिकाराभावः । किन्तु रामेण चातुर्मास्येषु विहितः साकमेधान्तर्गतः पितृयज्ञोऽनुष्ठितः । न च रामस्याहिताग्नित्वमेव नास्ति श्रुतत्वाभावादिति वाच्यम् । अश्रुतत्वेपि अनुजस्य कृष्णस्याहिताग्नित्वश्रवणेन ज्येष्ठस्य रामस्यार्थापत्तिसिद्धेः । अन्यथा परिवेत्तृत्वप्रसङ्गात् । 'दाराग्निहोत्रसंयोगं कुरुते योऽग्रजे स्थिते । परिवेत्ता स विज्ञेयः परिवित्तिस्तु पूर्वजः' इति मिताक्षरादौ । अत एव पितॄन् सन्तर्प्येति नोक्तम् । इष्ट्वेत्युक्तम् । साकमेधे बर्हिषत्प्रभृतीनामेव पितृत्वाङ्गीकारान्न जनकादीनाम् । अत उक्तस्य नायुक्तता । नापि यात्रायां रामपत्न्यसन्निधानात् साकमेधायोगः । क्षत्रियस्य कुशहेमरचितपत्न्या चरितार्थत्वात् । साकमेधीयपितृयज्ञस्य स्त्रीभिरदृश्यत्वाच्चेति विरोधोद्धारकृतः श्रीनिवासाचार्याः ।

२. तत्र दक्षिणोदधितीरे कन्येत्याख्या यस्यास्तां दुर्गां ददर्श । फल्गुनं तीर्थं पञ्चाप्सरसतीर्थं च -स.

तत्र द्वैपायनं दृष्ट्वा शूर्पाकारमगाद् बलः । तापीं पयोष्णीं निर्विन्ध्यामुपस्पृश्याथ दण्डकम् ॥२१॥
प्रविश्य रेवामगमद् यत्र माहिष्मती पुरी । अनुतीर्थमुपस्पृश्य प्रभासं पुनरागमत् ॥ २२ ॥
श्रुत्वा द्विजैस्तु कथितं कुरुपाण्डवसंयुगम् । सर्वराजन्यनिधनं भारमेतद् हृतं भुवः ॥ २३ ॥
स भीमदुर्योधनयोर्गदाभ्यां युध्यतो रणम् । वारयिष्यन् विशसनं जगाम यदुनन्दनः ॥ २४ ॥
युधिष्ठिरस्तु तं दृष्ट्वा यमौ कृष्णार्जुनावपि । अभिवाद्याभवंस्तूष्णीं किं विवक्षुरिहागतः ॥ २५ ॥
गदापाणी उभौ दृष्ट्वा संरब्धौ विजयैषिणौ । मण्डलानि विचित्राणि चरन्ताविदमब्रवीत् ॥ २६ ॥
युवां तुल्यबलौ वीरौ हे राजन् हे वृकोदर । एकं प्राणाधिकं मन्य उतैकं शिक्षयाऽधिकम् ॥ २७ ॥
तस्मादेकतरस्येह युवयोः समवीर्ययोः । न लक्ष्यते जयोऽन्यो वा विरमत्वफलो रणः ॥ २८ ॥
न तद्वाक्यं जगृहतुर्बद्धवैरौ नृपार्थवत् । अनुस्मरन्तावन्योन्यं दुरुक्तं दुष्कृतानि च ॥ २९ ॥
दिष्टं तदनुमन्वानो रामो द्वारवतीं ययौ । उग्रसेनादिभिः प्रीतैर्ज्ञातिभिः समुपागतः ॥ ३० ॥
ईदृग्विधान्यसंख्यानि बलस्य बलशालिनः । अनन्तस्याप्रेमयस्य कर्माण्यद्भुतकर्मणः ।
शृण्वन् गृणंश्च तद्भक्त्या विष्णोः स दयितो भवेत् ॥ ३१ ॥

इति सप्तनवतितमोऽध्यायः ॥

---

## ॥ अथाष्टानवतितमोऽध्यायः ॥

### श्रीशुक उवाच

भगवानपि गोविन्दः साधयित्वा स्ववाञ्छितम् । सुयोधने महाबाहौ निहते गदया रणे ॥ १ ॥

---

अनुतीर्थं नाम तीर्थम् ॥ २२ ॥ भुव एतद् एतं भारं हृतं श्रुत्वा, एतत् एतर्हि भुवो भारं हृतं मेने इति शेष इति वा ॥२३॥ विशसनं युद्धम् ॥ २४ ॥ किं वक्तुकाम आगत इति मत्वा ॥ २५,२६ ॥ प्राणाधिकं बलाधिकम् ॥ २७ ॥ अन्यः पराजयो वा । विरमतु शान्तो भवतु ॥ २८ ॥ दुष्कृतानि जतुगृहदाहादीनि ॥ २९ ॥ तद् युद्धं दिष्टं दैवकृतम् ॥ ३० ॥

बलभद्रस्य रामस्य । विक्रमश्रवणादिना किं फलं भवतीति तत्राह– **ईदृग्विधानीति** ॥३१॥

॥ इति श्रीमद्भागवतटीकायां विजयध्वजतीर्थकृतायां पदरत्नावल्यां दशमस्कन्धे उत्तरार्धे सप्तनवतितमोऽध्यायः ॥

---

विसृज्यायोधनं शून्यं प्रयातुमुपचक्रमे । कृपश्च कृतवर्मा च द्रौणिश्च रथिनां वरः ॥ २ ॥
अवशिष्टा महात्मानः सुयोधनबले त्रयः । पञ्च पाण्डुसुता वीराः सात्यकिश्च महाबलः ॥ ३ ॥
वैश्यापुत्रो युयुत्सुश्च शिष्टाः कृष्णपुरोगमाः । तान् पुरस्कृत्य गोविन्दो मुनिवृद्धसमन्वितः ॥ ४ ॥
जगाम हास्तिनपुरं धृतराष्ट्रं प्रसादितुम् । गान्धारीं धृतराष्ट्रं च विदुरं च महामतिम् ॥ ५ ॥
प्रसाद्य पाण्डवान् स्वे स्वे राज्ये संस्थाप्य यत्नतः । स्तूयमानो मुनिगणैः सूतमागधबन्दिभिः ॥६॥
अनुयातः पाण्डुपुत्रैः प्रेमबाष्पाविलेक्षणैः ।ताननुज्ञाप्य सोत्कण्ठान् रथेनादित्यवर्चसा ॥ ७ ॥
शङ्खदुन्दुभिनिर्घोषैर्वेदमङ्गलनिस्वनैः । पुण्याहमन्त्रघोषैश्च द्वारकां प्रययौ हरिः ॥ ८ ॥
विचित्रतोरणां रम्यां चलत्कदलिकाकुलम् । अलङ्कृतां पौरजनैः सिक्तसंसृष्टभूतलाम् ॥ ९ ॥
उपस्थितः पौरजनैः पालिकाङ्कुरधारिभिः । योषिद्भिर्वारमुख्याभिर्भूषिताभिश्च भूषणैः ॥ १० ॥
वहद्भिर्दीपमुकुरकलशस्रक्फलाक्षतान् । उपस्थितो ब्राह्मणैश्च पुत्रैः पौत्रैः सहानुजैः ॥ ११ ॥
प्रविवेश पुरीं दिव्यां दिवसे पूजितो हरिः । स प्रविश्य सभां दिव्यां सुधर्मां लोकपूजिताम् ॥१२॥
आहुकं वसुदेवं च रामं चैवाभ्यवादयत् । प्रणम्य मातरो विश्वाः काञ्चने परमासने ॥ १३ ॥
उपविश्य यथाजोषं पूजितो यदुपुङ्गवैः । रराज रजनीनाथो यथा ग्रहगणैर्दिवि ॥ १४ ॥
हतावशिष्टैर्भूपालैस्तत्पुत्रैश्च महाबलैः । अभिषिक्तैर्यथास्थानं सेव्यमानो दिवानिशम् ॥ १५ ॥
अवतीर्णमहाभारां विश्वां विश्वम्भरो हरिः । धर्मराजं पुरस्कृत्य धर्मेणैवान्वशासत ॥ १६ ॥

राजोवाच

भगवन् यानि चान्यानि मुकुन्दस्य महात्मनः । वीर्याण्यनन्तवीर्यस्य श्रोतुमिच्छामि हे प्रभो ॥१७॥

---

अनेनाध्यायद्वयेन कृपणब्राह्मणकृपातिशयकथनेन हरिभक्तस्य न केवलं पारत्रिकमेव फलमपि तु ऐहिकमप्यतिविस्मयकरं स्यादितीदृशं माहात्म्यं वक्ति । तत्र प्रथमतो भारतयुद्धं समाप्य कृष्णस्य हस्तिनपुरप्रयाणप्रकारं प्रख्यापयति– **भगवानपीति** ॥ १ ॥

शून्यं शवादिना पिहितम्[1] । प्रयातुं गन्तुम् । अष्टादशाक्षौहिणीभ्यः शिष्टानाह– **कृपश्चेति** ॥ २-५ ॥

भगवत्सेवामन्तरेण राज्यानिच्छून् इत्यतो– **यत्नत इति** । युक्त्या प्रतिपाद्येत्यर्थः ॥६,७॥

वेदे ये मङ्गलनिःस्वनाः मङ्गलवचनानि तैः ॥ ८,९ ॥ उपस्थितः अभिगतः । अङ्कुरपूरिता पालिका पात्रविशेषः ॥ १०-१२ ॥ मातरो मातॄः ॥ १३ ॥ यथाजोषं यथासुखम् ॥१४-१८॥

---

१. शून्यं योद्धृविरहितम् -स. । शून्यं शवादिनापि रहिवम् -ग.

को नु श्रुत्वा सकृद् ब्रह्मन्नुत्तमश्लोकसत्कथाम् । विरमेत विशेषज्ञो विषण्णः काममार्गणैः ॥१८॥

सा वागनन्तस्य गुणान् गृणीते करौ च तत्कर्मकरौ मनश्च ।
स्मरेद् वसन्तं स्थिरजङ्गमेषु शृणोति तत्पुण्यकथाः स कर्णः ॥ १९ ॥
शिरस्तु तस्योभयलिङ्गमानमेत् तदेव यत् पश्यति तद्धि चक्षुः ।
अङ्गानि विष्णोरथ तज्जनानां पादोदकं यानि भजन्ति नित्यम् ॥ २० ॥

सूत उवाच

विष्णुरातेन सम्पृष्टो भगवान् बादरायणिः । वासुदेवे भगवति निमग्नहृदयोऽब्रवीत् ॥ २१ ॥

श्रीशुक उवाच

कृष्णस्यासीत् सखा कश्चिद् ब्राह्मणो ब्रह्मवित्तमः । विरक्त इन्द्रियार्थेषु प्रशान्तात्मा जितेन्द्रियः ॥ २२ ॥
यदृच्छयोपपन्नेन वर्तमानो गृहाश्रमी । तस्य भार्या कुचेलस्य क्षुत्क्षामा च तथाविधा ॥ २३ ॥
पतिव्रता पतिं प्राह म्लायता वदनेन सा । दरिद्रं साध्व्यशनयावेपमानाऽभिगम्य च ॥ २४ ॥
ननु ब्रह्मन् भगवतः सखा साक्षाच्छ्रियः पतिः । ब्रह्मण्यश्च शरण्यश्च भगवान् सात्वतर्षभः ॥२५॥
तमुपैहि महाभाग साधूनां च परायणम् । दास्यति द्रविणं भूरि सीदते ते कुटुम्बिने ॥ २६ ॥
आस्तेऽधुना द्वारवत्यां भोजवृष्ण्यन्धकेश्वरः । स्मरतः पादयुगलमात्मानमपि यच्छति ॥ २७ ॥

---

राजा एतदेवेन्द्रियकृत्यमिति वक्ति– **सा वागिति** । याऽनन्तस्य गुणान् गृणीते सैव वाक्, यौ तत्कर्मकरौ तावेव करौ, अनेन करोतीति कर इति कर्तर्यच्प्रत्ययः सफल इति सूचितम् । यत् स्थिरजङ्गमेषु वसन्तं हरिं स्मरेत् तदेव मनः । मन ज्ञान इति धातोः स्मरणलक्षणं ज्ञानम् । यस्तस्य हरेः कथाः शृणोति स कर्णः । कृण आकर्णन इति धातुः ॥ १९ ॥

चराचरभेदेनोभयलिङ्गमुभयप्रतिमामानमेद् यत् तदेव शिरः । श्रयत इति शिरः । श्रिञ् सेवायामिति धातोर्नमनलक्षणसेवायां शिर इति निपात्यते । यदुभयलिङ्गं पश्यति तदेव चक्षुः । चष्टे पश्यतीति चक्षुः । चक्षु(?) दर्शन[1] इति धातुः । तस्य हरेः जनानाम् । यानि विष्णोः पादोदकं नित्यं भजन्ति पानस्नानलक्षणसेवां कुर्वन्ति अथ मङ्गलानि तान्येवाङ्गानि नान्यानि ॥ २०-२२ ॥

तथाविधा भर्तृवन्मलिनवस्त्रा ॥ २३ ॥ म्लायता म्लानं गच्छता । अशनयावेपमानेत्येकं पदम् । अशनयाऽशनेच्छया कम्पमाना ॥ २४,२५॥ सीदते अवसन्नाय दरिद्राय ॥ २६,२७ ॥

---

१. चक्षुर्दर्शन इति धातुः -ग.

किं न्वर्थकामान् भजतो नान्यमिष्टं जगद्गुरुः । स एवं भार्यया विप्रो बहुशः प्रार्थितो विभुः ॥२८॥
अयं हि परमो लाभ उत्तमश्लोकदर्शनम् । इति सञ्चिन्त्य मनसा गमनाय मनो दधे ॥ २९ ॥
अथास्त्युपायनं किञ्चिद् गृहे कल्याणि दीयताम् । याचित्वा चतुरो मुष्टीन् विप्रान् पृथुकतन्दुलान् ।
चैलखण्डेन तान् बद्ध्वा भर्त्रे प्रादादुपायनम् ॥ ३० ॥
स तानादाय विप्राग्र्यः प्रययौ द्वारकां किल । कृष्णसन्दर्शनं मह्यं कथं स्यादिति चिन्तयन् ॥३१॥
त्रीणि गुल्मान्यतीयाय तिस्रः कक्ष्याश्च स द्विजः । विप्रो गम्यान्धवृष्णीनां गेहेष्वच्युतधर्मिणाम् ॥
गृहाणि व्यष्टसाहस्रमहिषीणां हरेर्द्विजः । विवेशैकतमं श्रीमद् ब्रह्मानन्दं गतो यथा ॥ ३३ ॥
तं विलोक्याच्युतो दूरात् प्रियापर्यङ्क आश्रितः । सहसोत्थाय चाभ्येत्य दोर्भ्यां पर्यग्रहीन्मुदा ॥३४॥
सख्युः प्रियस्य विप्रर्षेरङ्गसङ्गातिनिर्वृतः । प्रीतो व्यमुञ्चदब्बिन्दून् नेत्राभ्यां पुष्करेक्षणः ॥ ३५ ॥
अथोपवेश्य पर्यङ्के स्वयं सख्युः समर्हणम् । उपहृत्यावनिज्यास्य पादौ पादावनेजनीः ।
अग्रहीच्छिरसा राजन् भगवाँल्लोकपावनः ॥ ३६ ॥
व्यलिम्पद् दिव्यगन्धेन चन्दनागुरुकुङ्कुमैः । धूपैः सुरभिभिर्मित्रं प्रदीपावलिभिर्मुदा ।
अर्चित्वाऽऽवेद्य ताम्बूलं गां च स्वागतमब्रवीत् ॥ ३७ ॥
कुचेलं मलिनं क्षामं द्विजं धमनिसन्ततम् । देवी पर्यचरच्छैब्या[1] चामरव्यजनेन वै ॥ ३८ ॥
अन्तःपुरजनो दृष्ट्वा कृष्णेनामलकीर्तिना । विस्मितोऽभूत् सविप्राग्र्यमवधूतं सभाजितम् ॥ ३९ ॥
किमनेन कृतं पुण्यमवधूतेन भिक्षुणा । श्रिया हीनेन लोकेऽस्मिन् गर्हितेनाधमेन च ॥ ४० ॥

---

अर्थकामान् यच्छतीति किमु वक्तव्यम्? किञ्च जगद्गुरुः अन्यम् उक्तेभ्योऽन्यमिष्टं न यच्छति? किन्तु भजतः पुरुषस्य यच्छत्येवेत्यर्थः । यद्वा ना परमपुरुषः अन्यमभीष्टमपि यच्छतीत्यतस्तमुपैहीत्यन्वयः ॥ २८-३० ॥ चैलखण्डेन जीर्णवस्त्रखण्डेन ॥ ३१ ॥

गुल्मानि शिबिराणि । कक्ष्याः पुरप्रकोष्ठानि । 'कक्ष्या कच्छे वस्त्रायां काञ्च्यां गेहे प्रकोष्ठके' इति यादवः ॥ ३२ ॥

अन्धवृष्णीनां गृहेषु मध्ये यानि व्यष्टसाहस्रमहिषीणां गृहाणि (तानि) गम्य गत्वा तेष्वेकतमं गृहं विवेशेत्यन्वयः । द्विजत्वं क्षत्रियस्याप्यस्तीति विप्र इति ॥ ३३ ॥

आनन्दं गतो मुक्तो ब्रह्म विशति यथा तथा ॥ ३४ ॥ पर्यग्रहीदाश्लिष्टवान् ॥ ३५ ॥ पादावनेजनीरपः पादप्रक्षालनोदकम् ॥ ३६,३७ ॥ धमनिसन्ततं शिरासहस्राचित-गात्रम् ॥ ३८-४० ॥

---

१. शैब्या मित्रविन्दा

**योऽसौ त्रिलोकगुरुणा श्रीनिवासेन सम्भृतः। पर्यङ्कस्थां श्रियं हित्वा परिष्वक्तोऽग्रजो यथा॥ ४१॥**
**कथयाञ्चक्रतुर्गाथां पूर्वं गुरुकुले सताम्। आत्मनोल्लसितौ राजन् करौ गृह्य परस्परम्॥ ४२॥**
**अपि ब्रह्मन् गुरुकुलाद् भवता लब्धदक्षिणात्। समावृत्तेन धर्मज्ञा भार्योढा सदृशी न वा॥ ४३॥**
**प्रायो गृहेषु ते चित्तमकामविहतं तथा। नैवातिप्रीयते तद्वद् धनेषु विदितं हि मे॥ ४४॥**
**केचित् कुर्वन्ति कर्माणि कामैरहतचेतसः। त्यजन्तः प्रकृतिं दैवीं यथाऽहं लोकसङ्ग्रहः॥ ४५॥**
**कच्चिद् गुरुकुलावासं ब्रह्मन् स्मरसि नौ यतः। द्विजो विज्ञाय विज्ञेयं तमसः पारमश्नुते॥ ४६॥**
**स वै सत्कर्मणां साक्षाद् द्विजातेरिह सम्भवः। आद्यो गुरुर्ह्याश्रमिणां यथाऽहं ज्ञानदो गुरुः॥४७॥**
**ते त्वर्थकोविदा ब्रह्मन् वर्णाश्रमवतामिह। ये मया गुरुणा वाचा तरन्त्यञ्जो भवार्णवम्॥ ४८॥**
**नाहमिज्याप्रजातिभ्यां तपसोपशमेन वा। तुष्येयं सर्वभूतात्मा गुरुशुश्रूषया यथा॥ ४९॥**

---

संभृतः सभाजितः सङ्गृहीतो वा॥ ४१॥ गुरुकुले सतां स्वेषां काले पूर्वस्मिन् या गाथाः प्रवृत्तास्तां कयथाश्चक्रतुः॥ ४२॥

स भवान् सदृशीं भार्यां लब्धा अपि किं न वा? यथा प्राकृतस्य चित्तं गृहेषु कामविहतं भवति तथा प्रायस्ते चित्तं गृहेषु भार्यादिषु अकामविहतं कामनया विषयेच्छया विहतं न स्यात्। तद्वत् तव चित्तं धनेष्वपि नैवाति प्रीयते। कथमेतत्? अत्राह– **विदितमिति**॥ ४३-४४॥

केचिन्निवृत्तिमार्गस्थाः। प्रकृतिं देहाभिमानलक्षणाम्। दैवीं देवाधीनाम्॥ ४५॥

तात्पर्यात् पुनरुक्तं करोति– **कच्चिदिति**। यतो यस्मिन् गुरुकुलवासे विज्ञेयं विज्ञाय तमसोऽज्ञानस्य पारं प्रकृतेर्वा वैकुण्ठमश्नुते॥ ४६॥

इतोऽपि गुरुकुलवासः कर्तव्य इत्याह– **स वा इति**। यस्माद् द्विजातेः सकाशात् साक्षात् सत्कर्मणां संभवो जन्म स गुरुकुलवासो वा इत्यन्वयः। अत्र हेतुमाह– **आद्य इति**। ज्ञानदो गुरुराश्रमिणामाद्यो हि यस्मात् तस्मात्। यथाऽहमिति॥ ४७॥

ज्ञानमपि यथा मुक्तिसाधनं तद्वदेव गुरुरित्याह– **ते त्विति**। गुरुणा गुरुस्थेन मयाप्युक्तया वाचा अञ्जः शिक्षिता ये पुरुषा भवार्णवं तरन्ति ते त्विह वर्णाश्रमवतां मध्ये अर्थकोविदाः स्वप्रयोजनसम्पादनपटव इत्यन्वयः॥ ४८॥

सर्वेषु साधनेष्विदमेव भगवदनुग्रहान्तरङ्गमित्याह– **नेति**। इज्या यजनं प्रजनं प्रजातिः सन्ततिर्जननम्। नापुत्रस्य लोकोस्तीति श्रुतेः॥ ४९॥

**अपि नः स्मर्यतां ब्रह्मन् वृत्तं निवसतां गुरौ । गुरुदारैश्चोदितानामिन्धनायने क्वचित् ।। ५० ।।**
**प्रविष्टानां महारण्यमपर्तौ सुमहद् द्विज । वातवर्षमभूत् तीव्रं निष्ठुराः स्तनयित्नवः ।। ५१ ।।**
**सूर्यश्चास्तं गतस्तावत् तमसा संवृता दिशः । निम्नं कूलं जलौघेन न प्राज्ञायत किञ्चन ।। ५२ ।।**
**वयं भृशं तत्र महानिलाम्बुभिर्निहन्यमाना मुहुरम्बुसम्प्लवे ।**
**दिशोऽविदन्तोऽथ परस्परं वने गृहीतहस्ता परिबभ्रमातुराः ।। ५३ ।।**
**एतद् विदित्वा उदिते रवौ सान्दीपिनिर्गुरुः । अन्वेषमाणो नः शिष्यानार्योऽपश्यन्नरूरुदत् ।।५४।।**
**अहो मे पुत्रका यूयमस्मदर्थेऽतिदुःखिताः । आत्मा हि प्राणिनां प्रेष्ठस्तमनादृत्य मत्पराः ।।५५।।**
**इयदेव हि सच्छिष्यैः कर्तव्यं गुरुनिष्कृतम् । यद् वै विशुद्धभावेन सर्वार्थात्मार्पणं गुरौ ।। ५६ ।।**
**सन्तुष्टोऽहं द्विजश्रेष्ठाः सत्याः सन्तु मनोरथाः । छन्दांस्ययातयामानि भवन्त्विह परत्र च ।।५७।।**
**इत्थंविधान्यनेकानि वसतां गुरुवेश्मसु । गुरोरनुग्रहेणैव पुमान् पूर्णः प्रशान्तये ।। ५८ ।।**

**ब्राह्मण उवाच**

**किमस्माभिरनिर्वृत्तं देवदेव जगद्गुरो । भवता सत्यकामेन येषां वासो गुरावभूत् ।। ५९ ।।**

---

अनुग्रहविशेषस्मरणार्थमुभयोरनुभूतविषयं स्मारयति– **अपीति** । गुरौ निवसतां नो यत् कर्म तत् स्मर्यतामपि स्मर्यते किम्? ।। ५० ।। अपर्तौ वर्षाकालमन्तरेण । वातयुतवर्षम् ।। ५१ ।।

इदं निम्नमिदं कूलमिति किञ्चन स्थूलजलप्रवाहेण न प्राज्ञायत ज्ञातमभूत् ।। ५२ ।।

अम्बुसम्प्लवे जलप्रवाहे दिशोऽविदन्तोऽजानन्तः परिबभ्रम परितो भ्रान्ता बभूविम ।।५३।।

विदित्वा उदित इत्यनेन (विसन्धिना) दुःखातिशयं दर्शयति । कथमेतत्? अत्राह– **अरूरुददिति** ।। ५४ ।। आत्मा देहः ।। ५५ ।।

गुरुनिष्कृतं गुरुप्रत्युपकारः । सर्वोऽर्थो यस्मात् स तथा सर्वार्थ आत्मा शरीरं तस्यार्पणं यत् तत् ।। ५६,५७ ।।

उक्तमतिदिशति– **इत्थमिति** । इत्थंविधान्यनेकानि, व्यसनानि आसन्निति शेषः । तानि व्यसनानि गुरोरनुग्रहेण निस्तीर्य पुमान् प्रशान्तये प्रकृष्टसुखवृत्तये पूर्णः कृतार्थः स्यात् ।। ५८ ।।

अस्माभिर्गुरुकुलवासे इदं कृतमिति विशिष्य किं वक्तव्यं सर्वमप्यनुष्ठितमिति ब्राह्मण आह– **किमिति** । सत्यकामेन भवता सह येषां नो गुरुकुलवासोऽभूत् तैरस्माभिः गुरुकुलवासे किमनिर्वृत्तं न कृतं किम्? सर्वं मया चीर्णमेव ।। ५९ ।।

यस्य छन्दोमयं ब्रह्म देह आवपनं विभो । योऽयं स तस्य गुरुषु वासोऽत्यन्तविडम्बनम् ॥ ६० ॥

॥ इति अष्टानवतितमोऽध्यायः ॥

## ॥ अथ एकोनशततमोऽध्यायः ॥

श्रीशुक उवाच

स इत्थं द्विजवर्येण सह सङ्कथयन् हरिः । सर्वभूतमनोभिज्ञः स्मयमान उवाच तम् ॥ १ ॥

ब्रह्मण्यो ब्राह्मणं कृष्णो भगवान् प्रहसन्निव । प्रेम्णा निरीक्षणेनैव प्रेक्षन् खलु सतां पतिः ॥ २ ॥

श्रीभगवानुवाच

किमुपायनमानीतं ब्रह्मन् मे भवता गृहात् । अल्पमप्याहृतं भक्तैः प्रेम्णा भूर्येव मे भवेत् ॥ ३ ॥

भूर्यप्यभक्तोपहृतं न मे तोषाय कल्पते । पत्रं पुष्पं फलं तोयं यो मे भक्त्या प्रयच्छति ।

तदहं भक्त्युपहृतमश्नामि प्रयतात्मनः ॥ ४ ॥

इत्युक्तोऽपि द्विजस्तस्मै व्रीडितः पतये श्रियः । पृथुकप्रसृतिं राजन्न प्रायच्छदवाङ्मुखः ॥ ५ ॥

सर्वभूतात्मदृक् साक्षात् तस्यागमनकारणम् । विज्ञाय चिन्तयन् नायं श्रीकामो माऽभजत् पुरा ॥६॥

---

किन्त्विदमस्मकं युक्तं तव त्वत्यन्तविडम्बकमित्याह– **यस्येति** । छन्दोमयं वेदमुख्यप्रतिपाद्यम् आवपनं जगदुत्पत्तिक्षेत्रं ब्रह्म यस्य तव देहः स्वरूपं तस्य तव योऽयं गुरुषु वासः सोऽयमत्यन्तविडम्बनमनुकार इति[1] ॥ ६० ॥

॥ इति श्रीमद्भागवतटीकायां विजयध्वजतीर्थकृतायां पदरत्नावल्यां दशमस्कन्धे उत्तरार्धे अष्टानवतितमोऽध्यायः ॥

सङ्कथयन् सल्लापं कुर्वन् ॥ १,२ ॥

दरिद्रत्वेन भूरिद्रव्याभावाद् भवतो महतोऽल्पं मनस्तुष्टिकरं न स्यादिति नानीतमिति शङ्का माभूदित्याह– **अल्पमिति** । आहृतमानीतम् । द्रव्यभूरित्वाभूरित्वे अप्रयोजके किन्तु भक्तिरेवेत्यनेनादर्शि ॥ ३-५ ॥

---

१. छन्दोमयं गायत्र्युष्णिगादिछन्दःप्रचुरं ब्रह्म वेदो यस्य देहः । 'तस्य यजुरेव शिरः । ऋग्दक्षिणः पक्षः' इत्यादिश्रुतेः । किञ्च यस्य देह आवपनं जगदुत्पत्त्रिक्षेत्रं तस्य भवतो योऽयं गुरुषु वासः सोऽत्यन्तविडम्बनम् -स.

**पत्न्याः पतिव्रतायास्तु सखा प्रियचिकीर्षया। प्राप्तो मामस्य दास्यामि सम्पदो मर्त्यदुर्लभाः ॥७॥**
**इत्थं विचिन्त्य वसनाच्चीरबद्धं द्विजन्मनः। स्वयं जहार किमिदमिति पृथुकतण्डुलान् ॥ ८ ॥**
**एकमुष्टिं सकृज्जग्ध्वा द्वितीयां जग्धुमाददे। तावच्छ्रीर्जगृहे हस्तं सत्वरा परमेष्ठिनः[1] ॥ ९ ॥**
**एतावताऽलं सर्वात्मन् सर्वसम्पत्समृद्धये। अस्मिन् लोके तथाऽमुष्मिन् पुंसस्त्वत्तोषकारणम् ॥१०॥**
**ब्राह्मणस्तां तु रजनीमुषित्वाऽच्युतमन्दिरे। भुक्त्वा पीत्वा सुखं सुप्त्वा मेन आत्मानमिन्द्रवत् ॥११॥**
**श्वोभूते विश्वभावेन स्वसखेनाभिवन्दितः। जगाम स्वालयं तात पथ्यनुव्रज्य नन्दितः ॥ १२ ॥**
**स चालब्ध्वा धनं सख्युर्न च याचितवान् स्वयम्। स्वगृहं व्रीडितोऽगच्छन्महद्दर्शननिर्वृतः ॥१३॥**
**अहो ब्रह्मण्यदेवस्य दृष्टा ब्रह्मण्यता मया। यद् दरिद्रतमो लक्ष्मीमाश्लिष्टो बिभ्रतोरसि ॥ १४ ॥**

---

सर्वभूतानामात्मदृक् स्वभावज्ञः 'आत्मा देहे भृतौ जीवे स्वभावे परमात्मनि' इति यादवः ॥ ६,७ ॥

चीरं पटच्चरं जीर्णवस्त्रमित्यर्थः। इदं चीरबद्धं किमित्युक्त्वा द्विजन्मनः पृथुकतण्डुलान् स्वयमाजहार ॥ ८-११ ॥ अनुव्रज्य अनुगम्य नन्दितः, कृष्णेनेति शेषः ॥ १२ ॥ महतः कृष्णस्य दर्शनेन निर्वृतः ॥ १३,१४ ॥

---

१. अत्र पतिव्रतायाः स्वभर्तृप्रियभोजनेऽत्यनुमोदनं कार्यं न तु प्रतिबन्धः, तत् कथं द्वितीयमुष्टिभक्षणे हस्तग्रहणेन प्रतिबन्धो रुक्मिण्या आचरितः? अत्रोच्यते। 'भगवन् श्रीपतेर्न्यस्तं नैवेद्यं त्वत्पुरो मया। कपिलात्मक दिव्येन चक्षुषा त्ववलोकय। कृत्वा पवित्रं पूर्णं च तत्तत्स्वादुरसैर्युतम्। नृसिंहात्मकरूपेण दिव्यघ्राणेन्द्रियेण तु। तद्वस्तुनिष्ठगन्धं च दिव्यमाघ्राय चिन्मय। भृगुरामस्वरूपेण दिव्यवागिन्द्रियेण तु। सान्त्वय श्लक्ष्णया वाचा भक्तं मामनुकम्पय। महाकूर्मस्वरूपेण दिव्यजिह्वेन्द्रियेण तु। आस्वादय स्वादुरसं भुङ्क्ष्व देव रमापते। इति नैवेद्यशेषान्नमध्ये भगवता घ्राणेन्द्रियाघ्रातं भागं रमाया नैवेद्यार्थमुपन्यस्येति पञ्चरात्रागमकल्पलतोक्त्योः सत्वेनात्रेदं तात्पर्यम्– अप्राकृतभागस्य भगवद्भक्ष्यत्वाल्लक्ष्मीयोग्यस्य च भगवदाघ्रेयत्वात् प्राकृतस्य च भगवद्दृश्यत्वात्। तन्मध्ये एकमुष्टिव्याजेन स्वयोग्येऽप्राकृते भागे कृष्णेन भक्षिते द्वितीये रमायोग्ये भागे मन्दमोहार्थं भक्षणमिव कुर्वता कृष्णेनावघ्रातुं घ्राणसमीपे नीते सति स्वभागं मन्वानया रुक्मिण्या जाम्बवत्यादीनां तद्भागानर्हत्वं द्योतयितुं मन्दमोहार्थं प्रतिबन्धकवत् हस्तग्रहणरूपा प्रवृत्तिः कृता। अवघ्रातद्वितीयमुष्टेरेव स्वभागत्वात्। भगवद्दृश्यभागरूपतृतीयमुष्टावन्यासां जाम्बवत्यादीनामर्हत्वात्। तादृशचतुर्थ्या अपि आनेतृविप्रस्त्रियादिभ्यः प्रसादार्थं दानयोग्यत्वात्। चतसृणां मुष्टीनामित्थं विनियोगे यथायोग्यं स्थिते द्वितीयमुष्टे रमाकृतप्रतिबन्धाभावसिद्धेर्न दोषलेशोऽपि इति विरोधोद्धारकृतः श्रीनिवासाचार्याः।

काहं दरिद्रः पापीयान् क्व कृष्णः श्रीनिकेतनः । ब्रह्मबन्धुरिति स्माहं बाहुभ्यां परिरम्भितः ॥१५॥
निवासितः प्रियाजुष्टे पर्यङ्के भ्रातरो यथा । महिष्या वीजितः शान्तो बालव्यजनहस्तया ॥ १६ ॥
शुश्रूषया परमया पादसंवहनादिभिः । पूजितो देवदेवेन विप्रदेवेन देववत् ॥ १७ ॥
स्वर्गापवर्गयोः पुंसां रसायां दिवि सम्पदाम् । सर्वासामपि सिद्धीनां मूलं तच्चरणार्चनम् ॥ १८ ॥
अधनो यद् धनं प्राप्य माद्यन्नुच्चैर्न मां स्मरेत् । इति कारुणिको नूनं धनं मे भूरि नाददात् ॥१९॥
इति तच्चित्तगत्याऽन्तः प्राप्तो निजगृहान्तिकम् । सूर्यानलेन्दुसङ्काशैर्विमानैः सर्वतो वृतम् ॥२०॥
विचित्रोपवनोद्यानैः कूजद् द्विजकुलाकुलैः । प्रोत्फुल्लकुमुदाम्भोजकल्हारोत्पलवारिभिः ॥ २१ ॥
जुष्टं स्वलङ्कृतैः पुम्भिः स्त्रीभिश्च हरिणाक्षिभिः । किमिदं कस्य च स्थानं कथं तदिदमित्यभूत् ॥२२॥
एवं मीमांसमानं तं नरा नार्योऽमरप्रभाः । प्रत्यगृह्णन् महाभागं गीतवाद्येन भूयसा ॥ २३ ॥
पतिमागतमाकर्ण्य पत्न्युद्धर्षाच्च सम्भ्रमात् । निश्चक्राम गृहात् तूर्णं रूपिणी श्रीरिवालयात् ॥२४॥
पतिव्रता पतिं दृष्ट्वा प्रेमोत्कण्ठाऽश्रुलोचना । मीलिताक्ष्यनमद् बुद्ध्या मनसा परिषस्वजे ॥ २५ ॥
पत्नीं वीक्ष्य प्रस्फुरतीं देवीं वैमानिकीमिव । दासीनां निष्ककण्ठीनां मध्ये भान्तीं सुविस्मितः ॥२६॥
प्रीतां स्वयं तया युक्तः प्रविष्टो निजमन्दिरम् । मणिस्तम्भशतोपेतं महेन्द्रभवनं यथा ॥ २७ ॥
पयःफेननिभाः शय्या दान्ता रुक्मपरिच्छदाः । पर्यङ्का हेमदण्डानि चामरव्यजनानि च ॥ २८ ॥
आसनानि च हैमानि स्रग्वस्त्राभरणानि च । मुक्तादामविलम्बीनि वितानानि द्युमन्ति च ॥२९॥
स्वच्छस्फटिककुड्येषु महामरकतेषु च । रत्नदीपान् भ्राजमानान् ललनारत्नसंयुतान् ॥ ३० ॥
विलोक्य ब्राह्मणस्तत्र समृद्धिं सर्वसम्पदाम् । तर्कयामास निर्व्यग्रः स्वसमृद्धिमहैतुकीम् ॥ ३१ ॥

---

अहं ब्राह्मणानां विप्राणां बन्धुरिति स्मृत्वा ॥ १५ ॥

भ्रातरो यथा, भ्रातरमिति शेषः ॥ १६,१७ ॥ दिवि आकाशे ॥ १८ ॥ माद्यन् मदं गच्छन् ॥ १९ ।

अन्तः हृदये, इति तस्मिन् कृष्णे स्थितचित्तगत्या स्वगृहान्तिकं प्राप्तः ॥ २०,२१ ॥ स्वमन्दिरं दृष्ट्वा इदं किं कस्य चेदं स्थानम्? इदं तदिति तद् द्वारकाविधं कथमभूत् ॥ २२ ॥

एवं मीमांसमानं जिज्ञासमानं तं नरादयः प्रत्यगृह्णन् अभ्याययुरित्यन्वयः ॥ २३-२६ ॥

स निजमन्दिरं प्रविष्टोऽभूत् ॥ २७ ॥ द्युमन्ति द्युतिमन्ति ॥ २८-३० ॥ निर्व्यग्रः निःसम्भ्रमः ॥ ३१ ॥

नूनं ममैतन्मम दुर्भगस्य शश्वद् दरिद्रस्य समृद्धिहेतुः ।
महाविभूतेरवलोकतोऽन्यन्नैबोपपद्येत यदूत्तमस्य ।। ३२ ।।
नन्वब्रुवाणो दिशते शमक्षं याचिष्णवे भूर्यपि भूरितेजाः ।
पर्जन्यवन्नः स्वयमीक्षमाणो दाशार्हकाणामृषभः सखा मे ।। ३३ ।।
किञ्चित्करोत्युर्वपि यत् स्वदत्तं[१] सुहृत्कृतं फल्ग्वपि भूरिकारि ।
मयोपनीतं पृथुकैकमुष्टिं प्रत्यग्रहीत् प्रीतियुतो महात्मा ।। ३४ ।।
तस्यैव मे सौहृदसख्यमैत्रीदास्यं पुनर्जन्मनि जन्मनि स्यात् ।
महानुभावेन गुणालयेन विषज्जतस्तत्पुरुषप्रसङ्गः ।। ३५ ।।
भक्ताय चित्रा भगवान् हि सम्पदो राज्यं विभूतीर्न समर्पयत्यजः ।
अदीर्घबोधाय विचक्षणः स्वयं पश्यन् निपातं धनिनां मदोद्भवम् ।। ३६ ।।

इत्थं व्यवसितो बुद्धया भक्त्याऽतीव जनार्दने । विषयान् जायया त्यक्त्वा बुभुजे नातिलम्पटः ।।३७।।

---

ममैतदेव समृद्धिहेतुः । महाविभूतेर्यदूत्तमस्याबलोकतोऽन्यन्निमित्तं नैवोपपद्यते, स एव हेतुरित्यर्थः ।। ३२ ।।

यः स्वयमब्रुवाणस्तूष्णीकः पर्जन्यवन्नः अक्षयं शं दिशते ददाति । भूरितेजा अनल्पप्रभावो भवति । स एतादृशमहिमा दाशार्हकाणामृषभः मे सखा नन्वनुमतम्, लोकेनेति शेषः ।। ३३ ।।

भक्तदत्तमेव हरेस्तृप्तिजनकत्वेनानन्तफलत्वेन परिणमति नाभक्तदत्तमित्याह– **किञ्चिदिति** । यत् सुष्ठु भक्तिपूर्वकमदत्तं तदुर्वपि किञ्चित् करोति, फलत इति शेषः । 'त्रैविद्या मां सोमपाः पूतपापा यज्ञैरिष्ट्वा स्वर्गतिं प्रार्थयन्ते' इत्यादेः । सुहृत्कृतं पूजनं फल्ग्वपि अल्पमपि भूरिकारि । एतत् कुतो दृष्टम्? अत्राह– **मयेति** । हेतुगर्भविशेषणमेतत् ।। ३४ ।।

यतोऽत्र भक्तिरेव प्रधानकारणमतः सैव सम्पाद्येति भावेनाह– **तस्यैवेति** । योऽहमनादिकालमारभ्य तच्चरणैकशरणः तस्यैव मे सौहृदादि स्यादित्यन्वयः । न केवलस्य हरेः भक्तिलक्षणसङ्गेन पूर्यते, अपि तु तद्भक्तसङ्गोऽपि स्यादिति प्रार्थयते– **महानुभावेनेति** । भगवता सह विषज्जतो विशेषेण सङ्गं कुर्वतो मे तत्पुरुषप्रसङ्गः तस्य हरेः पुरुषेषु ब्रह्मादिष्वपि प्रकृष्टसङ्गश्च स्यादित्यन्वयः ।। ३५ ।।

हरिरैहिकमैश्वर्यं न ददातीति मन्दजनानुमितस्वदोषापमार्जनायेयं सम्पादितेति भावेनाह– **भक्तायेति** ।। ३६ ।। त्यक्त्वा, अहम्ममतामिति शेषः ।। ३७ ।।

---

१. सु अदत्तम् इति पदविभागः ।

तस्य वै देवदेवस्य हरेर्यज्ञपतेः प्रभोः। ब्राह्मणाः प्रभवो दैवं न तेभ्यो विद्यते परम् ॥ ३८ ॥
एवं स विप्रो भगवत्सुहृत् तदा दृष्ट्वा स्वभक्तैरजितं पराजितम्।
तद्ध्यानवेगोद्ग्रथितात्मबन्धनस्तद्धाम लेभेऽचिरतः सतां पतेः ॥ ३९ ॥
एवं ब्रह्मण्यदेवस्य श्रुत्वा ब्रह्मण्यतां नरः। लब्धभावो भगवति कर्मबन्धात् प्रमुच्यते ॥ ४० ॥

॥ इति एकोनशततमोऽध्यायः ॥

## ॥ अथ शततमोऽध्यायः ॥

श्रीशुक उवाच

कदाचिद् वाजिमेधेन यष्टुमुद्यम्य केशवः। महीं प्रदक्षिणीकर्तुं प्राहिणोत् प्रोक्षितं हयम् ॥ १ ॥
हार्दिक्यं कृतवर्माणं युयुधानं च सात्यकिम्। चारुदेष्णं सुदेष्णं च प्रद्युम्नं साम्बमेव च ॥ २ ॥
अंशुमन्तं सुभानुं च बहुसैन्यांश्च यादवान्। रक्षणार्थं तुरङ्गस्य प्राहिणोद् यदुनन्दनः ॥ ३ ॥
ते वै प्रदक्षिणं कृत्वा वसुधां प्रोक्षितं हयम्। उपनित्युरदीर्घेण कालेन भरतर्षभ ॥ ४ ॥
यष्टुकामं हरिं श्रुत्वा हयमेधेन भारत। आजग्मुर्दीर्घतपसो मुनयः शंसितव्रताः ॥ ५ ॥

---

देवदेवस्येत्यनेन सर्वप्रभुत्वं यज्ञपतेरित्यनेन सर्वदेवत्वं च हरेरेव मुख्यमिति सूचितम्। अनेनेतरैर्ब्राह्मणभक्तिरेवावश्यं कर्तव्येति तात्पर्यं विधीयते न तु तस्येति ॥ ३८ ॥

तस्य विप्रस्य का सिद्धिरभूत्? तत्राह– **एवमिति**। अजितं नाम भगवन्तं स्वभक्तैः पराजितं दृष्ट्वा तस्य हरेर्ध्यानवेगेन उद्ग्रथितमुन्मुक्तमात्मबन्धनं यस्य स तथा तद्भक्तैरेव प्राप्यं तद्धाम वैकुण्ठादिलक्षणम् ॥ ३९ ॥

एतच्चरितोपासकस्य फलमाह– **एवमिति**। लब्धभावो लब्धभक्तिः। अनेनास्य भक्तस्येतरभक्तवैलक्षण्यमुक्तं स्यादिति तात्पर्यमवगन्तव्यम् ॥ ४० ॥

॥ इति श्रीमद्भागवतटीकायां विजयध्वजतीर्थकृतायां पदरत्नावल्यां दशमस्कन्धे उत्तरार्धे एकोनशततमोऽध्यायः ॥

लोकसङ्ग्रहायाश्वमेधयज्ञकरणमन्यासाध्यमृतपुत्रानयनमाहात्म्यं च निरूपयत्यस्मिन्नध्याये। तत्रादौ हयस्य प्रदक्षिणाप्रकारं वक्ति– **कदाचिदिति**। उद्यमं उद्योगं विधाय ॥ १,२ ॥ बहवः सैन्याः सेनानायका येषां ते तथा तान्। यदून् नन्दयतीति यदुनन्दनः ॥ ३,४ ॥

**होतारं च तथाऽध्वर्युमुद्गातारं च केशवः । कल्पयित्वा यथान्यायं तथाऽन्यानपि ऋत्विजः ॥ ६ ॥**
**ऋषिभिर्ब्राह्मणश्रेष्ठैर्यज्ञविद्याविचक्षणैः । दीक्षां प्रपेदे भगवान् कृतपुण्याहमङ्गलः ॥ ७ ॥**
**तमुपास्तुं महीपाला नानाजनपदेश्वराः । आजग्मुर्देवसङ्काशाः किरीटमुकुटोज्ज्वलाः ॥ ८ ॥**
**पाण्डवाश्च महीपाला यज्ञदर्शनमिच्छवः । आहूता वासुदेवेन द्वारकामाययुर्नृप ॥ ९ ॥**
**तस्मिंस्तथा वर्तमाने हयमेधे महोत्सवे । आसंस्तृप्ता द्विजा भोज्यवस्त्रगोभूमिकाञ्चनैः ॥ १० ॥**
**दीक्षां प्रविश्य गोविन्दः कामैस्तर्पयति द्विजान् । भुञ्जानेषु द्विजाग्र्येषु प्रत्यगृह्णत् सुवाञ्छितम् ॥११॥**
**आसीनेषु यथायोगं भूपालेषु समन्ततः । वदत्सु मा शब्द इति वेत्रझर्झरपाणिषु ॥ १२ ॥**
**तृणमूलघरः कश्चिद् ब्राह्मणोऽभ्येत्य सत्वरः । चुक्रोश आर्त उद्बाहुर्यज्ञवाटमुखे स्थितः ॥ १३ ॥**
**क्षुत्क्षामकण्ठः शुष्कास्यो गलद्बाष्पाकुलेक्षणः । इदं चोवाच विलपन्नातुरो दीनमानसः ॥ १४ ॥**
**ब्रह्मद्विषः षठधियो लुब्धस्य विषयात्मनः । क्षत्रबन्धोः कर्मदोषात् पञ्चत्वं मे गताः सुताः ॥१५॥**
**हिंसाविहारं नृपतिं दुःशीलमजितेन्द्रियम् । प्रजा भजन्त्यः सीदन्ति दरिद्रा नित्यदुःखिताः ॥१६॥**
**एवं द्वितीयं विप्रर्षिस्तृतीयं त्वेवमेव च । इत्युक्त्वा स पुनश्चैव चुक्रोश भृशदुःखितः ॥ १७ ॥**
**तदाकर्ण्यार्जुनो मानी समुत्थाय वरासनात् । अपृच्छत् स्वयमासाद्य ब्राह्मणं केशवान्तिकात् ॥१८॥**
**किमासन्नर्भका ब्रह्मन् तव केनासि दुःखितः । ब्रूहि तत्वमशेषेण त्वामद्य सुखयाम्यहम् ॥ १९ ॥**
**इत्युक्तो ब्राह्मणः प्राह जातो जातोऽर्भको मम । नीयते तात केनापि तत्क्षणे सूतिकागृहात् ॥२०॥**
**तदाकर्ण्यार्जुनः प्राह स्मयमान इव द्विजम् । किं ब्राह्मण त्वन्निवासे इह नास्ति धनुर्धरः ॥ २१ ॥**
**राजन्यबन्धोरेते वै ब्राह्मणाः सत्रमासते ॥ २२ ॥**
**धनदारात्मजैर्भृत्या यत्र शोचन्ति ब्राह्मणाः । ते वै राजन्यवेषेण नटा जीवन्त्यसुम्भराः ॥ २३ ॥**

---

हयमेधेनाश्वमेधेन । दीर्घकालं तपो येषां ते तथा ॥ ५-७ ॥ उपास्तुं निषेवितुम् । किरीटैर्मुकुटैः सुवर्णैश्चोज्ज्वलाः ॥ ८-११ ॥ वेत्रेण झर्झराः कर्कशाः पाणयो येषां ते तथा तेषु ॥ १२ ॥ तृणमूलधरः तृणानां मूलं चूडां धारयतीति, तृणमूलं यष्टिं च धारयतीति वा ॥ १३-१५ ॥ हिंसाविहारादिकर्मयुक्तं नृपतिं भजन्त्यः सीदन्ति ॥ १६ ॥ द्वितीयं द्विवारं तृतीयं त्रिवारं पुनः चतुर्वारम् ॥ १७-१९ ॥ केनापि पुंसा नीयते ॥ २० ॥ किमाहेत्यत्राह– **किं ब्राह्मणेति** । इह त्वन्निवासे धनुर्धरो नास्ति किमित्यब्रवीत् ॥ २१ ॥

धनुर्धरेण किं कार्यम्? अत्राह– **राजन्यबन्धोरिति** । एते ब्राह्मणा राजन्यबन्धोर्हेतोः सत्रमासते ॥ २२ ॥

अहं प्रजा वां रक्षिष्ये भगवन् दीनयोरिह । अनिस्तीर्णप्रतिज्ञोऽग्निं प्रवेक्ष्येऽहतकल्मषः ॥ २४ ॥

ब्राह्मण उवाच

सङ्कर्षणो वासुदेवः प्रद्युम्नो धन्विनां वरः । अनिरुद्धोऽप्रतिरथो न त्रातुं शक्नुवन्ति यत् ॥ २५ ॥

तत् कथं नु भवान् कर्म दुष्करं जगदीश्वरैः । चिकीर्षतीह बालिश्यात् तन्न श्रद्दध्महे वयम् ॥२६॥

अर्जुन उवाच

नाहं सङ्कर्षणो ब्रह्मन् न कृष्णः कार्ष्णिरेव च । अहं धनञ्जयो नाम गाण्डीवं पश्य कार्मुकम् ॥२७॥

मावमंस्था मम ब्रह्मन् वीर्यं त्र्यम्बकतोषणम् । मृत्युं विजित्य प्रधनेऽप्यानयिष्ये तव प्रजाः ॥२८॥

इति विस्रम्भयित्वा तं कृष्णमाहार्जुनो नृप । अनुज्ञां देहि भगवन् ब्राह्मणार्थे प्रयास्यतः ॥

यजतां वाजिमेधेन भवानेभिर्महात्मभिः ॥ २९ ॥

इति ब्रुवन्तं बीभत्सुमनुज्ञां प्रेप्सुमच्युतः । बद्धतूणं सगाण्डीवं स्मयमानोऽब्रवीद् वचः ॥ ३० ॥

---

राजापि स एव श्रेयानितरो दुःखहेतुरित्याह– **धनदारेति** । यत्र यस्मिन् देशे राजन्यवेषेणासुम्भरा नटा जीवन्ति तस्मिन् देशे स्थितास्ते भृत्या राज्ञा भरणीया ब्राह्मणा धनदारात्मजैः शोचन्ति । यद्वा यत्र येषु राजसु सत्सु ब्राह्मणा धनादिभिः सह शोचन्ति ते राजन्यवेषेण नटा एव जीवन्ति नतु सद्वंश्याः । कुतः? असुम्भराः स्वप्राणपोषणपरायणा वै यस्मात् तस्मात् । दीनयोर्युवयोः । अहतकल्मषः मिथ्याप्रतिज्ञत्वात् ॥ २३,२४ ॥

तत्रार्जुनस्याहङ्काराविष्करणाय ब्राह्मणो वक्ति– **सङ्कर्षण इति** । सङ्कर्षणादयस्त्रातुं न शक्नुवन्ति यद् यस्माज्जगदीश्वरैर्दुष्करं कर्म कथं चिकीर्षति? 'बालिशो बालमूर्खयोः' इति वचनाद् बालिश्याद् आत्मशक्त्यनभिज्ञानात् इह कर्मणि तव वाक्यं न श्रद्दध्महे ॥ २५,२६ ॥

अत्रार्जुनः स्वगर्वमुद्गलयति (इत्याह)– **अर्जुन इति** । धनञ्जयो रणेरण इति श्रुतिप्रसिद्धेरहं धनञ्जयो नाम प्रख्यातः । धनुष्मत्ता चेदृशीत्याह– **गाण्डीवमिति** ॥ २७ ॥

मावमंस्था अवमानं न कुरु । मृत्युं यमम् ॥ २८ ॥ ततः किं फलितम्? अत्राह– **इतीति** ॥ २९ ॥

तत्र कृष्णोऽहङ्कारिणो देवप्रसादो न स्यादिति भाववानर्जुनं निवारयन्निव वक्ति (इत्याह)– **इतीति** । बद्धतूणं पृष्ठबद्धतूणीरम् ॥ ३० ॥

श्रीभगवानुवाच

अहमेव गमिष्यामि न त्वया शक्यतेऽर्जुन । तमसाधारणं भूतं मन्ये येन हतोऽर्भकः ॥ ३१ ॥

अर्जुन उवाच

सलोकपालो देवेन्द्रः खाण्डवे विजितो मया । किरातरूपी युद्धेन तोषितश्च त्रियम्बकः ॥ ३२ ॥
निवातकवचाश्चैव वासवेनापि दुर्जयाः । मयैव निहताः सङ्ख्ये हिरण्यपुरवासिनः ॥ ३३ ॥
तेभ्योऽधिकतरं भूतं किं नु दानवसूदन । विभीषयसि मां कस्मादनुज्ञां देहि साम्प्रतम् ॥ ३४ ॥

श्रीशुक उवाच

इत्युक्तः प्रददौ कृष्णस्त्वनुज्ञां सव्यसाचिने । निर्ययौ यज्ञशलायाः स गृहीतशरासनः ॥ ३५ ॥
रथमास्थाय विपुलं समुच्छ्रितकपिध्वजम् । अग्रे ब्राह्मणमारोप्य तद्ग्राममभितो ययौ ॥ ३६ ॥
तत्र गत्वा प्रविष्टायां तत्पत्न्यां सूतिकागृहम् । ब्राह्मणं प्राह बीभत्सुरवरोप्य रथान्नृप ॥ ३७ ॥

अर्जुन उवाच

याहि स्वभवनं ब्रह्मन्नभयं तव सर्वतः । दत्तं मयाऽद्य तद् भीतां पत्नीमाश्वासयाशु ते ॥ ३८ ॥
इति विस्रम्भितो विप्रः फल्गुनेन परन्तप । जगाम स्वगृहे प्रीत्या पार्थवीर्यं निशम्य तत् ॥ ३९ ॥
प्रसूतिकाल आसन्ने भार्याया द्विजसत्तमः । प्रोवाच द्रुतमभ्येत्य पार्थं शस्त्रभृतां वरम् ॥ ४० ॥

ब्राह्मण उवाच

एहि पार्थ महाबाहो यत्तो भव युधां वर । अत्र पूर्वकृतानां हि पौरुषाणां निदर्शनम् ॥ ४१ ॥

श्रीशुक उवाच

इत्युक्तो रथमारुह्य सज्यं कृत्वा तु गाण्डिवम् । त्वरन् जगाम बीभत्सुः सूतिकाभवनान्तिकम् ॥४२॥
ब्राह्मणोऽपि प्रविश्याह मुहूर्ते सूतिकागृहे । गते तु पाहिपाहीति मृत्योरर्जुनमातुरः ॥ ४३ ॥
स उपस्पृश्य शुच्यम्भो नमस्कृत्य महेश्वरम् । दिव्यास्त्राणि च संस्मृत्य सज्यं गाण्डीवमाददे ॥४४॥
न्यरुणत् सूतिकागारं शरैर्नानास्त्रयोजितैः । तिर्यगूर्ध्वमधः पार्थश्चकार शरपञ्जरम् ॥ ४५ ॥
ततः कुमारः सञ्जातो विप्रपत्न्या रुदन् मुहुः । सद्योऽदर्शनमापेदे सशरीरो विहायसा ॥ ४६ ॥

---

अल्पकार्यहेतोस्त्वद्गमनं किमर्थमित्यत्राह– **तमसाधारणमिति** । भूतं देवयोनिम् ॥ ३१ ॥

अर्जुनः स्वगर्वमुद्गलयति– **सलोकपाल इति** ॥ ३२,३३ ॥ भूतं देवयोनिम् ॥ ३४,३५ ॥

अभित उद्दिश्य ॥ ३६-४० ॥ युधां वर युध्यंतीति युधो योधास्तेषां पर । पौरुषाणां पुरुषपराक्रमाणां निदर्शनं दृष्टान्तः ॥ ४१-४४ ॥ सूतिकागारं सूतिकागृहं शरैर्न्यरुणत् आवृतवान् ॥ ४५-४६ ॥

**तदाऽऽह विप्रो विजयं विनिन्दन् कृष्णसन्निधौ । मौढ्याद् यस्य तवाहं वै श्रद्दधे क्लीबकत्थनम् ॥४७॥**
**न प्रद्युम्नोऽनिरुद्धो वा न रामो न च केशवः । यस्य शेकुः परित्रातुं कोऽन्यस्तदधिकेश्वरः ॥४८॥**
**धिगर्जुनं वृथावाचं धिगत्मश्लाघिनो धनुः । दैवोपसृष्टयोमौढ्यादानिनीषति दुर्मतिः ॥ ४९ ॥**
**एवं शपति विप्रर्षौ विद्यामास्थाय फाल्गुनः । ययौ संयमनीमाशु यत्रास्ते भगवान् यमः ॥ ५० ॥**
**विप्रापत्यमचक्षाणस्तत ऐन्द्रीमगात् पुरम् । आग्नेयीं नैर्ऋतीं सौम्यां वायव्यां वारुणीमथ ॥ ५१ ॥**
**रसातलं नाम पुरं धिष्ण्यान्यन्यान्युदायुधः । ततोऽलब्धद्विजसुतो ह्यनिस्तीर्णप्रतिश्रुतः ॥ ५२ ॥**
**अग्निं विविक्षुः कृष्णेन प्रत्युक्तः प्रतिषेधता । दर्शये द्विजसूनूंस्ते मा वध्यात्मानमात्मना ॥**
**एतेन कीर्तिं विमलां मानुष्यं स्थापयिष्यसि ॥ ५३ ॥**
**इति सम्भाष्य भगवानर्जुनं स महेश्वरः । सहैव रथमास्थाय प्राचीं दिशमवीविशत् ॥ ५४ ॥**
**सप्त द्वीपान् सप्त सिन्धून् सप्तसप्त गिरीनथ । लोकालोकं तथातीत्य विवेश सुमहत् तमः ॥ ५५ ॥**
**तत्राश्वाः शैब्यसुग्रीवमेघपुष्पबलाहकाः । तमसा भ्रष्टगतयो बभूवुर्भरतर्षभ ॥ ५६ ॥**
**तान् दृष्ट्वा भगवान् कृष्णो महायोगेश्वरेश्वरः । सहस्रादित्यसङ्काशं स्वचक्रं प्राहिणोत् पुरः ॥५७॥**
**तमः सुघोरं गगनच्छदं महद् विदारयद् भूरितरेण रोचिषा ।**
**मनोजवं निर्विविशे सुदर्शनं गुणच्युतो रामशरो यथा चमूः ॥ ५८ ॥**

---

तदनन्तरं किमभूदित्यत्राह– **तदेति** । अथार्जुनं विनिन्दति– **तवेति** ॥ ४७ ॥

यस्य ममार्भकं परित्रातुं न शेकुः सोऽहं कृष्णस्य सन्निधौ यस्य तव विकत्थनं श्रद्दधे वै तं त्वां धिक् । आत्मश्लाघिनः स्वस्य तव धनुश्च धिक् । तदधिकेश्वरः तेभ्यः प्रद्युम्नादिभ्योऽधिकेश्वरश्च कः ॥ ४८ ॥

किमित्येवं निन्दसीति तत्राह– **दैवेति** । दैवेनोपसृष्टयोरुपद्रुतयोरावयोः पुत्रमानिनीषति आहर्तुमिच्छति ॥ ४९ ॥ विद्यां मनुष्यागम्यगमनसामर्थ्यकरीम् ॥ ५० ॥ नैर्ऋतीं निर्ऋतेर्विद्यमानां दिशम् । सौम्यां सोमस्य, वायव्यां वायोः, वारुणीं वरुणस्य ॥ ५१ ॥ अनिस्तीर्णप्रतिश्रुतः असाधितप्रतिज्ञः ॥ ५२ ॥

प्रत्युक्तः नेत्युक्तः । प्रतिषेधता निषेधं कुर्वता । कथं नेत्युक्त इति तत्राह– **दर्शय इति** । आत्मनैव स्वयमात्मानं मावधीर्मा हिंसीः सन्धिरार्षः ॥ ५३ ॥

एतेन पुत्रादानादिना त्वन्निमित्तेन मानुष्यं मनुष्यलोकस्था यथा स्यात् तथा । ईश्वरादपि महानुत्तमः ॥ ५४-५७ ॥

द्वारेण चक्रानुपथे यदूत्तमं परात्परं ज्योतिरनन्तपारम् ।
समश्नुवानं प्रसमीक्ष्य फाल्गुनः प्रदीपिताक्षः पिदधेऽक्षिणी उभे ॥ ५९ ॥
ततः प्रविष्टः सलिलं नभस्वता बलीयसैजद्बृहदूर्मिभीषणम् ।
तत्राद्भुतं वै भवनं द्युमत्तमं भ्राजन्मणिस्तम्भसहस्रशोभितम् ॥ ६० ॥
तस्मिन् महाभीममनन्तमद्भुतं सहस्रमूर्धन्यफणामणिद्युतिम् ।
विभ्राजमानं द्विगुणेक्षणोल्बणं सिताम्बराभं शितिकण्ठजिह्मगम्[१] ॥ ६१ ॥
ददर्श तद्भोगसुखासनं विभुं महानुभावं पुरुषोत्तमोत्तमम् ।
सान्द्राम्बुदाभं सुपिशङ्गवाससं प्रसन्नवक्त्रं रुचिरस्मितेक्षणम् ॥ ६२ ॥
महामणिव्रातकिरीटकुण्डलप्रभापरिष्वक्तसहस्रकुन्तलम् ।
प्रलम्बचार्वष्टभुजं सकौस्तुभं श्रीवत्सलक्ष्मं वनमालयाऽऽवृतम् ॥ ६३ ॥
सुनन्दनन्दप्रमुखैश्च पार्षदैश्चक्रादिभिर्मूर्तिधरैर्निजायुधैः ।
पुष्ट्या श्रिया कीर्त्यजयाऽखिलर्द्धिभिर्निषेव्यमाणं परमेष्ठिनां पतिम् ॥ ६४ ॥
ववन्द आत्मानमनन्तमच्युतो जिष्णुश्च तद्दर्शनजातसाध्वसः ।
स चाह भूमा परमेष्ठिनां प्रभुर्बद्धाञ्जलिं सस्मितपूर्वया गिरा ॥ ६५ ॥

---

गगनं छादयतीति गगनच्छदम् । गुणच्युतः मौर्व्या मुक्तः ॥ ५८ ॥

चक्रानुपथे सुदर्शनगतानुकूलमार्गे कृतद्वारेण समश्नुवानं गच्छन्तं यदूत्तमं प्रसमीक्ष्याक्षिणी पिदध इत्यन्वयः । अनन्तपारम् अन्तपारवर्जितम् ॥ ५९ ॥

ततः सलिलं प्रविश्य गतो भवनं ददर्शेत्यन्वयः । बलीयसा नभस्वता वायुना एजद्भिः कम्पमानैर्बृहद्भिरूर्मिभिस्तरङ्गैः भीषणम् । तत्र सलिले ॥ ६० ॥

तस्मिन् भवनेऽनन्तं ददर्श । सिताम्बराभं श्वेताकाशवत् शोभमानम् । शितिर्नीलः कण्ठो यस्य सः शितिकण्ठः । जिह्मगो नम्रगात्रस्तम् ॥ ६१ ॥

तस्यानन्तस्य भोगे सुखमासनं यस्य स तथा तद्भोगसुखासनस्तम् ॥ ६२,६३ ॥

परमेष्ठिनां ब्रह्मणां पतिम् ॥ ६४ ॥ अच्युतः कृष्णः, जिष्णुरर्जुनः ॥ ६५ ॥

---

१. शितिकण्ठजिह्मम् इति स.पाठः । शितयः कण्ठा जिह्वाश्च यस्य तम् । शितिकण्ठजिह्मगमिति पाठे शितिकण्ठश्चासौ जिह्मगः सर्पश्च तमिति -स.

द्विजात्मजास्ते युवयोर्दिदृक्षया मयोपनीता भुवि धर्मगुप्तये ।
कलावतीर्णोऽस्यवनेर्भरासुरान् हत्वेह भूयस्त्वरयैहि मेऽन्तिकम् ॥ ६६ ॥
पूर्णकामावपि युवां नरनारायणावृषी । धर्ममाचरतां स्थित्यै वृषभौ लोकसङ्ग्रहम् ॥ ६७ ॥
इत्यादिष्टौ भगवता तौ कृष्णौ परमेष्ठिना । ओमित्यानन्दभूमानमादाय द्विजदारकान् ॥ ६८ ॥
न्यवर्ततां स्वकं धाम सम्प्रहृष्टौ यथागतम् । विप्राय ददतुः पुत्रान् यथा रूपं प्रसूयताम् ॥ ६९ ॥
निशम्य[1] वैष्णवं धाम पार्थः परमविस्मितः । यत् किञ्चित् पौरुषं पुंसां मेने कृष्णानुकम्पितम् ॥
तथा प्रविश्य गोविन्दो यज्ञवाटं पुनः स्वयम् । पूर्णं पुरोहितैर्विप्रैर्ऋत्विग्भिः क्षत्रियर्षभैः ॥ ७१ ॥
प्रायश्चित्तं तु चलने दीक्षायां य उदाहृतः । तं चकार यथान्यायं ब्राह्मणैरनुमोदितः ॥ ७२ ॥
समाप्य यज्ञं विधिवत् तर्पयित्वाऽर्थिनो द्विजान् । ऋत्विग्भ्यः पूजयित्वाऽन्यान् ऋषींश्च कुरुसत्तम ॥
यमुनायां महानद्यां कृत्वाऽवभृतमज्जनम् । विजहार यथाकामं महर्षिभिर्यदूत्तमः[2] ॥ ७४ ॥

॥ इति शततमोऽध्यायः ॥

## ॥ अथ एकाधिकशततमोऽध्यायः ॥

श्रीशुक उवाच

उद्वापनस्नानहेतोर्यमुनातीरमागतम् । श्रुत्वा तूर्णं कलिङ्गेशो दन्तवक्रः सहानुजः ॥ १ ॥
महत्या सेनया युक्तो गजानीकसमन्वितः । गच्छन्तं द्वारकां कृष्णं पथि रोद्धुं समाययौ ॥ २ ॥
सोभ्येत्य पथि गच्छन्तं वृतं यदुकुमारकैः । कान्ताषोडशसाहस्रशिबिकापरिवारितम् ॥ ३ ॥

---

युवयोः कृष्णार्जुनयोः ॥ ६६ ॥ जगतः स्थित्यै लोकसङ्ग्रहं धर्मम् ॥ ६७ ॥ कृष्णौ यदूत्तमार्जुनौ । आनन्दभूमानं पूर्णानन्दम् ॥ ६८ ॥ प्रसूयतां प्रसवं गच्छतां रूपं यथा । प्रसूतिकाले यद्रूपं तादृशं रूपं दधानान् ॥ ६९ ॥ पुंसां यत् किञ्चित् पौरुषं कृष्णानुकम्पितं मेने ॥ ७०,७१ ॥ दीक्षायां मध्ये चलने तत उत्थाय गमने प्रायश्चित्तमुद्दिश्य यः कर्मविशेष उदाहृतस्तं चकार ॥ ७२ ॥ अवभृतनिमित्तमज्जनम् ॥ ७४ ॥

॥ इति श्रीमद्भागवतटीकायां विजयध्वजतीर्थकृतायां पदरत्नावल्यां दशमस्कन्धे उत्तरार्धे शततमोऽध्यायः ॥

---

१. निशम्य दृष्ट्वा -स.

२. वृत्तविच्छित्तिरत्र श्लोक एव नोत्तमश्लोक इति सूचयति यत्किञ्चिद्वृत्तव्यत्यासेनेति ज्ञेयम् -स.

**राजन्यसार्थानुगतं महर्षिगणसेवितम् । ऋत्विक्पुरोहिताचार्यब्राह्मणैश्च समन्वितम् ॥ ४ ॥**
**दन्तवक्त्रोऽरुणन्मूढो मृगेन्द्रं जम्बुको यथा । रुक्मिणः शिशुपालस्य पौण्ड्रकस्य च दुर्मतेः ॥ ५ ॥**
**परलोकगतानां च कुर्वन् पारोक्ष्यसौहृदम् । पदातिः पथि संरोद्धुं गदापाणिः प्रकम्पयन् ॥**
**पद्भ्यां महीं महाराज महासत्त्वो व्यदृश्यत ॥ ६ ॥**
**तं तथाऽयान्तमालोक्य गदामादाय सत्वरः । अवप्लुत्य रथात् कृष्णः सिन्धुं वेलेव प्रत्यगात् ॥७॥**
**गदामुद्यम्य कालिङ्गो मुकुन्दं प्राह दुर्मदः । दिष्ट्या कृष्ण भवानद्य मम दृष्टिपथं गतः ॥ ८ ॥**
**त्वामद्य द्वन्द्वयुद्धेन हनिष्याम्यविलम्बितम् । त्वं मातुलेयो नः कृष्ण मित्रध्रुक् पारदारिकः ॥**
**विश्वासघाती बन्धुघ्नः सततं कलहप्रियः ॥ ९ ॥**
**पौण्ड्रकं मातुलेयं मे सङ्ख्ये सूदितवानसि । रुक्मी च शिशुपालश्च भ्रातरौ मे त्वया हतौ ॥ १० ॥**
**अतस्त्वां गदया मन्द हनिष्ये वज्रकल्पया । तेनानृण्यमुपैम्यद्य मित्राणां मित्रवत्सलः ॥ ११ ॥**
**बन्धुरूपमरिं हत्वा व्याधिं देहचरं यथा । इति लोकप्रवादोऽस्ति तेन दोषोऽपि नास्ति मे ॥ १२ ॥**
**एवं रूक्षैश्च वचनैः कृष्णं तोत्रैरिव द्विपम् । गदयाऽताडयत् कृष्णं सिंहवद् व्यनदच्च सः ॥ १३ ॥**
**गदयाऽभिहतोऽप्याजौ न चचाल यदूत्तमः । गदया व्यहनद् गुर्व्या कौमोदक्या स्तनान्तरे ॥१४॥**
**गाढनिर्भिन्नहृदय उद्वमन् रुधिरं मुखात् । प्रसार्य केशबाह्वङ्घ्रिं गतासुर्व्यपतद् भुवि ॥ १५ ॥**
**ततः सूक्ष्मतरं ज्योतिः कृष्णमाविशदद्भुतम् । पश्यतां सर्वभूतानां यथा चैद्यस्य सङ्गरे ॥ १६ ॥**
**भ्रातरं निहतं दृष्ट्वा दन्तवक्त्रं विदूरथः । मूर्च्छितो भ्रातृशोकेनाप्यसिचर्म समाददे ॥ १७ ॥**
**सोऽवप्लुत्य रथात् तूर्णं विधुन्वन् खड्गमुत्तमम् । अभिदुद्राव गोविन्दं पद्भ्यामुर्वीं प्रकम्पयन् ॥१८॥**

---

हरेरवशिष्टभूभारदन्तवक्त्रविदूरथवधलक्षणं यच्चरितं तत् कथयत्यस्मिन्नध्याये । तत्र तद्घटनप्रकारमाह– उद्वापनेति । उद्वापनस्नानहेतोरवभृथस्नानहेतोः ॥ १-४ ॥ अरुणत् रुरोध । जम्बुकः शृगालः ॥ ५ ॥

पारोक्ष्यसौहृदं मृतिलक्षणाप्रत्यक्षत्वेऽपि बन्धुना यत् कर्तव्यं सौहृदं प्रेम तत् कुर्वन् कर्तृकामः । ताच्छीलिकशतृप्रत्ययः ॥ ६ ॥ वेला जलवृद्धिः सिंधुं नदीम् ॥ ७ ॥ कालिङ्गः कलिङ्गविषयनाथः ॥ ८ ॥ मातुलो वसुदेवस्तत्पुत्रः । पारदारिकः परस्त्रीरतिसमुत्सुकः ॥ ९ ॥

भ्रातरौ मातृसोदरीपुत्रत्वेन ॥ १० ॥ आनृण्यम् ऋणाभावम् ॥ ११ ॥

देहचरं देहगतम् ॥१२॥ रुक्षैर्वचनैः, व्यथयित्वेति शेषः ॥ १३-१५ ॥ दन्तवक्त्रगतासुरः कृष्णं ध्वान्तापरपर्यायं तमोऽविशत् । अन्यस्तु द्वारपालः कृष्णमुत्कृष्टानन्दरूपश्रीहरिम् ॥१६॥

तस्य बाणेन चिच्छेद खड्गं यादवनन्दनः । ततो जग्राह निशितां शक्तिं घोरां विदूरथः ॥ १९ ॥
तया प्रहर्तुं गोविन्दमभिनिश्चित्य सङ्गरे । क्षणेनाभिससाराङ्गश्चापमुक्तो यथा शरः ॥ २० ॥
तस्य चापततः कृष्णश्चक्रेण क्षुरनेमिना । शिरो जहार राजेन्द्र सकिरीटं सकुण्डलम् ॥ २१ ॥
एवं निहत्य समरे दन्तवक्त्रविदूरथौ । कालयामास तत्सैन्यं जगृहे वारणादिकम् ॥ २२ ॥
भूयः पुष्परथं दिव्यमारुह्य समलङ्कृतम् । सहितः सात्वतगणैरीडितः सुरमानवैः ॥ २३ ॥
मुनिभिः सिद्धगन्धर्वैर्विद्याधरमहोरगैः । अप्सरोभिः पितृगणैर्यक्षकिन्नरचारणैः ॥ २४ ॥
उपगीयमानविजयः कुसुमैरभिवर्षितः । वृतश्च वृष्णिप्रवरैर्विवेशालङ्कृतं पुरम् ॥ २५ ॥
एवं योगेश्वरः कृष्णो भगवान् देवकीसुतः । ईयते पशुदृष्टीनां जीयते जयतीति सः ॥ २६ ॥
तस्य कर्माण्युदाराणि पुण्यश्लोकस्य भारत । शक्यन्ते कथितुं नैव वर्षाणामयुतैरपि ॥ २७ ॥
एवमारभ्य राक्षस्याः पूतनायाः परन्तप । भूभारभूतानसुरान् जघान मधुसूदनः ॥ २८ ॥

॥ इति एकाधिकशततमोऽध्यायः ॥

---

## ॥ अथ व्यधिकशततमोऽध्यायः ॥

### श्रीशुक उवाच

सुखं स्वपुर्यां न्यवसद् द्वारकायां श्रियः पतिः । सर्वसम्पत्समृद्धायां जुष्टायां वृष्णिपुङ्गवैः ॥ १ ॥
स्त्रीभिश्चोत्तमवेषाभिर्नवयौवनकान्तिभिः । कन्दुकैर्हर्म्यसौधेषु क्रीडन्तीभिस्तडिद्द्युभिः ॥ २ ॥

---

असियुक्तं चर्म ॥ १७-२१ ॥ कालयामास द्रावयामास । वारणादिकमित्यत्र गजाश्वरथादिकं गृह्यते ॥ २२ ॥ पुष्परथं विवाहयोग्यरथम् ॥ २३-२५ ॥ पशुदृष्टीनामज्ञजनबुद्धीनां पक्षे जीयते जयतीति ईयते ज्ञायते ॥ २६ ॥

ब्रह्माद्यन्यतमेनापि तत्कर्म (कथन) समाप्तिं कर्तुं न शक्यते किं पुनर्मयेति भावेनाह– **तस्येति** ॥ २७ ॥ स्कन्धमारभ्य यद् दैत्यहननं तदादित उपसंहरति– **एवमिति** ॥ २८ ॥

॥ इति श्रीमद्भागवतटीकायां विजयध्वजतीर्थकृतायां पदरत्नावल्यां दशमस्कन्धे उत्तरार्धे एकाधिकशततमोऽध्यायः ॥

---

अनेनाध्यायद्वयेन (कृष्णस्य) गृहस्थधर्मानुकरणलक्षणं (माहात्म्यं) हरेः सन्निधानात् सर्वतीर्थोत्तमत्वं द्वारकायाश्च कथ्यते । तत्र प्रथमं द्वारकापुरं वर्णयति– **सुखमिति** ॥ १ ॥

नित्यं सङ्कुलमार्गायां मदच्युद्भिर्मतङ्गजैः । स्वलङ्कृतैर्भटैरश्वै रथैश्च कनकोज्ज्वलैः ॥ ३ ॥
उद्यानोपवनाढ्यायां पुष्पितद्रुमराजिषु । निर्विशद्भृङ्गविहगैर्नादितायां समन्ततः ॥ ४ ॥
रेमे षोडशसाहस्रपत्नीनामेकवल्लभः । तावन्ति बिभ्रद् रूपाणि तद्गेहेषु महर्द्धिषु ॥ ५ ॥
प्रोत्फुल्लोत्पलकल्हारकुमुदाम्भोजरेणुभिः । वासितामलतोयेषु कूजद्द्विजकुलादिभिः ॥ ६ ॥
विजहार विगाह्याम्भो ह्रादनीषु महोदयः । कुचकुङ्कुमलिप्ताङ्गः परिरब्धः स्वयोषिताम् ॥ ७ ॥
उपगीयमानो गन्धर्वैर्मृदङ्गपणवानकान् । वादयद्भिर्मुदा वीणाः सूतमागधबन्दिभिः ॥ ८ ॥
सेव्यमानोऽच्युतस्ताभिर्हसन्तीभिश्च रेचकैः । प्रतिषिञ्चन् विचिक्रीडे मुखरः शक्तिभिः स्वयम् ॥९॥

ताः क्लिन्नवस्त्रविवृतोरुकुचप्रदेशाः सिञ्चन्त्य उद्धृतबृहत्कबरप्रसूनाः ।
कान्तस्य चेतनजिहीर्षतयोपगूह्यजातस्मरोत्स्मयलसद्वदना विरेजुः ॥ १० ॥
कृष्णस्तु तत्स्तनविषज्जितकुङ्कुमस्रक्क्रीडातिसङ्गतसकुन्तलकुन्दगन्धः ।
सिञ्चन् मुहुर्युवतिभिः परिषिच्यमानो रेमे करेणुभिरिवेभपतिः परीतः ॥ ११ ॥
गृहेषु तासामनिवार्य ईश्वरो निरस्तसाम्यातिशयो व्यवस्थितः ।
रेमे रमाभिर्निजसौख्यसम्प्लुतो यथेतरो गार्हकमेधिकांश्चरन् ॥ १२ ॥

---

हर्म्येषु धनिनां योग्येषु समुन्नतगृहेषु । सौधेषु सुधाधवलितोत्तमेषु गृहेषु ॥ २,३ ॥ निर्विशद्भिर्मिथ उपयुञ्जानैर्भृङ्गविहङ्गैर्नादितायां घोषवत्कृतायाम् ॥ ४,५ ॥ वासितामलतोयेषु परिमलीकृतजलेषु ॥ ६ ॥ ह्रादिनीषु नदीषु । स्वयोषितामिति षष्ठी तृतीयार्थे ॥ ७ ॥ वीणा इति द्वितीया ॥ ८ ॥ रेचकैर्जलप्रक्षेपण्चर्मपात्रैः । शक्तिभिः भार्यादिभिः सह ॥ ९ ॥

क्लिन्नान्यार्द्राणि वस्त्राणि यासां ताः । विवृता ऊरुप्रदेशा कुचप्रदेशाश्च यासां ताः । बृहन्ति कबराणि बृहत्कबराणि । उद्धृतानि उन्मुक्तानि बृहत्कबरपूरितप्रसूनानि यासां ताः । कान्तस्य कमनीयस्य कृष्णस्य चेतनजिहीर्षया चित्तवशीकरणेच्छया उपगूह्येनोपगूहनक्रियया जातेनाविर्भूतेन स्मरोत्स्मयेनोत्कृष्टेन मन्दस्मितेन लसन्ति वदनानि यासां ताः ॥ १० ॥

तासां स्तनेभ्यो विषज्जितानि सङ्क्रान्तानि कुङ्कुमानि तत्स्तनविषज्जितकुङ्कुमानि तैर्मिश्रा स्रग् यस्य स तथा । कुन्तलैः सह वर्तमानः सकुन्तलः । क्रीडायामतिसङ्गतश्चायं सकुन्तलश्च कुन्दगन्धश्च तथा कुन्दपुष्पवद् गन्धो यस्य स तथा । सिञ्चन्, जलमिति शेषः ॥ ११ ॥

अनिवार्य इत्यस्य विवरणमीश्वर इति । रमाभी रामाभिर्लक्ष्मीसन्निधानयुक्ताभिर्वा । निजसौख्यसम्प्लुतः स्वरूपानन्दसमुद्रमग्नः । गार्हकमेधिकान् गृहस्थाश्रमयोग्यधर्मान् चरन् कुर्वन् ॥ १२ ॥

इत्थं रमापतिमवाप्य पतिं स्त्रियस्ता ब्रह्मादयोऽपि पदवीं न विदुर्यदीयाम् ।
भेजुर्मुदाऽविरतमेधितयानुरागहासावलोकनवसङ्गमलज्जयैव ॥ १३ ॥

॥ इति त्र्यधिकशततमोऽध्यायः ॥

## ॥ अथ त्र्यधिकशततमोऽध्यायः ॥

श्रीशुक उवाच

एवं वेदोदितं धर्ममनुतिष्ठन् सतां पतिः । गृहे धर्मार्थकामानां मुहुः सन्दर्शयन् पदम् ॥ १ ॥
एवं शासति भूचक्रं चक्रपाणौ जनार्दने । द्वारका वृष्णिनिलया योजनद्वादशायता ॥ २ ॥
मुनिभिर्ब्राह्मणैश्चैव क्षत्रियैश्चापि बन्दिभिः । आसीत् पूर्णा कुरुश्रेष्ठ सततं समलङ्कृता ॥ ३ ॥
पिण्डारकात् कुरुक्षेत्रात् सालग्रामाच्च पुष्करात् । वाराणस्याः प्रयागाच्च वेङ्कटाच्छ्रीगिरेरपि ॥ ४ ॥
स्थानन्दूराच्च गोकर्णाच्चन्द्रतीर्थाच्च शोभनात् । सह्याद्रेश्च भृगुक्षेत्रात् कुमारनिलयादपि ॥ ५ ॥
गोदावरीतटात् पुण्यान्नर्मदानिकटादपि । शूर्पाकारात् प्रभासाच्च पुण्याद् बदरिकाश्रमात् ॥ ६ ॥
पावनान्नैमिषारण्याद् ब्रह्मदुर्गाच्च दुर्गमात् । आययुर्मुनयः शान्ता नित्यव्रतपरायणाः ॥ ७ ॥
अब्भक्षा वायुभक्षाश्च निराहारा दृढव्रताः । वल्कलाजिनसंवीता जटिनश्चापि मुण्डिनः ॥ ८ ॥
त्रिकालस्नायिनश्चैव मौनव्रतपरायणाः । वेदस्वाध्यायनिरताः स्तुतिस्तोत्रपरायणाः ॥ ९ ॥

---

नवसङ्गमे या लज्जा सैव स्थिता तया अनुरागादियुक्तया ॥ १३ ॥

॥ इति श्रीमद्भागवतटीकायां विजयध्वजतीर्थकृतायां पदरत्नावल्यां दशमस्कन्धे उत्तरार्धे त्र्यधिकशततमोऽध्यायः ॥

धर्मार्थकामानां पदं विषयं सन्दर्शयन् त्रिवर्गानामाश्रयो गृहस्थ इति सम्यग् दर्शयन्, द्वारकामावसति, श्रीकृष्ण इति शेषः ॥ १ ॥

ततः परं किमत्रेत्याह– **एवमिति** । भूचक्रं भूमण्डलम् । द्वारका मुन्यादिभिः पूर्णा निबिडा आसीदित्यन्वयः ॥ २,३ ॥

पिण्डारकादितीर्थक्षेत्रेभ्यो द्वारकोत्तमतीर्थमित्याह– **पिण्डारकादित्यादिना** ॥ ४ ॥ कुमार-निलयात् कुमारपर्वतात् ॥ ५,६ ॥ द्वारकामिति शेषः ॥ ७,८ ॥

स्तुतिस्तोत्रपरायणाः स्तुतिरप्रबन्धरूपा स्तोत्रं प्रबन्धरूपं तज्जपैकपरायणाः ॥ ९ ॥

ध्यानैकतानमनसः समाधौ कृतनिश्चयाः । त्वगस्थिमात्रावयवाः शिराधमनिसन्तताः ॥ १० ॥
आगत्य मुनयो राजन् सर्वतः शान्तचेतसः । उपासत महाराज नित्यं तत्त्वैकचिन्तकाः ॥ ११ ॥
क्षत्रियैश्च महावीर्यैर्ब्राह्मणैश्च तपोधनैः । सूतैश्च मागधैश्चैव श्लोकस्तुतिपरायणैः ॥ १२ ॥
पूर्णमङ्गलघोषैश्च वादित्राणां च निःस्वनैः । निर्घुष्टा ब्रह्मघोषैश्च द्वारका कुरुनन्दन ॥ १३ ॥
क्षेत्राणामपि सर्वेषां तीर्थानां चाघहारिणाम् । देवदेवस्य सान्निध्यादग्रण्या च बभूव सा ॥ १४ ॥
आस्थितस्य परं धर्मं कृष्णस्य गृहमेधिनः । आसन् षोडशसाहस्रमहिष्यस्तु शताधिकाः ॥ १५ ॥
तासां स्त्रीरत्नभूतानामष्टौ याः प्रागुदाहृताः । रुक्मिणीप्रमुखा राजन् तत्पुत्राश्चानुपूर्वशः ॥ १६ ॥
एकैकस्यां दशदश कृष्णोऽजीजनदात्मवान् । यावत्य आत्मनो भार्यास्त्वमोधगतिरीश्वरः ॥१७॥
तेषामुद्दामवीर्याणामष्टादश महारथाः । आसन्नुदारयशसस्तेषां नामानि मे शृणु ॥ १८ ॥
प्रद्युम्नश्चारुदेष्णश्च दीप्तिमान् भानुरेव च । साम्बो मित्रो बृहद्भानुर्भानुविन्दो वृकोऽरुणः ॥१९॥
पुष्करो देवबाहुश्च चक्रदेवः सुनन्दनः । चित्रभानुर्वरूथश्च कविर्न्यग्रोध एव च ॥ २० ॥
त्रिवक्राया विशोकश्च पुत्रः कृष्णमनुव्रतः । आसीच्छिष्यो नारदस्य ददौ चित्तमखण्डितम् ॥२१॥
येनोक्तं सात्वतं तन्त्रं यज्ज्ञात्वा मूर्तिमान् भवेत् । यत्र स्त्रीशूद्रदाशानां संस्कारो वैष्णवः स्मृतः ॥
एतेषामपि राजेन्द्र तनुजानां मधुद्विषः । प्रद्युम्न आसीत् प्रथमः पितृवद् रुक्मिणीसुतः ॥ २३ ॥
स रुक्मिणो दुहितरमुपयेमे महारथः । तस्यां ततोऽनिरुद्धोऽभून्नागायुतबलान्वितः ॥ २४ ॥

---

ध्यानैकतानमनसः श्रीहरिगुणगणसञ्चिन्तनायामेव विस्तृतमनसः । समाधौ चित्तनिग्रहे कृतनिश्चयाः समीचीनाधिष्ठानलक्षणमुक्तौ वा । शिरा रेखाः ॥ १० ॥

सर्वत आगत्य ॥ ११-१३ ॥ अग्रण्या, अग्रण्येति छान्दसः, उत्तमोत्तमाश्रया ॥ १४ ॥ कृष्णस्य षोडशसाहस्रमहिष्यः ॥ १५ ॥ तासां मध्ये या रुक्मिणी प्रमुखा अष्टौ महिष्यः प्रागुक्ता अनुपूर्वशस्तत्पुत्राश्चोक्ताः ॥ १६ ॥ आत्मनो यावत्यो भार्यास्तास्वेकस्यामेकस्यां भार्यायां दशदशात्मजानजीजनत् ॥ १७ ॥

तेषां पुत्राणां मध्ये अष्टादश महारथा आसन् ॥ १८-२० ॥ त्रिवक्रायाः सैरन्ध्र्याः । स नारदस्तस्मै स्वशिष्याय अखण्डितं चित्तं पूर्वापरानुभवस्मरणसमर्थं ज्ञानं ददौ ॥ २१ ॥

येन नारदेन सात्वतं तन्त्रं पञ्चरात्रसंहिता यद् यं ज्ञात्वा पुमान् मूर्तिमान् निजरूपाभिव्यक्तिमान् भवेत् यत्र यस्मिन् तन्त्रे स्त्रीशूद्रादीनां वैष्णवः संस्कारः स्मृतः विष्णुविषयानुष्ठानेन शरीरशुद्धिः कथिता ॥ २२ ॥ तनुजानां पुत्राणाम् ॥ २३,२४ ॥

स चापि रुक्मिणः पौत्रीं दौहित्रो जगृहे ततः । वज्रस्तस्यामभूद् यस्तु मौसलादवशेषितः ॥२५॥
प्रतिबाहुरभूत् तस्मात् सुबाहुस्तस्य चात्मजः । सुबाहोरुग्रसेनोऽभूच्छतसेनस्तु तत्सुतः ॥ २६ ॥
न ह्येतस्मिन् कुले जाता अधना अबहुप्रजाः । अल्पायुषोऽल्पवीर्याश्च अब्रह्मण्याश्च जज्ञिरे ॥२७॥
यदुवंशे प्रसूतानां पुंसां विख्यातकर्मणाम् । सङ्ख्या न शक्यते कर्तुमपि वर्षायुतैर्नृप ॥ २८ ॥
तिस्रः कोट्यः सहस्राणामष्टाशीतिशतानि च । आसन् यदुकुमाराणामाचार्या इति नः श्रुतम् ॥२९॥
सङ्ख्यानं यादवानां कः करिष्यति महात्मनाम् । यत्रायुतानामयुतं रक्षन्नास्ते स आहुकः ॥ ३० ॥
देवासुराहवहता ये दैतेयाः सुदारुणाः । ते चोत्पन्ना मनुष्येषु प्रजा दृप्ता बबाधिरे ॥ ३१ ॥
तन्निग्रहाय हरिणा प्रोक्ता देवा यदोः कुले । अवतीर्णाः कुलशतं येषामेकाधिकं नृप ॥ ३२ ॥
तेषां प्रमाणं भगवान् प्रभुत्वे चाभवद् हरिः । ये चानुवर्तिनस्तस्य ववृधुः सर्वयादवाः ॥ ३३ ॥
शय्यासनाटनालापक्रीडास्नानाशनादिषु । न विदुः सन्तमात्मानं वृष्णयः कृष्णचेतसः ॥ ३४ ॥

---

पौत्रीं पुत्रपुत्रीम् । दौहित्रः दुहितुः पुत्रोऽनिरुद्धः । 'निहते रुक्मिणि श्याले नाब्रवीत् साध्वसाधु वा । रुक्मिणीबलयो राजन् स्नेहभङ्गभयाद् हरिः' इत्यनेन सर्वसमस्य हरेः स्नेहभङ्गभयमुच्यते तत् कथं घटत इतीयमाशङ्का 'न स्नेहभङ्गो देव्यास्तु न भयं केशवस्य च । स्नेहभीत इवाथापि नोचे रुक्मिवधे हरिः' इत्यादिना परिहर्तव्या । अत्र श्रीमद्भगवत्पादैः सिंहावलोकनन्यायेनाध्यायेयत्तासूचनाय चेदं प्रमाणमुक्तम् । मौसलान्मुसलयुद्धात् ॥ २५,२६ ॥

एतस्मिन् कुले अधनादिदोषयुक्ता न जज्ञिर इत्यन्वयः ॥ २७ ॥

तेषां यदुवंशप्रसूतानाम् ॥ २८ ॥ संख्याज्ञानाभावेऽपि तदाचार्याणां संख्यां कामपि श्रावयामीत्याह– **तिस्र इति** ॥ २९ ॥ यत्र येषाम् ॥ ३० ॥

देवांशानां यादवानामवन्यामुत्पत्तौ निमित्तमाह– **देवेति** ॥ ३१ ॥ यादवा देवा इत्यत्र किं प्रमाणम्? अत्राह– **कुलशतमिति** ॥ ३२ ॥

कृष्णो भगवान् तेषां प्रभुत्वे सामर्थ्ये दैवे प्रमाणम् । यतः श्रीकृष्णो नारायणावतारः प्रसिद्धस्तेषाममानुषसामर्थ्ये हेतुश्च ततो यादवा देवा इति सिद्धम् । एतदेव दृढीकरणाय पुनर्वक्ति– **येचेति** ॥ ३३ ॥

स्वामिनं न विदुः शय्यादिषु सन्तं सहवर्तमानमात्मानं स्वरूपभूतं श्रीनारायणम्[1] ॥ ३४ ॥

---

१. कृष्णचेतसो वृष्णयः शय्यादिषु सह सन्तमात्मानं स्वामिनमन्तर्यामिणं न श्रीहरिमिव विदुः ज्ञातवन्तः । न विदुरित्यर्थस्तु तन्माहात्म्यप्रस्तावाननुगुण इत्युपेक्ष्यः । शय्यादिषु सन्तमात्मानं स्वं कृष्णचेतसो वृष्णयो न विदुरिति वा स्वात्मकं न विदुरिति वा -स.

**ईजे क्रतुभिरात्मानं सर्ववेदार्थसङ्ग्रहम् । स्वयोगमायारचितैः कुरुक्षेत्रे द्विषट्समाः ॥ ३५ ॥**
**कृष्णगाध्यसितावन्तिरामाचार्योद्धवेश्वरः । दीक्षितोऽग्रण्यपत्नीभिः पुण्यश्लोकः सहाग्रणीः ॥३६॥**
**तीर्थं चक्रे नृणां यो यदजनि यदुषु स्वःसरित् पादशौचं षड्भिश्चाप्तं स्वरूपं पर उरसि रमा सर्वदा यस्य चास्ते । यच्छास्त्रं च प्रमाणं यदनु च सदसद्व्यक्तयो यत्र धर्माः कृष्णस्यैतन्न चित्रं क्षितिभरहरणं कालचक्रायुधस्य ॥ ३७ ॥**

**जयति जननिवासो देवकीजन्मवादो नियमकृतपदाब्जैर्दस्युपीडां स्वदोर्भिः ।**
**मुदमुभयदृशीनां श्रीनिकेतात्ममूर्त्या स्मरवपुरबलानां स्निग्धहासेक्षया च ॥ ३८ ॥**

---

सर्ववेदार्थत्वेन सर्ववेदविषयत्वेन सम्यग् ग्रहो ग्रहणं यस्य स तथा तम् । स्वयोगमायया स्वरूपसामर्थ्येन रचितैरुत्पादितैः ॥ ३५ ॥

कृष्णो वेदव्यासः, गाधिर्विश्वामित्रः, आवन्तिः सान्दीपनिः, रामः परशुरामः, एते आचार्या यस्य कृष्णस्य सः । उद्धवस्येश्वर उद्धवेश्वरः । कृष्णगाध्यसितावन्तिरामाचार्यश्चासावुद्धवेश्वरश्च तथा । अग्रण्यपत्नीभिः रुक्मिण्यादिश्रेष्ठपत्नीभिः सह सन्दीक्षितः । अग्रणीः सर्वोत्तमः ॥ ३६ ॥

श्रीकृष्णस्मरणार्थं संक्षिप्य तद्गुणान् कथयति– **तीर्थमिति** । तीर्थं कीर्तिलक्षणं नृणां चक्रे । यद् यो यदुष्वजनि प्रादुर्भूतः । यस्य पादशौचं पादप्रक्षालनजलं स्वःसरित् स्वर्गनदी गङ्गाऽभूत् । यस्य स्वरूपमैश्वर्यादि षड्गुणैराप्तं पूर्णम् । यस्योरसि वक्षस उपरि रमा सर्वदाऽऽस्ते । यस्य शास्त्रं शासकं वचनं तत् प्रमाणम्, लोकस्येति शेषः । यच्छास्त्रं वेदादिशास्त्रं तत् प्रमाणमिति वा । सदसद्व्यक्तयः कार्यकारणव्यक्तयो यदनु यस्यानन्तरं विद्यमानाः, यदनुकूलत्वेन सत्तासम्बन्धिन्यः । धर्मा यत्र यद्विषयत्वेन वर्तन्ते, तस्य कृष्णस्यैतत् क्षितिभारहरणं न चित्रम् । किन्त्वस्माकमेव । हेत्वन्तरमाह– **कालेति** ॥ ३७ ॥

देवकीजन्मवादः देवकीपुत्रत्वेन वादः कीर्तिर्यस्य स तथा सः । जननिवासो जगन्निवासो जयति । कथम्? अत्राह– **नियमेति** । भूभारक्षपणार्थं नियमेन भूमौ कृतानि पदाब्जानि पादन्यासपद्मानि यानि तैः स्वदोर्भिश्च दस्युपीडाम् कुर्वन्निति शेषः । उभयदृशीनाम् अन्तर्बहिःस्थितस्वरूपस्य दृशिर्दर्शनं येषां तेषां मुदं कुर्वन् । अबलानां स्त्रीणां श्रीनिकेतात्ममूर्त्या लक्ष्मीमन्दिरात्मस्वरूपेण स्निग्धहासेक्षया स्निग्धमन्दस्मितशोभितरूपकटाक्षनिरीक्षणेन च स्मरवपुः काममूर्तिरिव स्थितः ॥ ३८ ॥

यो ह्यात्मा जगदादिमध्यनिधनो योऽव्यक्तजीवेश्वरो यः सृष्ट्वेदमनुप्रविष्ट ऋषिणा चक्रे पुनः संहिताम्।
यं सम्पद्य जहात्यजामनुशयी सुप्तः कुलायं यथा तं कैवल्यनिरस्तयोनिमभयं ध्यायेदजस्रं हरिम्॥
इत्थं परस्य निजधर्मरिरक्षयात्तलीलातनोस्तदनुरूपविडम्बनानि।
कर्माणि कर्मकषणानि यदूत्तमस्य गायेदमुष्य पदयोरनुवृत्तिमिच्छन्॥ ४० ॥
मर्त्यस्तयाऽनुसवमेधितयाऽनुवृत्त्या श्रीमत्कथाश्रवणकीर्तनचिन्तयैति।
तद्धाम दुष्करकृतं जनतापवर्गं ग्रामाद् वनं क्षितिभुजोऽपि ययुर्यदर्थे॥ ४१ ॥

सूत उवाच

य इदमनुशृणोति श्रावयेद्वा मुरारेश्चरितममृतकीर्तेर्वर्णितं व्यासपुत्रैः।
जगदघभिदलं तद्भक्तकर्णावतंसं भगवति कृतचित्तो याति तत्क्षेमधाम॥ ४२ ॥

॥ इति त्र्यधिकशततमोऽध्यायः ॥

॥ समाप्तश्चायं स्कन्धः ॥

---

जगत आदौ मध्ये निधने च वर्तत इति जगदादिमध्यनिधनो जगदुत्पत्तिस्थितिसंहारकर्ता। अव्यक्तजीवयोरीश्वरः। ऋषिणा व्यासात्मना भागवतीं संहिताम्। अनुशयी जीवो यं सम्पद्य प्राप्य अजां बन्धकशक्तिं जहाति। सता सौम्य तदा सम्पन्नो भवतीति श्रुतेः। सुप्तः परमात्मानं प्राज्ञं प्राप्तो यथा कुलायं शरीराभिमानं त्यक्त्वा आस्ते। तथा कैवल्येन सच्चिदानन्दस्वरूपस्थित्या निरस्तयोनिं नित्यनिरस्तप्रकृतिम्॥ ३९ ॥

इत्थम् एवंविधस्य यदूत्तमस्य कर्माणि विक्रमलक्षणानि गायेदित्यन्वयः। निजधर्मरिरक्षया स्वकल्पितधर्मरक्षणेच्छया। तस्यानुकूलविडम्बनानि कर्मकषणानि दुष्कर्मनिराकरणसमर्थानि। अनुवृत्तिमनुगमनमिच्छन्॥ ४० ॥

मर्त्यस्तयाऽनुवृत्त्या तस्य हरेर्धाम लोकमेति। कीदृश्या? श्रीमत्याः कथायाः श्रवणकीर्तनचिन्तनलक्षणया। दुष्करेण तपसा कृतं साधितम्। जनतायाः क्रियासाध्यफलरूपं जनतापवर्गम्। यस्य हरेर्धामार्थे क्षितिभुजोऽपि ग्रामाद् वनं ग्रामं विहाय वनं ययुर्यान्ति। किं पुनरन्य इति॥ ४१ ॥

स्कन्धार्थमुपसंहरति– **य इदमिति** । व्यासपुत्रैः शुकादिभिः । जगतोऽघं पापं भिनत्तीति जगदघभित् । तद्भक्तानां कर्णावतंसं कर्णालङ्कारायमाणम् । श्रवणादिफलमाह– **भगवतीति** । क्षेमधाम मोक्षलक्षणं स्थानम् । श्रवणादि कुर्वता इत्थंभाव्यमित्यत उक्तम्– **भगवतीति** । 'सर्वोत्तमोऽपि भगवान् गुणभावं जनार्दनः । दर्शयेद् वासुदेवोऽपि ह्यात्मनो जीवतामपि । अज्ञाशक्तादिभावस्तु कुत एवाखिलेशितुः । कुतश्च जीवता तस्य प्रधानपुरुषेशितुः । कुतो दोषाः सर्वगुणपूर्णस्यानन्दवारिधेः' इत्येतत् प्रमाणम् अज्ञजनेन क्रियमाणसर्वशङ्कानिराकरणार्थं भगवत्पादैः स्कन्धान्ते दर्शितमिति ज्ञातव्यमिति ॥ ४२ ॥

योऽयाचि त्रिदशैः कुभारहृतयेऽवातारि येन क्षितौ
जघ्ने येन सुरासुहृत्समुदयो येन त्रिलोक्यापि सा ।
येनाधायि युधिष्ठिरो निजपदे धर्मोऽपि येनाङ्कुरि
श्रीकृष्णं तमकृष्णकृष्णदयितं वन्दामहे सन्ततम् ॥ १ ॥

पदरत्नावलिर्नाम दशमस्कन्धसङ्गता । कृष्णप्रीत्या समाप्तेयं विद्वन्मानसहर्षिणी ॥ २ ॥

॥ इति श्रीमद्भागवतटीकायां विजयध्वजतीर्थकृतायां पदरत्नावल्यां दशमस्कन्धे उत्तरार्धे त्र्यधिकशततमोऽध्यायः ॥

**॥ समाप्तश्चायं स्कन्धः ॥**

**॥ श्रीकृष्णार्पणमस्तु ॥**